# वेदमूर्त्ति-श्रीरामकृष्णः

( स्तोत्रोपदेशद्विशती-समेतं श्रीरामकृष्णसारदादेवीचरितम् )

स्वामी अपूर्वानन्दः




स्वामिविवेकानन्दजन्मशतीजयन्तीप्रकाशनम्

१९६३

# प्रकाशकस्य निवेदनम्

संस्कृतभाषायां स्वामि-विवेकानन्दस्य सुगभीरा श्रद्धा प्रीतिश्चास्ताम्। स संस्कृतशिक्षायां, तस्य बहुलप्रचारेषु च सविशेषं गुरुत्वं समारोपितवान्। यतः संस्कृतशास्त्रेष्वेव वैदिकधर्मनिचयः संस्कृतस्य च मूलीभूतं सत्यं निहितमस्ति। एवमस्माकं मौलिकधर्मग्रन्थाश्च संस्कृतभाषया एव विरचिताः। संस्कृतभाषाया उच्चारणादेव हिन्दुजातीयेषु अनिर्वचनीयं गौरवं काचित् प्रकाशयन्ती सात्त्विकी शक्तिरपि नरीनृत्यते। स्त्रीषु निम्नस्तरीयेषु मानवेष्वपि संस्कृतशिक्षाविस्तारस्य उपदेशः स्वामिमहोदयेन प्रकटीकृतः।

वयं स्वामि-महोदयस्य शत-वार्षिक-जन्ममहोत्सवमुपलक्ष्य "स्वामि-विवेकानन्द-शतवर्ष-जयन्ती-प्रकाशनम्" इति रूपेण तदीयश्रीगुरुदेव-युगावतारस्य श्रीभगवतो श्रीश्रीरामकृष्णदेवस्य श्रीश्रीसारदादेव्याश्च जीवनीं, वाणीं, तयोः सम्बन्धे रचितानि कानिचित् स्तोत्राणि च वेदमूर्त्तेः श्रीश्रीरामकृष्णस्य नाम्ना संस्कृतभाषया एव विरचय्य पुस्तकाकारेण प्रकाशितानि विधाय स्वात्मानमेव सविशेषगौरवान्वितं मन्यामहे। एवं स्वामिमहोदयस्य प्रियं कार्यं संसाध्य तत्प्रदर्शितपथेन गन्तुं समर्था अभूम इति आत्मानं धन्यान् मन्यामहे।

"वेदमूर्त्तिश्रीरामकृष्णः" इत्ययं ग्रन्थो लेखकस्य मूलीभूतवंग-भाषा-रचितपुस्तकस्य संस्कृतानुवादः। ग्रन्थमिमं काशीनिवासी पण्डितप्रवरः श्रीमद्गोपालचन्द्रचक्रवर्त्ती वेदान्तशास्त्री संस्कृतभाषया अनूदितवान्

पांडुलिपिं च समशोधयत् अध्यापकः पण्डितवरः श्री टी० ए० भण्डार-करः साहित्याचार्यः। वाराणसी-हिन्दू-विश्वविद्यालयस्य संस्कृत-पालि-विभागस्य प्रधानाध्यक्ष डा० श्रीसिद्धेश्वरभट्टाचार्यः एम० ए०, डि० लिट् काव्यतीर्थो न्यायाचार्यश्च प्राप्तसुवर्णपदकः ग्रन्थस्यास्य सम्पादन-भारं कृपया गृहीतवान्। अस्य च ग्रन्थस्य प्रणयने प्रकाशने च एव-मन्येषां केषांचन सकाशात् प्रचुरं साहाय्यमवाप्तम्। एतान् सर्वानेव प्रति वयमस्माकं सान्तरं धन्यवादं निवेदयामः। आशास्महे वयं यत् संस्कृतभाषा-विद्वद्भिरेव "वेदमूर्त्तिश्रीरामकृष्णो" ग्रन्थः समादृतो भविता। विशेषसावधानतासत्त्वेऽपि केचन मुद्रणप्रमादा अभवन्नेव। तदर्थं वयमत्यन्तदुःखिताः।

**स्वामी सम्बुद्धानन्दः**

साधारणसम्पादकः—स्वामिविवेकानन्दशतवार्षिकी,

बेलुड़मठः, कलकत्ता।

# सूचना

भारते तथा सम्पूर्णे विश्वस्मिंश्च अध्यात्मचिन्तायां तदाचरणविषये च विपुलामेव शक्तिमनुप्रवेशयितुं युगेऽस्मिन् श्रीश्रीरामकृष्णदेवः श्रीश्रीमाता सारदादेवी च आविरभवताम्। श्रीश्रीरामकृष्णदेवस्तु उद्वेलैश्वरप्रेम्णः, त्यागस्य, सेवाधर्म्मस्य, सर्वधर्मसमन्वयस्य च जीवन्तीं मूर्त्तिमादाय जगति समागतवान्। एषैव तस्य अभयवाणी उद्घोषिता जाता, यत् "यस्येदमन्तिमं जन्म, तेनात्र (श्रीरामकृष्णभाव-ग्रहणे) नूनमेवागन्तव्यम्" अर्थात् श्रीरामकृष्णस्य जीवनादर्शेन नूनमेव समाकृष्टैः सर्वैः भवितव्यम्।

युगावतारस्य लीलासङ्गिनी श्रीमाता सारदादेवी च जगद्वासिभिः विगलित-करुणा-मूर्त्तिरूपेण भक्तिमुक्तिदायिमातृरूपेण च समधिगता। श्रीमातुराश्वासवाणीयं यत्, "येषां भारो मया गृहीतः, तेषामेकस्यापि यावदवशेषः स्थास्यति, तावन्मम अवकाशः कुत्र ?"

श्रीरामकृष्णदेवः कदाचिदेकान्ते श्रीमातरमवदत्—"इतः परं प्रतिगृहं मम पूजा भविष्यति" इति।

उपरिष्टात् लिखितां घोषणावलीं समर्थ्य इव स्वामि-विवेकानन्दोऽपि कदाचन भावदशायां भविष्यद्वाणीमकथयत्, यत्, "अस्यैव युगधर्मस्य अग्रगतिः निर्बाधं चलिष्यति सप्ताष्टशतवर्षाणि यावत्। केवलमधुनास्य प्रारम्भ एव"। श्रीरामकृष्णदेवः श्रीजननी सारदादेवी च अन्योन्यभावेन युगधर्मं स्थापयितुं संरक्षितुं परिवर्धयितुं च अवतीर्णौ जातौ। एतदेव स्वामि-महोदयस्योक्तेः सारार्थभूतम्। अनुदिनमेव सा मर्मवाणी च विश्ववासिभिः सुस्पष्टं हृदयेनावधारिता क्रियते।

अनेकेषामीश्वरानुरागिभक्तसुधियां विशेषसमुत्साहेन श्रीश्रीठाकुरस्य श्रीश्रीमातुश्च युग्मजीवनीयं प्रणीता। धर्मस्य दर्शनस्य च तात्त्विकी आलोचना अस्य ग्रन्थस्य सीमाबहिर्भूतैव, अतः तयोः जीवनस्यासामान्यं किंचित् किंचित् वृत्तमेव समुल्लिख्य चित्ररूपेण सन्निवेश्य वयं विरताः। इदमेव जीवनचित्रं वस्तुतः कस्यापि मनसि अङ्कितं भविष्यति न वैतद् जानाति केवलमन्तर्यामी।

"श्रीश्रीरामकृष्णलीलाप्रसंगात्", "श्रीश्रीरामकृष्णकथामृतात्", "श्रीश्रीरामकृष्णपुँथी"-पुस्तकात्, "मातुः कथा"-नाम पुस्तकाच्च प्रायशोऽस्य ग्रन्थस्य सर्वमेवोपादानं संगृहीतम्। उद्धृतांशोऽपि तेभ्य एव ग्रन्थेभ्यः। एतद्व्यतिरिक्तं श्रीश्रीरामकृष्णजीवनविभिन्नांशस्य वैशिष्ट्य-समर्थक-विभिन्न-शास्त्र-ग्रन्थानां साहाय्यमपि गृहीतम्। ग्रन्थस्यास्योत्त-रांशे श्रीरामकृष्णसारदादेवी-स्तोत्राणि समावेशितानि। प्रत्येकस्तोत्र-स्याधोभागे लेखकस्य नामाप्युल्लिखितम्। तेषां कृतेऽस्माभिः धन्यवादा विज्ञापिताः। कलिकत्ता-श्रीरामकृष्णवेदान्तमठस्य कर्तृपक्षस्य विशेषा-नुमतिक्रमेण स्वामिश्रीमदभेदानन्दविरचितं "जगद्गुरुश्रीरामकृष्ण-स्तोत्रम्" "श्रीरामकृष्णाष्टकम्" "श्रीमत्याः सारदादेव्याः स्तोत्रम्" इति स्तोत्रत्रयमत्र संयोजितम्। तस्य वेदान्तमठस्याधिकारिण उद्दिश्य धन्यवादाः विज्ञापिताः। "श्रीरामकृष्णोपदेशद्विशती"-नामकान्ति-माध्यायो ग्रन्थस्यास्योपयोगितां वर्धयिष्यति।

साधारणचेष्टायामस्यां ये खलु साहाय्यं कृतवन्तः तान् सर्वानेव प्रति हार्दिकान् धन्यवादान् विज्ञापयामः। श्रीरामकृष्णस्य श्रीश्रीमातु-श्चेद् जीवनालेख्यं यदि कस्यापि मनसि अङ्कितं स्यात् एवं इतोऽधिकं ज्ञातुमुत्सहते कश्चित् तदा आत्मानं धन्यं मन्ये। इति

विनीतः

स्वामी अपूर्वानन्दः

# विषय-सूची



—:*०*:—

## शान्तिमन्त्राः

ॐ सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै, तेजस्विनावधीतमस्तु, मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥१॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा, भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

ॐ शान्तिः शान्तिः शान्तिः ॥२॥

ॐ आप्यायन्तु ममांगानि, वाक् प्राणश्चक्षुः श्रोत्रमथ
बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मोपनिषदम् ॥
माहं ब्रह्म निराकुर्यां, मा मा ब्रह्म निराकरोद्
अनिराकरणमस्तु, अनिराकरणं मेऽस्तु।
तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु।
ते मयि सन्तु।

ॐ शान्तिः शान्तिः शान्तिः ॥३॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ।४।

---

# वेदमूर्तिश्रीरामकृष्णः

## प्राग्वाणी

जगद्भासको दिवाकरः सूर्यदेवः पूर्वाकाशे समुदेति। क्रमशो निशाया अन्धकारो जड़ता च दूरमपसरति। धरित्रीं समुज्ज्वलप्रकाशोद्भासितां कुर्वन् सूर्यदेवः पश्चिमायां दिशि अस्तमेति। पुनस्तमिस्रा समागत्य धरामन्धकाराच्छन्नां विधत्ते। ईश्वरेच्छासमुद्भूतोऽयमेव प्राकृतिको नियमः।

अनन्तातीतकालत एव प्राच्यभारताकाशे आध्यात्मिकः सूर्यो ज्योतिष्मद्भास्वरस्वरूपतः समुदयति। पुनः भारतभूमौ ज्ञानमय ईश्वरो महामानवरूपेण जन्म गृह्णाति। तदीयधर्मजीवनोद्भिद्यमान-कान्त्या दशापि दिशः प्रकाशं प्राप्नुवन्ति। अज्ञानान्धकारस्यापगत्या नवीनाध्यात्मिकालोकतो जगदुद्भासते। अत एव प्रागैतिहासिक-युगत एव भारतदेशोऽयं विश्वस्य धर्मगुरुः धर्मालोकस्तम्भस्वरूपोऽविद्यत। संसारस्य यस्मिन् स्थाने धर्मनीतिरश्मिः परिदृश्यते तत्सर्वं स्थानं किल भारतीयानां देवमानवानाम् आर्यमहर्षीणां च जीवनसूर्येण विकीर्णं प्रतिभाति। "यदा यूनानस्यास्तित्वमेव नासीत्, रोमकसाम्राज्यं च

भविष्यदन्धकारगर्भे तिरोहितमभवत्, आधुनिकयूरोपीयपूर्वपुरुषाः गभीरारण्यमध्येऽसभ्यावस्थायां निवासमकार्षुः"–स्तदानीमपि भारतीयं गगनमण्डलं वैदिकयज्ञधूमेन समाच्छन्नम्, वेदध्वनिभिर्मुखरितं चाभवत्। किंवदन्ती चापि यस्य सुदूरातीतघनान्धकारस्य भेदनेऽसमर्था दृश्यते, तस्मिन् अतिप्राचीने युगेऽपि दिव्यगुणातीन्द्रियज्ञानसम्पन्नैराप्तकामैरार्यमहर्षिभिर्भारतभूमौ जन्म गृहीत्वा आत्मेश्वरपरलोकादीन्द्रियातीतज्ञानेन स्वानुभवसिद्धेन सांसारिकेभ्यः नरेभ्यः शाश्वतिकशान्तिभूमानन्दप्राप्तिमार्गाः प्रदर्शिता अभूवन्। तदीयविचित्रदर्शनासाधारणशक्तिविकासं प्रत्यक्षीकृत्यैवार्यसन्तानानि तेष्वतीन्द्रियतत्त्वेषु विश्वासं सुदृढमनुरागं चाकार्षुः। फलतो भारतस्य जातीयं जीवनं धर्मस्य सुदृढभित्तौ प्रतिष्ठितमभवत्। प्रत्यक्षधर्मलाभरूपलक्ष्ये स्थिरदृष्टयः सन्त आर्यपुरुषा अभिनवसमाजस्य सामाजिकीनां परिपाटीनां च सृष्टिमकुर्वन्।

संसारिकभोगसुखं विश्लिष्य ततो वीतरागैर्भूत्वा महर्षिभिः प्रोक्तम्–"यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति। भूमैव सुखम्, भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवो विजिज्ञास इति।"

तस्मिन् एव युगे महर्षियाज्ञवल्क्यपत्नी ब्रह्मवादिनी मैत्रेयी प्रोवाच–"येनाहं नामृता स्याम्, किमहं तेन कुर्याम्" इति। पुनस्तदानीमेव युगे ऋषिभिरार्यैः सत्यस्य शाश्वतशान्तेः, अविनश्वरसुखकरप्रियवस्तुनः सन्धानमपि प्रदत्तमभूत्—"तदेतत् प्रेयः पुत्रात्, प्रेयो वित्तात्, प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा।" क्षणिकसुखजनकानात्मवस्तुभ्य आत्मतत्त्वानुसन्धानाय मानवीयं मनस्तैर्नियोजितमासीत्। जन्ममृत्युप्रहेलिकातश्चिरमुक्तैर्भूत्वाऽमरजीवनलाभस्य सुस्पष्टसंकेतस्तद्वचनैर्लभ्यते। ऋषीणां दिव्यानुभूतयस्ता मानवीये मनसि नवचेतनामाविरभावयन्।

मनुष्याः पापिनस्तापिनो दुर्बला वा न सन्ति। सर्वेऽपि मानवाः

स्वभावत एव ज्योतिष्पुत्राः, उत्तराधिकारिरूपत एवामृताधिकारिणः सन्ति। सहस्रशो वर्षेभ्यः पूर्वं महर्षिकण्ठध्वनितामृतत्वस्य वाणी समयव्यवधानमतिक्रामन्ती साम्प्रतमपि मानवमनस्सु अमृतत्वस्यानुभूतिमातनोति। ऋषयस्तारस्वरेण घोषयाञ्चक्रुः—"शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः"। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।"

ऋषीणामनुभूतोऽनिर्वाणभावराशिः कालप्रभावान्नष्टो भवितुं नार्हति। अतः साम्प्रतमपि भारते मानवजातीनां सर्वश्रेष्ठ आदर्शसमूहो विद्यते।

वैदिकयुगे दिव्यानुभूतिसम्पन्नानाम् ऋषीणामाविर्भावफलस्वरूपश्रीभगवद्दर्शनलाभोपरि भारतीयो धर्मः प्रतिष्ठितस्तथा च जातीयसामाजिकजीवनस्य प्रत्येकस्तरे आदर्शोऽयमनुस्यूतः सन् प्रत्येकार्यसन्तानाय सत्यलाभार्थं नवनवां प्रेरणां प्रयच्छति। त्याग-तपस्या-संयम-पवित्रता-तीव्रान्तरिकतासाहाय्येन प्रत्येकोऽपि मानवः स्व-स्वजीवने जगत्कारणपरमेश्वरं प्रत्यक्षं कृत्वा मानव-जीवनं धन्यं कृतकृत्यं चानुष्ठातुं शक्नोति। विषयेऽत्र हिन्दवो दृढविश्वासिनो बभूवुः। शतशतवर्षजनितघातप्रतिघातसंघर्षैः, भोगवादिनां वैदेशिकानाम् अमानुषिकैरत्याचारोत्पीड़नैः, विजातीयविरुद्धभावप्लावनैश्चापि विश्वासोऽयं नैव किञ्चित् शैथिल्यमाप, प्रत्युत महती जातिरियं बहुभिर्दुरदृष्टैर्दुःखभारैश्च समाक्रान्ताऽपि न केवलं जीवति, प्रत्युत संसारस्य धार्मिके राज्ये सम्राडासने समुपविष्टा वर्त्तते। स्वामिना विवेकानन्देन दक्षिणभारतस्यैकस्मिन् व्याख्याने प्रोक्तम्—"इदानीमपि संसारं शिक्षयितुमस्त्यस्माकमधिकारः। अतः कारणादेव शतशतवर्षकृतैरत्याचारैः प्रायः सहस्रवर्षात्मकैर्वैदेशिकैः शासनैरुत्पीड़नैश्चापि जातिरियमिदानीमपि जीवति। अत एवेयं जीवति, यत इयमीश्वररूपमहामहिमरत्नस्य

परित्यागं नाकरोत्।" भगवान्मनुरप्युक्तवान् "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्वमानवाः" इति।

*  *  *

देवा मानवाश्च प्रतियुगमाविर्भूय परमश्रेयःप्राप्तेरादर्शं युगोपयोगिरूपेण मानवानां पुरतः समुपस्थापयन्ति। यदा मनुष्याः—

"यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इति

मतवादेनानेन प्रभावान्विताः सन्त इहलोकसर्वस्वमिन्द्रियभोगसुखमेव परमपुरुषार्थमवधारयन्ति, तत्र च प्रसक्ता जायन्ते, तदानीमेव वेदमुखेन महर्षय आर्यास्तेषां सावधानतायै नैजं वचनमश्रावयन्—

"अमृतत्वस्य तु नाशास्ति वित्तेन।
न धनेन, न प्रजया, त्यागेनैके अमृतत्वमानशुः" इति।

वैदिको धर्मः शिक्षयति—प्रत्येको मनुष्यः शुद्धबुद्धमुक्तस्वभाव आत्मस्वरूपः। प्रत्येकोऽपि "सहस्रशीर्ष"-विराट्पुरुषस्य अंशोऽस्ति। किन्तु जागतिकविभिन्नावर्त्तघातप्रतिघातैर्नैव मानवो निरन्तरं स्वस्वरूपसम्बन्धे सावधानस्तिष्ठति। इयमात्मविस्मृतिरेव मायाशब्दवाच्या। माया—अर्थात् या मा (नास्ति), तस्या एव स्वस्वरूपेणाववोधः क्रियते। मायाच्छन्नो मानवो 'अहं ब्रह्मास्मी'ति परिज्ञातुं न शक्नोति, मोहाच्छन्नस्तत्सम्बन्धे तद्विपरीतमेव भावयति। इयं भ्रान्तभावनैव धर्मग्लानिः। बहूनां मानवानामनात्मवादित्वं प्रवृत्तिमार्गाश्रयत्वमेव मानवसमाजे धर्मग्लानितायाः स्थितिः। वेद-पुराणतन्त्रप्रभृतिशास्त्रग्रन्थानां विद्यमानत्वेऽपि मानवसमाजेऽधर्मः प्रादुर्भवति। इतिहासप्रसिद्धमिदं सत्यम्। प्रतियुगं धर्मग्लानिर्जायते। तत्प्रतिकारविधानमपि बोभवीति। श्रीमतो भगवतोऽपारकरुणा चिराय मनुष्यान् विनाशपथेऽग्रेसारयितुं न समीहते। सा च भ्रांतविमूढविपथगामिनो मानवान्

कालोपयोगिनमादर्शं दर्शयित्वा सत्यस्याश्रये समानयति, अमर-जीवनमार्गे परिचालयति च। भगवान् श्रीकृष्णो गीतामुखेन प्रतिजानीते—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति।

स च मानवरूपेणावतरति। युगप्रयोजनमनुसृत्य आदर्शजीवनेन स्वीयमहिम्ना सनातनं धर्मं राहुमुक्तं विधत्ते। पथभ्रष्टान् दुर्बलान् मनुष्यान् कराभ्यां गृहीत्वा धर्मपथे प्रतिष्ठापयति। तदीयजीवनपूर्णतां प्रति दृष्टिं पातयन्तोऽवाचो विस्मयान्विता मनुष्यास्तं नरदेहधारिणं भगवद्रूपेण परिपूजयन्ति, जीवनस्यैकमात्रादर्शरूपेण गृह्णन्ति च।

पौराणिकयुगादेव भारतेऽवतारवादविश्वासो विशेषरूपतः प्राकट्य-मवाप। शिशिरविन्दुसम्पातो यथाऽदृश्यभावतः कुसुमकोरकान् सौंदर्य्यसौरभरूपेण विकासयति, तथैव देवमानवजीवनप्रभावेण मानवसर्वस्तरीया शुभचिन्ता प्रभावान्विता सती मानवजीवनानि विकासयति। मानवसमाजस्य धर्मसंस्कृतिसभ्यतावास्तुललितकला-संगीतादीनि नूतनं स्वरूपं बिभ्रति। निराशापरिपीडितानां विपथ-गामिनां मानवानां मनसि आशा सञ्चरति, मनश्च भूमानन्दोपलब्धि-पथे परिचलति। भारतीयसंकटमयमुहूर्त्ते देवमानवा भारते वर्षे अवतरन्ति। तदीयपुण्यपादस्पर्शेन ईश्वरीयविशेष-समीहया भारतभूमिः पुण्यधर्मभूमित्वेन परिणता बभूव।

पाश्चात्त्यभूखण्डे सनातनवैदिकधर्मस्य विजय-वैजयन्तीमान्दो-लयन् स्वामी विवेकानन्दः कोलम्बोस्थाने पदमर्पयन् स्वीयभाषणे प्रोवाच—"भारतं हि पुण्यभूमिः।" तेनान्यदपि प्रोक्तम्—"अद्याऽहं सभायामत्र समुपस्थितः सुदृढं वच्मि यत्—यदि धरायामेतादृशः

कोऽपि देशोऽस्ति यः पुण्यभूमिनाम्ना समलङ्कृतो भवितुमर्हति, यदीदृशं किमपि स्थानम् यत्र जागतिकाः सर्वे प्राणिनः स्वस्वकर्मफलानि भोक्तुं विवशाः समायान्ति, यद्येतादृशः कोपि भूभागः यत्र भगवत्-प्राप्तिकामा मनुष्याः स्वजीवनपरिणामे समागमिष्यन्ति, यद्येतादृक कोऽपि प्रदेशः यत्र मनुष्य-जातिषु सर्वापेक्षया समधिकः शांतिदया-शौचार्जवादिसद्गुणानां विकासो बभूव, यद्येतादृशः कोऽपि भुवः-खण्डो वर्त्तते यत्राध्यात्मिकताया अन्तर्दृष्टेश्च सर्वाभ्यर्हितः प्रकाशोऽभूत् तदानीमहं निश्चितरूपेण निर्देष्टुं शक्नोमि यदसौ मम मातृभूमिर्भारत-देश एव। अतिप्राचीनकालादेव तत्र विभिन्नधर्मसंस्थापका आविर्भवन्तः सम्पूर्णमेव भूमण्डलं वारम्वारं सनातनधर्मस्य पवित्रैराध्यात्मिकैर्जलप्रवाहैः परिप्लावयामासुः। अस्मादेव स्थानात् उत्तरस्यां, दक्षिणस्यां, पूर्वस्यां, पश्चिमायां सर्वास्वपि दिक्षु दार्शनिकज्ञानप्रबल-वीचयः परिव्याप्नुवन्। अत एव हि पुनर्धार्मिकास्तरङ्गा विस्तृति-मासाद्येहलोकसर्वस्वसभ्यतायै आध्यात्मिकं जीवनं प्रदास्यन्ति। अन्यदेशीयानां लक्षशः नराणां नारीणां च हृदयदाहकारिणं जड़वादरूप-मनलं समूलं निर्वापयितुं यस्यामृतसलिलस्य प्रयोजनं तत् किल अत्रैव स्थाने विद्यते।* सुहृदः! विश्वसन्तु, भारतदेश एव भुवनमण्डल-

---

* ऊनविंशशतकस्य प्रारम्भे विख्यातो जर्मनदार्शनिकः शोपेनहावरो वेदस्यैकमस्पष्टं लाटिनानुवादमधीत्य जगाद—"उपनिषद्व्यतिरिक्तः संसारे चित्तसमुन्नतिसाधको नान्यः कोऽपि ग्रंथः। जीवितकाले मह्यमुपनिषदैव शांतिः प्रदत्ता, मृत्युकालेऽपि तयैव मह्यं शान्तिः प्रदास्यते।"

अन्यत्रापि तेन जर्मनविदुषा भविष्यद्वाणी कृता विद्यते—"ग्रीकसाहित्यस्य पुनरभ्युदये जागतिकचिन्तापद्धत्यां यादृशं गुरुतरपरिवर्त्तनमभूत्, शीघ्रमेव तदपेक्षयाऽधिकः शक्तिशाली, बहुस्थानव्यापी भावविपर्ययो भविष्यति"··· सम्पूर्णमपि विश्वं भारतीयभावधारया प्रभावान्वितं बोभूयते। श्रीविवेकानन्द-स्तन्मार्गरचनायां स्वजीवनमेवोत्सर्गीकृतवान्।

माध्यात्मिकतरंगै परिस्रावयिष्यति।" स्वामी महोदयोऽन्यत्रापि प्रोक्तवान्—"इयं महती आर्यजातिरनेकदुर्दैवविलसितानां विपदां, दुःखानां च भारान् वहन्ती अधुनापि जीवति, यतो भारतीयधर्म-निर्झरिण्या अमृतमयं प्रेमसलिलं पाययित्वा भोगवादसर्वस्वस्य पाश्चात्त्यजगतो लक्षशः पिपासार्तान् स्त्रीपुरुषान् निवारिततृष्णान् विधास्यति"।

* * *

जातेरिव धर्मस्याप्युत्थानपतने भवतः। धर्मस्य गतिरपि समुद्र-तरङ्गवदास्ते। भारतीयो धर्मभावोऽपि प्रतियुगं ग्लानिग्रस्तोऽभवत्। भारतीयं जीवनमपि मूर्च्छाभावापन्नमजायत, तत्र पतनयुगे धर्मं नवीनेन बलेन बलीयांसं विधातुं करुणावरुणालयस्य श्रीभगवतो विशिष्टेच्छया देवमानवा आविरभूवन्। सनातनो वैदिको धर्मो ग्लानि-मुक्तो भूत्वा मेघनिर्मुक्तदिनकर इव समुज्ज्वलतरस्वरूपः प्रकाशि-तोऽभूत्। प्रत्येकपतनस्यानन्तरमार्यधर्मः समाजश्च परमेश्वरेच्छया विगतामयः पूर्वापेक्षया समधिकतरो यशस्वी वीर्यशाली च सम-भूदित्यत्रेतिहास एव प्रमाणम्।

किन्तु विगतसहस्रद्वयवर्षपर्यन्तं भारतभूमौ यस्य पतनस्य युगः समायातः, भारतीये धर्मे जीवने च वारं वारं यादृशः प्रचण्ड आघातोऽभवत्, आर्यजातेरितिहासे तादृशः प्राक् कदाऽपि न बभूव। ईसवीयस्य प्रथमशतकस्यारम्भे विकृतबौद्धधर्मस्य सस्पर्धा-भियानफलस्वरूपं सनातनो हिन्दुधर्मः क्रमशः एतावान् बलहीनो विध्वस्तो, विच्छिन्नश्च जातो यद् भारतस्य द्वितृतीयांशमनुष्या अवैदिक-बौद्धधर्मग्रहणे बाध्यतां जग्मुः। एतदेव न हि। अवशिष्टा हिन्दवो मूल-वैदिकधर्मतश्च्युताः, अनेकखण्डविभक्ताः, भ्रष्टसदाचाराः, केवल-लोकाचारपरायणाः, क्षीणबुद्धयः, परस्परं विवदमानाः, बहुविध-

सम्प्रदायैर्विभक्ताः, समभूवन्, येन एकतारहितानाम्, परस्परं विच्छिद्यमानानां बहूनां लघुरूपराज्यानां समुत्पत्तिरभवत्।

ततश्च भारतभूमौ भोगवादप्रधानानां सेमिटिकजातीयानां तथा जड़वादप्रधानपाश्चात्त्यसभ्यतायाः सबलं, सदर्पं चाभियानम् एकोपर्येकमागम्यमानमभूत्, एकतश्च क्रमशो हिन्दुजाते राष्ट्रिया स्वतन्त्रता विलुलोप, द्वितीयतश्च धर्मस्यापि विलोपः समपद्यत। इहकालभोगप्रधाना इस्लामसभ्यता भारतीयायां राजशक्तौ, धर्मशक्तौ, संस्कृतौ, सभ्यतायां च 'वह्निकरवाल'-बलेन प्रचण्डमाघातमकार्षीत्। तद्बलेनैव इस्लाममतानुयायिनः स्वमतप्रचारमकार्षुः। 'हिन्दुनिवहनिधनयागः' प्रारब्धः विहतपराक्रमहीनबलं हिन्दूनां केवलमात्मसंरक्षणमेवैकमात्रचेष्टाऽभवत्। एतदप्यसम्भवं संवृत्तम्। परधर्मविद्वेषिणां मुस्लिमदानवानामत्याचारैः शतशो मन्दिराणि ध्वस्तस्तूपरूपे परिणतानि, सहस्रशो देवदेवीविग्रहा भग्नाः कलुषीकृताश्च सम्पादिताः। तेषु च स्थानेषु माहम्मदानां विशाला मज्जित्ताः निरमीयन्त। माहम्मदीयदिग्विजयवाहिनी सदर्पाभियानेन समस्तामपि भारतभूमिं पददलितां मथितां चाकरोत्। आर्यसन्तानशोणितैर्भारतभूमिरियं कर्दमाक्ता बभूव। तेषां पाशविकैरत्याचारैर्भारतीयाः स्त्रीपुरुषा जातिकुलशीलमानमर्यादाहीनाः क्षुद्रप्राणिसमतां भेजिरे। भारतस्य पंचमांशहिन्दुमानवा मुसलमानधर्मग्रहणे बाध्या अभूवन्। स्वामिना विवेकानन्देन एकस्याम् उत्तरभारतीयवक्तृतायां मुस्लिमयुगे भारतीयावस्थावर्णनप्रसङ्गेन प्रोक्तम् —"....बर्बरजातीयाक्रमणतरङ्गा वारं वारमस्माकमार्यजातेर्मस्तकेभ्यः प्राहवन्। शतशतवर्षाणि यावत् "अल्लाहहोअकबर" इति ध्वनिना भारतीय आकाशो मुखरितो बभूव। एतादृशो भारतीयो हिन्दुः कोऽपि नासीत् यः प्रतिक्षणमेव स्वजीवनस्याशङ्कां नाकरोत्। जागतिके इतिहासे प्रख्यातसमस्तदेशापेक्षया सर्वाधिकमत्याचारं निग्रहं च भारतदेश एवासहत" इति।

ततश्च भारतोपरि जडवादप्रधानपाश्चात्यधर्मराजशक्त्योर्विपुल-वेगशाली झंझावातः प्रावहत्, सर्वमप्यस्तव्यस्तमकार्षीच्च। हिन्दुधर्म-भित्तिः शैथिल्यमापत्। सन्देहनास्तिकवादः प्राचरत्। हैन्दवसन्तनाः सनातने धर्मे भारतीयैतिह्ये च विश्वासहीनतां प्रपेदिरे। श्रुतिस्मृति-पुराणादयो धर्मग्रंथा उपेक्षिताः। हैन्दवीयं सर्वमपि निन्दनीयं संजातम्। हिन्दव आत्मनो हिन्दुनामपरिचयप्रदानेऽपि कुण्ठितत्वं भेजिरे। विशेषतस्तथाकथितशिक्षितम्मन्यसामाजिका आहारविहार-वेशभूषाचिन्तनादौ सर्वांशरूपेण पाश्चात्त्यभावापन्ना अभवन्, प्रकाश्येऽपि निषिद्धद्रव्यभक्षणे गर्वमन्वभवन्।

छलबलकौशलादिना असहायजना धर्मान्तरिता अक्रियन्त, एक-कोटितोऽपि समधिका व्यक्तय ईसामसीहमतग्रहणे बाध्यतां प्रापुः। ख्रैस्तधर्ममंदिराणि समस्तेऽपि भारते निरमीयन्त। इतश्चेन्द्रियप्रत्य-क्षभित्तौ प्रतिष्ठितराजशक्तेः प्रबलप्रतापशोषणनीतिफलस्वरूपेण हिंदुजातिः धर्मविश्वासहीना, शिक्षारहिता, अन्नवस्त्रसमीहासूचा-काङ्क्षा वरहिता, सततमेव परस्परविवदमाना, दासजातिसुलभ-हिंसेर्ष्याद्वेषपूर्णा, वैदेशिकघृणास्पदमानवमात्रपर्यवसिताऽभूत्। एतत्पतनयुगसम्बन्धे स्वामी विवेकानन्दः प्रोवाच—"वर्त्तमानगभीर-विषादरजनीवत् काप्यमानिशा इतः पूर्वमिमां पुण्यभूमिं नैव समाच्छन्नामकरोत्। एतत्पतनगभीरताया अग्रे सर्वमपि प्राक्कालीनं पतनं गोष्पदीभूतमेवास्ते"। धर्माश्रयिणो मनुष्या भीतभीताश्चकित-चकिताः सन्तः केनापि प्रकारेण स्वधर्मरक्षापूर्वकधर्मग्लानिनिवारणा-यार्त्तस्वरैः कातरहृदयेन परमकारुणिकपरमेश्वरसन्निधौ तदीय-शुभागमनाय प्रार्थनामकार्षुः।

विगतद्विसहस्रवर्षाभ्यन्तरेऽनेके महापुरुषा आविरभवन्। आचार्य-शङ्कर-रामानुज-माध्व-निम्बार्क-नानक-दादूप्रभृतयः, परवर्त्तिनि काले च श्रीचैतन्यादय उत्तरमध्यदक्षिणभारतस्यानेके आचार्याः सिद्धाः

साधका महात्मानः स्वकीयदिव्यालौकिकजीवनप्रभावं हिंदुधर्मोपरि यथेष्टमपातयन्। आचार्यशङ्करः वैदिकधर्मभित्तौ प्रचुरं बलाधानमकरोत्। विभिन्ना आचार्याश्चापि हिन्दुधर्मस्यानेका दिशो विदिशश्च समुज्ज्वला अकुर्वन्। किन्तु प्रतिकूलपरिवेशहेतुना तदीयजीवनवाणीप्रभावः प्रान्ते, प्रदेशे, सम्प्रदाये, मतवादे च विशेषमात्रायां सीमाबद्धो बभूव। अतो 'युगयुगान्तरव्यापिनो विखण्डितस्य, देशकालयोगत इतस्ततो विक्षिप्तस्य, धर्मखण्डस्य समूहे' एकतास्थापनं, सनातनधर्मस्य च सार्वजनीन-सार्वदेशिक-रूपतः परिस्फुटत्वसुयोगो नाभूत्।

गतसार्धद्विसहस्रवर्षाभ्यन्तरे संसारेऽनेकधर्माणामभ्युदयोऽभवत्। विभिन्नदेशजातीनां कोटिशो नरा नार्यश्च तांस्तान् धर्माननगृह्णन्। अथ च स्वधर्मप्राधान्यप्रचेष्टाभिः राजनैतिककारणकलापेन च धर्मक्षेत्रेऽपि विभिन्नधर्मावलम्बिषु द्वन्द्वविषमयसंघर्षोत्पत्तिर्भूत्वा विविधधर्मावलम्बिनो मानवान् युद्धलिप्सुजातौ परिणतानकार्षीत्। फलतो जगदिदं दानवलीलाभूमिरभूत्। संसारप्रादुर्भूताः सर्वेऽपि धर्माः सनातनवैदिकधर्मस्य शाखास्वरूपाः सन्ति। ते च सत्यरूपाः परमतत्त्वलाभपथे भूमानन्दे च मानवान् प्रतिष्ठाप्य जन्ममृत्युप्रहेलिकातश्चिरमुक्तान् विधातुमुपायभूताः सन्ति। शिवमहिम्नः स्तोत्रे प्रतिपादितम्—

> त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
> प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
> रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
> नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

सिद्धान्तमिमं जगद्वासिनां पुरतः संस्थाप्य विश्व-धर्मक्षेत्रे मैत्र्या एकतायाश्च संस्थापनावसरः समायातोऽस्ति। इतश्च पाश्चात्त्यविज्ञानोन्नतिपरिणामस्वरूपतः संसारस्य विभिन्नप्रदेशावस्थितराज्यजातिषु योगायोगौ गमागमौ चैतावत्सुलभौ स्वल्पसमयसाध्यौ संवृत्तौ,

यतोऽतीतं भौगोलिकं दूरत्वम् व्यवधानं च सदातनकालायैव व्यलुम्पत्। सर्वाण्यपि राष्ट्राणि परस्परं प्रतिवेशितां सुखदुःखसह-भागितां च प्रपद्यन्ते। इतः प्राक् संसारेऽत्र कदाप्येतादृशं नाभवत्। एतद्धि श्रीभगवतो विशेषकृपापरिणामस्वरूपमेव। विश्वस्य सर्वानपि मानवान् एकतासूत्रसन्नद्धान् विधाय एकस्यां महत्यां जातौ परिणम-यितुमियं मङ्गलसूचना विद्यते। विभिन्नधर्मराष्ट्रजातिमानवेषु पारस्परिकभावानामादानप्रदानमाध्यमेन सांस्कृतिकविनिमयेन च मनुष्यजातेः सामूहिककल्याणाय, एकस्या अखण्डमानवसभ्यतायाः संघटनाय, विश्वैकत्वपटभूमौ बहुविधभाषाभाषिणां मानवाना-मभ्यन्तरे चैकतास्थापनाय शुभोऽवसरः समायातोऽस्ति। इयमेकता न केवलं भौतिक्या, भौगोलिक्या वा दृष्ट्या, प्रत्युताध्यात्मिक्याऽपि सम्भवति, साम्यमैत्रीभ्रातृत्वावबोध एव तस्या मानवसभ्यताया मूलमन्त्रो भविष्यति। निखिलधर्मसंस्कृतिसमन्वय एव तन्नवीन-सभ्यताया मूलभित्तिः।

अतो वर्त्तमाने युगे जगदीश्वरस्य विशिष्टया समीहया भारतस्य समस्तभूमण्डलस्य च सनातनमंगलविधानाय सार्वलौकिक-सार्व-भौतिक-सार्वकालिक-धर्मसंस्कृतीनां जीवितदृष्टान्तस्वरूपतो जगद्धित-साधनार्थं सर्वेषां पुरतो निजजीवनादर्शप्रकाशसदुद्देश्यसिद्धये वेदमूर्त्ते-र्भगवतो देवमानवस्य श्रीरामकृष्णदेवस्याविर्भावोऽभवत्। इदानीं षडैश्वर्यपरित्यागपूर्वकसात्त्विकैश्वर्यपूर्णरूपविकासायासौ समायातः। तदीयेयमैश्वर्यविहीना लीला नितरामनुपमा। निरक्षरोऽपि स पराविद्याप्रतिष्ठितो बभूव।

स्वीयपञ्चाशद्वर्षदेशीयजीवनेऽसौ इतस्ततो विच्छिन्नस्य सनातनधर्मस्य याथातथ्यैकतारहस्यं कुत्र तिष्ठतीति गम्भीरसाधन-द्वारा प्रतिपाद्य, विभिन्नधर्माणामनुष्ठानेन, तत्तद्धर्माभ्यन्तरस्थैकत्वभूमि-मासाद्य प्राचारयत्—"यावन्ति मतानि तावन्तः पन्थानः" इति अर्थात्

प्रत्येकोऽपि धर्मः परमतत्त्वाधिगमाय राजमार्गः शास्त्रानुकूलसाधनानुष्ठानेनासौ शास्त्रमर्यादायाः पुनरुद्धारं, पुनःस्थापनम्, पुनःप्रचारं चाऽकरोत्।

स्वामिना विवेकानन्देन पाश्चात्त्यदेशतः स्वकीयं गुरुभ्रातरमेकमुद्दिश्य लिखितम्—"रामकृष्णावतारे ज्ञानं भक्तिः प्रेम च, अर्थात् अनन्तं ज्ञानम्, अनन्तं प्रेम, अनन्तं कर्म, अनन्ता जीवदयाप्यासीत्। युष्माभिरिदानीमपि नावधारितम् 'श्रुत्वाप्येनं वेद न चैव कश्चित्।' What the whole Hindu race has thought in ages, he lived in one life. His life is a living commentary to the Vedas of all nations....

"समस्ताऽपि हिन्दुजातिर्युगसहस्रैर्यां यां चिन्तामकार्षीत्, तेनैकस्मिन्नेव जीवने तत्र तत्र स्थितानां सर्वेषां भावानामुपलब्धिः कृताऽऽस्ते। तदीयं जीवनं सर्वजातीयवेदानां जीवितं टीकास्वरूपम्।" अन्यत्रापि तेन प्रोक्तम्—"सर्वभावानामेतादृशः समन्वयः संसारस्येतिहासे कुत्रचिदन्वेषणेनापि न लभ्यते। एतेनाप्यवधार्यतां यदसौ को देहं धृत्वा समागमत्। अवतारकथनं तदीयं लघुत्वसम्पादनमस्ति।"

श्रीरामकृष्णो व्यक्तिविशेषः श्रीभगवता प्रेरितो दूत-विशेषो वा नासीत्, स हि सर्वभावसमष्टिमिलनभूमिस्वरूपः संबभूव। अत एवेदमुच्यते—शिवः शक्तिः, रामः कृष्णः, सीता राधा, ईसा-मुहम्मदादयो विभिन्ना देवदेव्यः सशक्तिकावतारपुरुषाश्च रामकृष्णशरीरेऽनुप्रविविशुः। अत एव कारणात् नवयुगस्यास्य प्रभाते सनातनशास्त्रनिहितसर्वधर्मभावानां समन्वयरूपं सत्यं पुनरप्याविष्कृतं दिव्याऽऽभासंवलितं सद् विश्वस्य पुरतो विकसितमभूत्। नवयुगधर्मप्रवर्त्तकोऽयं श्रीरामकृष्णः पूर्वतनीयानां धर्मसंस्थापकानामवतारिपुरुषाणां संस्कृतं प्रकाशमात्रं विद्यते। श्रीरामकृष्णदेवो भावाविष्ट इदमुवाच—"यो हि रामः कृष्णश्च तौ द्वौ मिलित्वा (निजशरीरं लक्ष्यीकृत्य) देहेऽत्र

समायातौ।"... परन्तु साम्प्रतं छद्मवेशेनागमनम्। यथा राजा गुप्तरूपेण कदाचिद् राज्यदर्शनार्थं गच्छति, तथैव।

श्रीरामकृष्णस्याविर्भावसम्बन्धे स्वामी विवेकानन्दः लिखितवान्—

आचण्डालप्रतिहतरयो यस्य प्रेमप्रवाहो
लोकातीतोऽप्यहह न जहौ लोककल्याणमार्गम्।
त्रैलोक्येऽप्यप्रतिममहिमा जानकीप्राणबन्धुः
भक्त्या ज्ञानं वृतवरवपुः सीतया यो हि रामः॥
स्तब्धीकृत्य प्रलयकलितं वाहवोत्थं महान्तं
हित्वा दूरं प्रकृतिसहजामन्धतामिस्रमिश्राम्।
गीतं शान्तं मधुरमपि यः सिंहनादं जगर्ज
सोऽयं जातः प्रथितपुरुषो रामकृष्णस्त्विदानीम्॥

श्रीरामकृष्णो मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य लीलापुरुषोत्तमस्य श्रीकृष्णचन्द्रस्य चाधुनातनोपयोगी विकास एव।

श्रीरामकृष्ण उवाच—"सर्वे धर्माः सत्यरूपाः। यावन्ति मतानि तावन्तः पन्थानः।" नैषा वाणी विचारेण बुद्ध्या वा परिकल्पिता, प्रत्युत तदीयसाधनायाः फलस्वरूपैव। तस्य समस्तमपि जीवनमेतत्सत्यस्य जीवितो मूर्त्तविग्रहः। तत्रैव युगधर्मस्य सुस्पष्टमिङ्गितं निहितमास्ते।

वर्तमानकाले पृथिव्यां बौद्ध-खैस्त-माहम्मदजरथुस्त्रादयो बहुविधा धर्माः समुदभूवन्, किन्तु तैः सत्यताधिगममार्गः सुगमो नाभूत्, प्रत्युत समस्तमपि विश्वं तमसाच्छन्नं जातम्। सत्यलाभप्रचेष्टां विहाय प्रत्येकोऽपि धर्मावलम्बी केवलं स्वधर्मस्यैव श्रेष्ठत्वसत्यत्वप्रतिष्ठापनाय स्वकीयां समस्तामपि शक्तिं प्रयुङ्क्ते। फलतः साम्प्रदायिकत्वस्य, संकीर्णत्वस्य, धर्मोन्मत्ततायाः अनुदारतायाश्च दानवीयं नृत्यं सुन्दरमप्येतद् धरामण्डलं नरकायितं चकार। कियद्वारं च धरामिमां नर-

शोणितैः परिप्लावितामकरोदित्येतस्य सीमा संख्या वा न विद्यते। बलप्रयोगतोऽन्यधर्माणां विलोपसाधके संग्रामे यावान् रक्तपातो बभूव, तदेकांशोऽपि राष्ट्रप्रतिष्ठायै नाभवत्। एतद्धर्मोन्मत्ततायाः परिणामः कीदृश इत्येव धर्माश्रयिणामेकमात्रचिन्ताविषयः। सांसारिके धर्मक्षेत्रे यदेयमवस्थाऽऽसीत्, तदैव श्रीरामकृष्ण आविरभवत्। तस्य विभिन्नधर्माणां साधना केवलं प्रत्येकधर्मसत्यतां प्रमाणयितुमेव नासीत्, प्रत्युत सर्वधर्मावलम्बिषु पारस्परिकसौहार्दस्थापनमपि तदीयोऽन्यतमो हेतुः।

अतिप्राचीने काले विविधदेवोपासकार्यजातिविभिन्नशाखासु स्वस्वदेवताप्राधान्यप्रतिष्ठायै पारस्परिकः संग्रामोऽपि नैव न्यूनः। युद्धद्वारैव देवताप्राधान्यं निर्णीयते स्म। एवंविधान्यनेकानि युद्धानि बहुवारं रक्तपाताश्च समभूवन्। मानवेष्वन्योन्यं निर्ममो हत्याकांडः प्रचचार। युद्धमेतादृशं धर्मयुद्धनाम्ना परिगणितमासीत्। अनन्तस्वर्गसुखभोग एव तादृशयुद्धमृत्युफलश्रुतिः। परन्तु युद्धमिदमार्यजातिविभिन्नशाखास्वेव सीमबद्धमभवत्।

तद्दुष्कृतिदमनाय विभिन्नोपास्यदेवानां स्वरूपनिर्णयाय ऋग्वेदत्यैको महर्षिरघोषयत्—"एकं सद् विप्रा बहुधा वदन्ति।" अर्थात् परमसत्यस्वरूपा एकमात्रसत्तैव विद्यमानाऽऽस्ते, विप्राः साधवस्तामेव विविधभावैर्वर्णयन्ति। एक एव परमदेवो विभिन्ननामरूपैः परिपूज्यते। महर्षेर्वाण्यामस्यां महत्सत्यं निहितमस्ति। एतत्परिणामोऽपि विपुलोऽभवत्। क्रमशो हिन्दूनां विभिन्नधर्मसम्प्रदायेषु द्वन्द्वमवसानतां प्रापत्। हिन्दवः परधर्ममतसहिष्णवो विद्वेषशून्याः सन्तः शान्त्या स्वस्वधर्मानुष्ठानतत्पराः समभूवन्। किन्तु कालस्याचिन्त्यप्रभावतो भारतभूमावपि धर्मग्लानिः परिव्याप्नोत्।...

भारतबहिर्भूतदेशेषु बेबिलोनियानां यहूदीयानां च धर्मेतिहासे दरीदृश्यते यत् तासु जातिष्वपि लघुरूपा विविधाः शाखाः, विभिन्नो-

पास्यदेवाश्च बभूवुः। स्वस्वदेवताश्रेष्ठताप्रतिष्ठायै पारस्परिकयुद्धानां नासीन्न्यूनता। अयमेव जागतिकोऽतीतो धर्मेतिहासः। परन्तु गत-सार्धद्विसहस्रवर्षाणां विविन्नधर्मोद्भूत-पारस्परिकसंघर्षः संसारे चैकां विशेषसंकटपरिपूर्णां स्थितिं समुदपादयत्। अथ च विभिन्न-जातीयानां कोटिशो नरनारीणां भाग्यं, सुखं, शान्तिः, जीवनं, मरणं, धार्मिकं जीवनं च संग्रथितमास्ते किन्तु विज्ञानस्योद्भाविन्याः शक्तेः फलस्वरूपम्, एकतो यथा विभिन्नशक्तिशालिनां मारणास्त्राणां सर्जनं, तथैव द्वितीयतः सांसारिकविभिन्नप्रांतीयमानवानां पार-स्परिकमन्तरङ्गरूपेणाविच्छेद्यं मिलनमपि संवृत्तम्। प्राक्कदा-प्येतन्नाभूत्, एतादृशद्विविधसमस्यासमीचीनसमाधानं केवलं धर्मस्य नूतनविकासेनाध्यात्मिकेन ज्ञानेनैव सम्भवति।

"धर्मं यो बाधते धर्मो न स धर्मः कुधर्म तत्।
अविरोधी तु यो धर्मः स धर्मो मुनिपुङ्गव" इति

महाभारतीयं वचनमनुसृत्य प्रत्येकोऽपि धर्मः अविरोधी परस्पर-परिपोषकश्च। सर्वोऽपि परमशांतिनिकेतनं प्रापयितुं विभिन्नो मार्ग-विशेषः। सर्वेऽपि मानवा अन्योन्यं भ्रातरः, ते च सर्वे परमपितुः परमेश्वरस्य सन्तानस्वरूपाः।

संसारेऽत्र बहुकोटीनामुद्भ्रान्तमानवानां ध्वंसमुखात्परि-रक्षणाय यथार्थशांतिपथे परिचालनाय च अपारकरुणामयश्री-भगवतो विशेषशक्तेर्वर्तमानयुगे श्रीरामकृष्णरूपत आविर्भावोऽभवत्। अतस्तस्य जीवने सांसारिकाः सर्वेऽपि धर्माः सामूहिकरूपतः परस्परं मिलित्वा एकीभूयैकधर्मस्वरूपं बिभ्राणा विकासमाप्ताः। एतादृशैकी-भूतस्य धर्मस्य चन्द्रातपसुशीतलां छायामुपाश्रिता विविधभाषा-भाषिणो विश्ववासिनः समवेता भवितुमर्हन्ति, तस्य धर्मस्य वेदीमूले वेदाः, पुराणानि, त्रिपिटको, बाइबिलः, कुरानश्च समीपस्थान-मधिगन्तुं शक्नुवन्ति।

अस्यैव विश्वधर्मस्य प्रतीकस्वरूपो वर्तमाने युगे श्रीरामकृष्णः प्रादुर्बभूव। विश्वधर्मोऽयं श्रीरामकृष्णजीवनमाध्यमेन मूर्त्तोऽभवत्। श्रीरामकृष्णजीवनं तस्य धर्मस्यादर्शः।

* * *

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्,
मम वर्त्मानुवर्तुन्ते मनुष्याः पार्थ! सर्वशः"

इति गीताकर्तुः श्रीकृष्णस्य वाणी श्रीरामकृष्णजीवनेऽर्थतः प्रकाशित उपलभ्यते।

"रुचीनां वैचित्र्याद् ऋजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव"

इति श्रीपुष्पदन्तमुखपङ्कजनिर्गतस्तोत्रमर्मवाणी श्रीरामकृष्णजीवन-माध्यमेन जगद्वासिनां सन्निधौ पुनर्ध्वनिताऽभवत्।

विश्वधर्मस्यैतस्य नवप्रकाशनार्थमेव भगवतः श्रीरामकृष्णस्य प्रादुर्भावः। कस्यचन विशिष्टस्य धर्मस्य, सम्प्रदायस्य, देशस्य, जाति-समाजस्य वा कृते श्रीरामकृष्णदेवो न समागतः। तस्यागमनं समस्त-विश्ववासिनां, गृहस्थानां, संन्यासिनां, स्त्रीपुरुषाणां, बालक-बालिकानां, सबलदुर्बलानां, खञ्जान्धमूकबधिराणां, सर्वस्तरीय-विभिन्न-रुचीनां मानवानां हितार्थमभूत्।

एकदा श्रीरामकृष्णदेवेन भावाविष्टेन सता समवेतान् भक्तान् लक्ष्यीकृत्य प्रतिपादितम्—"..अत्रत्यं (मदीयम्) साधनं भजनं सर्वं युष्मदर्थमेव।...उदाहरणरूपमस्ति च। अहं सर्वांशमनुतिष्ठामि, यूयमेकांशं तु कुरुत।"

श्रीरामकृष्णस्य साधनं भजनं च स्वीयमुक्तिसाधकं नास्ति, प्रत्युत जगद्वासिनो धर्ममार्गेऽनुप्राणितान् विधातुमादर्शमुपस्थापयितुं च समभवत्। तेन पूर्णाङ्गसाधनस्य यो ह्यादर्शः समुपस्थापितस्तेन प्रेरणा-मासाद्य लोकाः स्तोकमधिकं वा साधनं करिष्यन्त्येव। तस्य सम्पूर्णमपि

जीवनमाध्यात्मिकालोकस्तम्भस्वरूपं, सर्वधर्मावलम्बिनां कृते दिग्-दर्शनस्येङ्गितेन परिपूर्णमासीत्। केवलं हिन्दव एव न हि, प्रत्युत बौद्धाः ख्रैस्ताः, माहम्मदाः, संन्यासिनो, गृहस्थाः, स्त्रियः, पुमांसः, आस्तिक-नास्तिकाः, सर्वदेशीयसर्वस्तरीयमानवाश्च तदीयपरिपूर्णजीवनेना-नुप्रेरणां प्राप्स्यन्ति। अत एव तस्य विभिन्नधर्माणां साधना बभूव, तस्य च जीवने प्रतिमापूजामारभ्य निर्गुणब्रह्मात्मविज्ञानं यावत् सार्थकं रूपायणं लभ्यते।

महात्मना गान्धिना चैकत्र लिखितम्—"···रामकृष्णपरमहंसदेव-जीवनं धर्मानुष्ठानस्यैकः परिपूर्ण इतिहासः। तस्य जीवनदर्पणे वयं प्रत्यक्षप्रतिफलितमिव श्रीभगवन्तं द्रष्टुं सुयोगं प्राप्नुमः। अस्य देवमानवस्य जीवनवेदाध्ययनेनेदमेव सुस्पष्टं प्रतीयते यदीश्वर एवैको नित्यः सत्यश्च तद्भिन्नं सर्वमनित्यम्।···

"वर्तमानेऽविश्वाससन्देहयुगे रामकृष्णस्येश्वरपरायणता ज्वल-न्विश्वासश्च संख्यातीतनरनारीणामन्तःकरणे सान्त्वनाऽऽशा-मृतानि सिक्तवन्तौ। अन्यथा तच्चेतांसि आध्यात्मिकालोकसम्पाततो वञ्चितानि स्युः। तस्येश्वरप्रेम्णि भौगोलिकी प्रकारान्तरीया वा सीम-रेखा न विद्यते। श्रीरामकृष्णस्यापार्थिवं प्रेम विश्ववासिनां हृदये दिव्यां प्रेरणां सञ्चारयति।"

श्रीरामकृष्णदेवेन नैष्ठिकार्यब्राह्मणेन सताऽपि ख्रैस्तस्य, इस्लामी-यस्य धर्मस्य च साधनाऽनुष्ठिता। एतेनैकतः सर्वधर्माणां सत्यता स्थिरीकृता, द्वितीयतश्च संसारस्य सर्वेऽपि धर्माः सनातनवैदिकधर्म-स्यांशभूताः शाखारूपाश्च प्रमाणिताः। तथा श्रीमद्भगवद्गीतायां "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" इति श्रीकृष्णस्य वचनमपि सार्थकमभूत्। यतः,

२

जीससमोहम्मदप्रभृतयो महात्मानो भगवतः श्रीरामकृष्णस्य तेजोंऽश-सम्भवा एव ।

श्रीरामकृष्णेन सर्वत्र सार्वभौमवेदान्त-धर्म एवानुष्ठितः । स्वामिना विवेकानन्देन तद्वेदान्तधर्मसंक्षिप्तपरिचयं ददतैकत्र स्थाने प्रोक्तम्—"द्वैतम्, विशिष्टाद्वैतम्, अद्वैतं, चेति त्रयमेव वेदान्तधर्मस्य स्तररूपं विभिन्नभूमिकास्वरूपं वा । सांसारिकाः सर्वेऽपि धर्मा वेदान्तधर्मस्य तत्त्रितयस्तरान्तर्गताः सन्ति । अर्थात् सर्वेऽपि ते वेदान्तधर्मस्य विशिष्टाः शाखाः भवन्ति । यथा सर्वा अपि शाखाः एकस्मात् मूल-वृक्षादेव समुत्पन्नास्तथैव जागतिका निखिला अपि धर्मा वेदान्त-मूलका एव । द्वैतवाद एव यूरोपीय सेमिटिकजातीनां भाव आभ्यन्तरिकः ख्रैस्तेस्लामधर्मस्वरूपेण परिणतः । वेदान्तस्याद्वैतवादो योगानु-भूतिरूपेण बौद्धधर्मनामतोऽभिहितः । पुनश्चैते त्रयो मतवादा आर्य-जातीयाभ्यान्तरिकप्रयोजनमनुसृत्य विभिन्नसाधनानुष्ठानपद्धत्या हिन्दुधर्मनामतः परिणता अभूवन् । अतः संसारस्य सर्वेऽपि धर्माः सामूहिकरूपेण वेदान्तधर्मान्तर्गता एव ।

द्वैतम्, विशिष्टाद्वैतम्, अद्वैतम् इति वेदान्तभूमिकात्रयमतिक्रम्य न कोऽपि नवीनो धर्म उद्भवितुं शक्नोति । श्रीरामकृष्णदेवेन विभिन्न-धर्मसाधनायाः, सर्वधर्मसमन्वयस्य, "यावन्ति मतानि तावन्तो मार्गा" इति सत्यस्य च प्रतिष्ठया विविधधर्माणामेकाऽध्यात्मिकी भित्तिः संस्थापिता ।

'स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।
अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥"

इति प्रणाममन्त्राभ्यन्तरे श्रीविवेकानन्देन स्वामिना श्रीरामकृष्ण-देवस्य समस्तमपि जीवनं सूत्ररूपेण प्रकाशितमास्ते । एतस्य प्रणाम-मन्त्रस्य सार्थकोच्चारणं कुर्वन्तो वयं वर्तमानग्रन्थे वेदान्तमूर्तेः सशक्तिकस्य भगवतः श्रीरामकृष्णस्यातिसंक्षिप्तजीवनमालोचयिष्यामहे ।

—:❀:—

# श्रीरामकृष्णचरितम्

## १

प्राकृतिकनिखिलमाधुर्यधुरीणो वसन्त-ऋतुरासीत्। फाल्गुनमास-शुक्लद्वितीया तिथिः। समयश्च ब्राह्मो मुहूर्तः। हुगलीमण्डलान्तर्गते कामारपुकुरनाम्नि ग्रामे निर्धनस्यैकस्य ब्राह्मणस्य पर्णकुटीरे माङ्गलिक-शङ्खध्वनिरश्रूयत। मङ्गलध्वनिना चैतेन समस्तोऽप्यावसथो मुखरितो रोमाञ्चितश्चाभवत्। गृहाधिपतिः खुदिरामचट्टोपाध्यायोऽपि निशम्य तं शङ्खध्वनिं कस्यापि देवस्याविर्भावममन्यत। मातुश्चन्द्रमणिदेव्याः पावनं क्रोड़स्थलं स्वरोचिषा प्रकाशयन् एकः शिशुर्जनिमलभत। वङ्गीयस्य १२४२ अब्दस्य फाल्गुनमासीयषष्ठदिवसः, तदनुसारम् १८३६ ईशवीय हायनस्य फरवरीमासस्य सप्तदशी तारिका सौम्य-वासरश्चासीत्।

* * *

बालकमिमं केन्द्रीकृत्य लघुतरोऽपि कामारपुकुरो ग्रामो जगद्-विख्यातिमवाप। धर्मात्मा खुदिरामचट्टोपाध्याय इतः कतिपयवर्षपूर्वमेव ग्रामेऽत्र समाजगाम। एतदीयः पूर्वनिवासः कामारपुकुरतः क्रोशमात्र-दूरावस्थिते 'देरे'-नाम्नि ग्रामे समभूत्। चट्टोपाध्यायपरिवारो मध्यमश्रेणिकः। धान्यक्षेत्रं, गृहादिकं सर्वमपि तस्यासीत्। किन्तु सत्यनिष्ठो ब्राह्मणोऽयं मिथ्याभियोगे साक्ष्यादानात् तद्ग्रामप्रजापीड़क-भूस्वामिनो रामानन्दस्य क्रोधभाजनतामुपगतः, सर्वस्वग्राहं ग्रामान्निः-सारितः। उपवेशनस्यापि नासीत्किञ्चित्स्थानम्। प्रायश्चत्वारिंशद्वर्ष-

देशीयोऽसौ रामचन्द्रस्य श्रीरघुवीरस्यानन्यसेवकः खुदिरामः सर्वात्मना स्वेष्टदेवं संस्मरन् स्वकीयं पैत्रिकं सर्वस्वं परित्यज्य तद्ग्रामान्-निर्जगाम तथापि नासौ मार्गेऽटाट्यमानतां प्रपेदे। येन भगवता रघुवीरेण रामानन्दरायरूपं बिभ्रता तस्मै पीडा प्रदत्ता, तेनैव सुखलालगोस्वामिरूपेण कामारपुकुरे आश्रयोऽपि प्रदत्तः। खुदिरामस्य पारिवारिकी विपत्तिवार्तामाकर्ण्य तद्बालमित्रं गोस्वामी सुखलालः स्त्रीपुत्रकन्यादिसहितायास्मै स्वगेहस्यैकभागे निवस्तुं तत्कालमेवा-श्रयमर्पितवान्, स्वीयसुहृदः सांसारिकजीवनयात्रानिर्वाहार्थं "लक्ष्मीजला"-नाम्ना प्रसिद्धक्षेत्रतः एकबीघातोऽपि समधिक-मत्युर्वरक्षेत्रं कमपि नियमामन्तरैव सदाकालकृते प्रादाच्च। रामभक्त-खुदिरामस्य नेत्राभ्यामानन्दाश्रूणि प्रावहन्। प्रेममयस्य श्रीमतो भगवतो महतीमनुकम्पां मन्यमानस्यास्य हृदयं कृतज्ञतार्द्रमभूत्।

* * *

खुदिरामः, तत्कान्ता चन्द्रमणिः, पुत्रो रामकुमारः, कन्या कात्यायनी चेति सर्वे सुखलालसमर्पितसद्मनि ससुखमूषुरेव, किन्तु खुदिरामस्या-राध्यकुलदेवतायाः * श्रीशीतलादेव्या घटोऽपि तत्राश्रयमलभत। सांसा-रिकदुःखपरम्परया प्रपीडितोऽप्यसौ निजप्राणोपमां परमाराध्यदेवतां

---

* श्रीरघुवीरः खुदिरामस्य कुलदेवता। किन्तु तस्य गृहे श्रीरघुवीरस्य काचित् प्रतिमा प्रतिष्ठिता आसीत् न वा इत्यस्य किमपि प्रमाणं न लभ्यते। प्रत्येकस्यापि नैष्ठिकब्राह्मणस्य गृहे शालिग्रामः नित्यं समर्च्यते। भक्तस्य खुदिरामस्य गृहेऽपि शालिग्रामस्य प्रतिष्ठा स्वाभाविकी। एतदनुमीयते यत् पैत्रिकगृहपरित्यागकालेऽसौ सर्वा अपि गृहदेवताः शीतलादेव्या घटेन सह समानयत्। ततश्च देवादेशेन या रघुवीरशिला प्राप्ता तामपि समानीय निजगृहे स्थापितवान्। एकस्य ततोऽधिकस्य वा शालिग्रामस्य समर्चनं ब्राह्मणगृहे बोभूयते स्म।

नैव विसस्मार। निराश्रिततरीकर्णधारस्य भगवतः पाणिमापद्ग्रस्तोऽसौ समधिकं जग्राह। अनन्यशरणस्य भक्तस्य योगं क्षेमं च भगवान् स्वयं निर्वहति। उक्तं च भगवता—"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति। खुदिरामस्य सांसारिकं दैन्यमभावश्च शनैः शनैर्व्यपागच्छत्। "लक्ष्मीजला"-स्थिता स्वल्पीयसी भूमिः सुवर्णमफलत्। श्रीरघुवीरनामस्मरणपुरस्सरं खुदिरामो भूमौ तस्यां पूर्वं स्वहस्तेनैव धान्यबीजानां विरोपणं कृत्वा तदनन्तरं तत्कार्यार्थं कर्मकरान् नियोजयति स्म। एतत्स्वल्पभूमिभागसमुत्पन्नधान्यानि तदीयपारिवारिकावश्यकत्वादीनि पूरयित्वाऽभ्यागतातिथिसाधुभक्तसेवार्थमपि पर्याप्तान्यभूवन्। खुदिराम एतज्जानाति स्म यत् इदं सर्वमौदार्यं तदीयप्राणप्रियश्रीरघुवीरदयापरिणामस्वरूपमेवेति।

तदानीमेकस्मिन् दिने खुदिरामः कार्यवशात् ग्रामान्तरमगच्छत्। ततः परावर्तमानः कञ्चित्कालं विश्रामाय सुशीतलच्छायायुक्तस्यैकस्य वृक्षस्य तल उपाविशत्। तत्र च शरीरशैथिल्यात् शयानो निद्रामवाप। स्वप्नेऽसावपश्यद् यत् तदीय आराध्यदेवो नवदूर्वादलश्यामस्वरूपस्तन्निकटमुपस्थाय स्वकीयकमलकोमलांगुल्या समीपवर्तिधान्यक्षेत्रं संकेतयन् सकरुणार्द्रभावं व्याहरति—"बहोः कालादहमत्रावहेलितदशायां तिष्ठामि। मामितः स्वगृहं नय, तव पूजनसेवनादिकमधिगन्तुं मम महती समीहा" इति। खुदिरामः स्वप्नोत्थित उपविष्टो व्यचिन्तयद् यदेष स्वप्नो दैवी वाणी वा? विस्फारितनेत्राभ्यां चतुर्दिक्षु व्यलोकयत्। निकटवर्त्तिनि धान्यक्षेत्रे पातितदृष्टिरवागच्छद् यदिदमेव स्वप्नदृष्टं स्थानम्। अग्रे गच्छता तेन निभालितं यदेकस्याः सुन्दरशालिग्रामशिलाया उपरि विषधरः सर्प एको निजां फणां विस्तीर्योपविष्टो वर्तते। स्वप्नभ्रमो दूरीभूतः। किञ्चिदभ्यर्णमुपस्थिते तस्मिन् सर्पोऽदृश्यतां गतः। आवेगपूर्णमनाः खुदिरामो "जय राम" इति शब्दमुच्चारयन् शिलामेतां हस्ताभ्यां जग्राह। लक्षणानि विलोक्य रघुवीरशिलेयमिति निश्चित्य

हर्षोत्फुल्ललोचनः शिलां तां स्वहृदा समालिङ्ग्य स्वगृहमागत्य शास्त्रोक्तविधिना पूजागृहे प्रतिष्ठापयामास ।...

तदाप्रभृति खुदिरामस्य सर्वाधिकः समयस्तज्जाग्रद्देवतायाः पूजनवन्दनादिकार्येष्वेव व्यत्यगच्छत्। श्रीरघुवीरः समग्रं तच्चैतन्यमधिचकार। दिनानुदिनं तदीया तन्मयता ववृधे। बहुविधानि दिव्यदर्शनानि नानाऽलौकिकानुभूतयश्च खुदिरामं तन्मयमानन्दमयञ्चाकार्षुः। खुदिरामस्य सौम्यसमुज्ज्वलमूर्त्तिमीक्षमाणा ग्रामीणजनास्तं वरेण्यऋषिवत् श्रद्दधते स्म। ग्रामपथादागच्छन्तं तमवलोक्य तद्ग्रामवास्तव्या अयमागच्छतीति व्याहरन्तो मार्गमुज्झित्वैकतः स्थित्वा च तं ववन्दिरे। प्रतिदिनं प्रातः सायं च श्रीगायत्रीजपकाले ध्यानावस्थितचेतसः खुदिरामस्य आरक्तं वक्षःस्थलं तदीयप्रेमाश्रुस्नपितं समजायत। ब्राह्ममुहूर्ते पुष्पपात्रमादाय पुष्पावचयनप्रवृत्तेन तेन साकं तदीयाऽऽराध्यदेवी शीतलाऽपि धृतरक्तवसना बालिकेव भ्रमन्ती कुसुमचयने तत्साहाय्यं व्यदधात्। एतादृशं दिव्यदर्शनं खुदिरामजीवने सहजलभ्यमिव संवृत्तम्। तदीय आराध्यः रघुवीरस्तस्य समस्तां पार्थिवसम्पदं प्रणाश्य दैव्याः सम्पदोऽधिकारिणं तमकार्षीत्। तस्य हृदये न कोप्यभावः, खेदोऽभियोगो वा स्थानमगृह्णाद् यतोऽसौ दैव्याः सम्पदोऽधिकारितां प्रपेदे।...

एकस्मिन् दिवसे खुदिरामो नैजं भागिनेयं रामचन्द्रं द्रष्टुं कामारपुकुरतो मेदिनीपुरं गन्तुं प्रस्थितः। दीर्घकालं यावत् रामचन्द्रस्य कोऽपि वृत्तान्तस्तस्य विदितो नासीत्। विंशतिक्रोशपर्यन्तं पद्भ्यामेव गन्तव्यमित्यतः प्रत्यूष एवासौ प्रस्थितः। तदानीं माघस्यावसानं फाल्गुनस्यारम्भो वा आसीत्। दिनस्य दशवादनकालं यावद् गच्छन्नसौ मार्गसमीपस्थं नूतनपत्रसमन्वितं विल्ववृक्षमेकमपश्यत्। तस्मिन् समये माकारपुकुरस्थाः सर्वेऽपि विल्वद्रुमा निष्पत्रा अभूवन्। इमानि कोमलविल्वपत्राणि विलोक्य तन्मन आनन्देन नरीनृत्यते स्म, चेतसि

शिवपूजाभावना समुदियाय। मेदिनीपुरगमनवृत्तान्तो विस्मृतः। समीपस्थग्रामत एकं नवीनं वस्त्रखण्डं वंशनिर्मितपुष्पपात्रं च क्रीत्वा, पात्रं च सुन्दरकोमलविल्वपत्रपरिपूर्णं विधाय, आर्द्रेण वस्त्रखण्डेन पिधाय चापराह्णे त्रिवादनकाले पुनः स्वगृहं परावयृते।

असामयिकं तत्परावर्त्तनमवलोक्य तदीया धर्मपत्नी चन्द्रादेवी सविस्मयं तमपृच्छत्—"किं भवान् मेदिनीपुरं न गतवान्? परावर्तनस्य किं कारणम्? भवता भोजनमपि न कृतं भवेत्?"

"न पश्यसि, कीदृङ्मनोहराणि विल्वपत्राणि? विलोकितान्येतानि कथं त्यक्तव्यानि स्यु" रित्युदीर्य द्रुतं स्नात्वा खुदिरामः शिवपूजार्थमुपाविशत्। शिवपूजां विधाय हर्षोत्फुल्लचेतसा तेन प्राणाधिकप्रियतमः श्रीरघुवीरः शीतलादेवी च समलञ्चक्राते। देवतुल्यं स्वामिनं प्रति श्रद्धागर्ववत्याश्चन्द्राया हृदयं हर्षपरिप्लुतं नयने च साश्रूणी सम्वृत्ते।...

कामरपुकुरेऽत्र खुदिरामस्य नववर्षाणि व्यत्यगुः। ज्येष्ठस्तनयो रामकुमारो युवावस्थामधिगतः। कन्या कात्यायन्यपि विवाहयोग्या संवृत्ता। कामारपुकुरतः प्रायः पश्चिमोत्तरदिक्कोणे क्रोशमात्रं दूरावस्थिते "आनूड़" ग्रामे केनारामवन्द्योपाध्यायेन साकं खुदिरामेण कात्यायनी समुद्वाहिता। केनारामभगिन्या च सार्धं रामकुमारस्य परिणयोऽभूत्।

रामकुमारः क्रमेण व्याकरण-साहित्य-स्मृतिशास्त्रेषु पारङ्गतो भूत्वा शनैः शनैः पारिवारिकं भारमप्यवहत्। श्रीरघुवीरानुकम्पया खुदिरामस्य पारिवारिकी दशा साधीयसी संजाता। दीर्घकालतस्तन्मनोनिहिततीर्थदर्शनसमीहा जागर्तिमवाप्ता। सम्भवतो वङ्गाब्दस्य १२३० वर्षेऽसौ सेतुबन्धरामेश्वरदर्शनार्थं पदातिश्चचाल। श्रीरामेश्वरदर्शनं कृत्वा दक्षिणदेशस्यानेकतीर्थदर्शनान्तरं सेतुबन्धरामेश्वरतो वाणलिङ्गशिवमादायैकवर्षात्परं स्वगृहं समायातः। श्रीरघुवीरस्य शीतलायाश्च सन्निधावेव वाणेश्वरः शिवोऽपि प्रतिष्ठितोऽभवत्। ततश्च प्रायशः षोड़शवर्षानन्तरं

१२३२ वङ्गाब्दे चन्द्रमणिदेवी पुत्ररत्नमपरमप्येकं प्रासोष्ट। रामेश्वरतीर्थ-परावर्त्तनात्परं पुत्रजन्मेति खुदिरामेण शिशोर्नाम 'रामेश्वर' इति विहितम्।

* * *

कात्यायनी अतीव रोगग्रस्ता। तामवलोकयितुं खुदिराम-स्तदीयश्वसुरपुरम् "आनूड़"-ग्राममगच्छत्। रुग्णाया हावभावमालोक्य खुदिरामस्य भूतावेशसन्देहो जातः। स च ध्यानस्थो भूत्वा प्रेतं संबोध्य व्याजहार—"त्वं भूतो वा प्रेतो वा दानवो वा योऽसि सोऽसि, कारणमन्तरेणैव मम तनूजायाः कष्टं कथं ददासि? एतां विहाय स्थानान्तरं गच्छेति ममादेशः"। कत्यायनीमुखेन प्रेतात्मा प्रत्युवाच —"अहं महत्कष्टमनुभवामि, यदि भवान् गयायां पिण्डं दत्वा मां समुद्धरेत्, तदानीमिमां विहाय स्थानान्तरं गन्तुं शक्नोमि।"

प्रेतात्मनः कातरोक्तिमाकर्ण्य दुःखितः खुदिरामः प्रत्यवादीत्— "मम पिण्डदानेन यदि तवोद्धारो भवेत् तर्हि नूनमहं तुभ्यं पिण्डं दास्यामि, परन्तु तेन तवोद्धारो भविष्यतीत्यत्र किं प्रमाणम्?" श्रुत्वैतत् प्रेतो रुदन् प्रोवाच—"भवतैतत्प्रमाणमवश्यं प्राप्स्यते, एतत्समीपस्थनिम्बवृक्षस्यैकां गुरुशाखां भङ्क्त्वाऽहं प्रस्थास्ये" इति।

खुदिरामद्वारा गयापिण्डदानानन्तरं एकस्मिन्दिने मध्याह्ने निम्ब-वृक्षशाखैकाऽकस्मात् चटपटाशब्दं कुर्वाणा समत्रुट्यत्। कात्यायनी च पूर्णरूपेण स्वस्थाऽभवत्। प्रेतदुःखमोचनभावनैव खुदिरामाय गयागमनप्रेरणामदात्। परन्तु तत्सम्बद्धं दैवमिङ्गितमस्तीति को जानाति स्म?

१२४१ वङ्गाब्दस्य शीतकालान्ते खुदिरामेण गयायात्रा कृता। तदानीं सम्पूर्णोऽपि पन्थाः पद्भ्यामेव गम्यते स्म। चैत्रमासस्य प्रारम्भेऽसौ गयाधाम प्रापत्। गयागमनात् प्राक् काशीविश्वनाथदर्शनमप्यन्व-तिष्ठत्। मधुमास एव गयाधाम्नि पिण्डदानस्य प्रशस्तः समयः।

प्रायो मासं यावत् पुण्यधाम्नि स्थित्वा तेन शास्त्रविधिमनुसृत्य पितृकार्यं सम्पादितम्। पितृमातृपूर्वजानां पूर्णतया ऋणान्यपाकृत्य खुदिरामस्यान्तरात्मा नितरां प्रासीदत्। ऋणभारावतरणेन प्रसन्नमनसो भगवतोऽपारकरुणां संस्मरतश्च तस्यानन्देन शरीरं पुलकितं संवृत्तम्, निश्चिन्तो रात्रौ निद्रितोऽसौ स्वप्नमपश्यत्—"श्रीमन्दिरे विष्णुपाद-पद्मोपरि पिण्डदानं कुर्वतस्तस्य पितरो ज्योतिर्मयदेहधारिणः पिण्डान् गृह्णन्ति" इति। स्वप्नदृश्यमिदमवलोक्य तेन सीमातिक्रान्त आनन्दोऽनुभूतः।

क्षणानन्तरं पुनरप्यपश्यत्—मन्दिरं स्निग्धज्योतिषा समुद्भासित-मस्ति। तत्र च समुज्ज्वलस्वर्णमयसिंहासने दिव्यकान्तिर्ज्योतिर्मयविग्रह-धारी आनन्दघनः परमपुरुषो विराजते, परितश्च सूक्ष्मदेहधारिणो बद्धहस्तास्तं स्तुवन्ति; वरेण्यदेवोऽयं स्निग्धप्रसन्ननयनः सर्वानवलो-कयति। नितरामानन्दितचेतसा तेन संकेतद्वारा खुदिरामो निजाभ्यर्णमाकारितः। आनन्दविह्वलं खुदिरामं प्ररुदन्तमालोक्य दिव्यपुरुषोऽसौ सुमधुरवचसा खुदिराममुवाच—"खुदिराम! तव भक्त्यातीव प्रसन्नोऽस्मि। सेवाग्रहणार्थमहं तव पुत्ररूपेणावतरिष्यामि"।

सकरुणं खुदिरामः प्रत्युवाच—"प्रभो! दीनोऽहं, भवत्सेवां कथमिव कर्त्तुं शक्नोमि?" परमदेवेन स्नेहार्द्रकण्ठेन प्रत्युक्तम्—"बिभेषि कथं विप्र! यथाशक्त्यनुष्ठितया तव सपर्यया परितुष्टो भवि-ष्यामि"। स्तब्धीभूतस्य खुदिरामस्य निद्रा भग्ना, आनन्दविस्मयान्वितः पर्यालोचयत्-"देवस्वप्नो न मिथ्या भवति, किं भगवान् मम पुत्ररूपेणा-वतरिष्यति?" एतद्व्यतिरिक्तं न तेन किञ्चिदन्यदालोचितम्, आनन्दोल्लासविह्वलेन मनसि विचारितम्—"अकिंचनस्य मम भाग्ये किमेतत्सम्भवति?" कियद्दिनानन्तरं स्वगृहमागतोऽपि स्वप्नवृत्तान्तं स्वहृदयमणिमञ्जूषायामेवागोपायत्।...

खुदिरामस्य गयाधाम्नि स्थितावेव माता चन्द्रमणिरेकस्मिन् दिने

स्वगृहनिकटस्थयोगिशिवमन्दिरसन्निधौ वर्तमाना स्वीयान्तरङ्गभूतया 'धनी'-नाम्न्या कयाचन स्त्रिया सह वार्त्तां कुर्वाणा अकस्मादपश्यत् यन्महादेवाङ्गसमुद्भूतं दिव्यं ज्योतिर्मन्दिरमुद्भासयत् क्रमशः तरङ्गाकारेण घनीभूतं तदुदरे प्रविष्टमिति। तदानीं सा मूर्च्छामवाप।... दिनेषु गच्छत्सु चन्द्रादेव्येदमनुभूतं यत् ज्योतिषस्तस्योदरे प्रविष्टत्वाद् गर्भवती संवृत्ताऽस्मीति।...

भगवान् विष्णुः पुत्ररूपेण मम गृहे समागमिष्यतीति वृत्तान्तः खुदिरामेण गयाधाम्न्येव विदितोऽभवत्। इतश्च ज्योतिःस्वरूपः शिवश्चन्द्रमणेरुदरं प्रविष्टः। स्वरूपतः शिवो विष्णुर्वा एक एव। केवलं नाममात्रे भेदः। उक्तं च केनापि—

"उभयोरेका प्रकृतिः प्रत्ययभेदेन भिद्यते भेदः।
कलयति कश्चन मूढो हरिहरभेदं विनाशास्त्रम्॥" इति

परमपितुः परमेश्वरस्य ब्रह्मा, विष्णुः, शिवश्च तिस्रोऽपीमे विशिष्टामूर्त्तयः परस्परमभिन्नाश्चात एव नानारूपैर्जगति प्राकट्यमापद्यन्ते।...

कामारपुकुरशिवमन्दिरघटितघटनासमनन्तरमनेकेषां देवानां देवीनां च स्वप्ने जागरणे च दर्शनं चन्द्राया जीवनस्य नित्यघटना समभवत्। देवाश्च ते गृहजना इव संबभूवुः। तया सहाऽशरीरिणस्ते भ्राम्यन्ति स्म। तस्याः शरीरतः सुगन्धो दिक्षु प्रासरत्। कदाकदाचिदियं नूपुरध्वनिमशरीरिणीं वाचमाकर्ण्य च स्तम्भिताऽजायत। दयादाक्षिण्यसपर्य्यादिभावनायाः प्रत्यक्षमूर्त्याश्चन्द्रादेव्या वात्सल्यभावो देवमानवनिर्विशेषं दिनानुदिनमवर्धत। कस्यचन दीनताम्लानमुखमवलोक्य तदन्तःकरणं दयार्द्रं जातं मातृभावश्च प्रबलायते स्म।...

गयाधामतः परावर्त्तमानस्य खुदिरामस्य दृष्टिः सर्वतः प्रथमं स्वीयसहधर्मिण्यामपतत्। स च तस्या देहे मनसि च परिवर्तनमपश्यत्। सरलचित्तया चन्द्रया स्वपतये साधारणीं वार्त्तामपि अश्रावयित्वा नानुभूयते स्म सन्तोषः। पत्युरनुपस्थितिकाले घटितामखिलघटनां

सा पतिं श्रावितवती। पत्नीमुखात् वृत्तांतमिममाकर्ण्य गयाधामस्वप्न-वास्तविकत्वे खुदिरामसंशयः समूलं निराकृतः। स भीतां चिंतितां च स्वपत्नीमाश्वासयन् व्याजहार यत्—गयाधामनि श्रीभगवानलौकिकोपायेन मामवाबोधयद् यदसौ मम पुत्ररूपेण समवतरिष्यतीति। एतदाकर्ण्य आनन्दमग्नया चन्द्रया विचारितं—किमेतसत्सम्भवम्?

ज्योतिर्मयपरमपुरुषगर्भधारणानन्तरं चन्द्राशरीरकान्तिः सर्वेषां दृष्टिमाचकर्ष। समवयस्काः सहचर्यः पारस्परिकवार्तायामिदमूचुः—"प्रौढ़ावस्थायामीदृशं सौन्दर्य्यम्? ब्राह्मणीयमस्मिन्नवसरे जीविष्यति न वेति सन्देहः।"

चन्द्रादेव्या गर्भदिवसवृद्ध्या साकमलौकिकदेवदर्शनेष्वपि वृद्धिः समजायत। एकस्मिन् दिवसे तया हंसारूढैका देवमूर्त्तिरवलोकिता। भानोः प्रखरसन्तापेन तद्देवस्य करुणामयमाननं रक्ताभमदृश्यत। विलोक्य चैतच्चन्द्रादेव्या हृदयं स्नेहार्द्रमभूत्, उक्तवती च—"अये पुत्र हंसारूढ़देव! सन्तापेन तव वदनं शुष्कतामगच्छत्, मम गृहे जलार्द्रं पर्युषितमोदनमस्ति, तत् भुक्त्वा स्वकीयहृदयं किंचित् शीतलं कुरु।" एतत्स्नेहमयं भाषणमाकर्ण्य मधुरं विहस्य च मूर्त्तिरसावन्तर्धानमवाप। एतादृशं देवदर्शनं चन्द्राया अनायासलभ्यमबोभूयत।

खुदिरामः सविस्मयं स्वसहधर्मिणीमुखेनोदन्तमिमं निशम्य नितरामानन्दमग्नोऽजायत। पुलकितमनसा च तेन तस्य शुभवासरस्य भास्वरज्योतिषोऽरुणिमरूपदिव्यशिशु-दर्शनस्य च प्रतीक्षा समक्रियत।

* * *

वंगीयफाल्गुनषष्ठदिवसे सौम्यवासरेऽर्धघटिकामात्ररात्र्यवशेषे प्रसववेदनामनुभवन्ती चन्द्रा धनी-धात्री-साहाय्येन धान्यकुट्टस्थान-माश्रयन्ती पुत्ररत्नमेकं प्रसुषुवे। प्रसूतायाः समयोचितपरिचर्यानन्तरं धन्या धात्र्या विलोकितं यत् नवजातः शिशुरदृश्योऽस्ति। अत्यन्त-

व्यस्ततयाऽन्वेषणेन दृष्टं यत् शिशुरयं धान्यपाकचुल्लिकाया भस्मनि तिष्ठतीति। शान्तं विभूतिभूषितं बालकमेनं क्रोडीकृत्य धन्याऽपूर्वोऽयं बालः षण्मासदेशीय इवावलोकितः।···यः श्रीरामकृष्णस्त्यागिसाम्राज्य-चक्रवर्तिन आदर्शजीवनं दर्शितवान् स जातमात्र एव त्यागिराज-श्रीशंकर इवात्मानं विभूतिभूषितांगं कृतवान्।

शास्त्रमर्मज्ञः खुदिरामो बालकस्यास्यैतादृशं शुभजन्मलग्नमालोक्य स्वयं निर्णिनाय यत् स्वप्रतिज्ञानुसारं श्रीगदाधर एवायमाविरस्त्यतोऽस्य गदाधर इति नाम निर्दिदेश। (तदनन्तरं प्रख्यातज्योतिर्विद्भिः समागत्य नवजातकजन्मकालीनग्रहगणनया निश्चितमिदं यद् बाल-कोऽयं भविष्यति परमो धर्मवेत्ता, पूज्यः, अहर्निशं पुण्यकार्योनुष्ठान-परायणः, संख्यातीतशिष्यवर्गसेवितः, कुत्रापि देवमन्दिरे निवसन् नवीनं धर्ममार्गं प्रवर्त्तयिष्यति; नारायणांशसम्भूतमहापुरुषरूपेण विख्यातो मानवसमाजस्य परिपूजनीयो भविष्यतीति।* प्रतिदिनं

* चरित्रनायकस्य रामकृष्णनामनि विद्यते महान् मतभेदः। स्वामी सारदानन्दो लीलाप्रसंगे निर्दिशति—"अस्मासु केषाञ्चनायं विमर्शो यत् संन्यासदीक्षावसरे श्रीमता तोतापुरीगोस्वामिना 'रामकृष्ण' इति नाम निर्दिष्टम्। अपरे मन्यन्ते यत् परमहंसदेवपरमभक्तः सेवकश्च श्रीमान् मथुरामोहनो 'राम-कृष्ण' इति नामधेयं चक्रे।"

तोतापुरीमहाशयो १२७१ वङ्गाब्दे दक्षिणेश्वरमागतः। परं दक्षिणेश्वर-मन्दिरकार्यालयसाहाय्यदानपुस्तिकायां १२६५ वङ्गाब्दे तदनुसारं १८५८ खृष्टाब्दे रामकृष्णभट्टाचार्यरूपेण परमहंसदेवस्य नामनिर्देशो निभाल्यते। वृत्तान्तोऽयं कथामृतस्य द्वितीयभागे सप्तमसंस्करणे लभ्यते। तदानीं श्रीराम-कृष्णो भट्टाचार्यः श्रीराधाकान्तमन्दिरस्य पूजकः, पञ्चमुद्रात्मकं मासिकं वेतनं च लभते स्म। सुतरां तोतापुरीमहाशयस्य दक्षिणेश्वरसमागमात् प्रायशः सप्तहायनतः प्रागेव रामकृष्णनामसमुल्लेखो दरीदृश्यते। अतः 'रामकृष्ण' इति नाम तोतापुरीगोस्वामिना न दत्तमिति निश्चीयते।

शिशुरयं चन्द्रकलेव प्रावर्धत। स्वल्पवयस्कोऽप्ययं बालको निर्लिप्त-गृहस्थखुदिराममपि स्वीयेनालौकिकेनाकर्षणेन स्नेहपाशे बबन्ध। अपूर्वशोभाशालिनं शिशुमेनं स निजनयनागोचरं नैव कर्त्तुं प्रभवति स्म। मातुश्चन्द्रमणिदेव्यास्तु बालकोऽसौ प्राणेभ्योऽप्यधिकः प्रेयानासीत्। बालकदिव्याकर्षणवशीभूतौ केवलं तत्पितरावेव नास्ताम्, प्रत्युत सर्वेऽपि ग्रामवासिनः पुरुषाः स्त्रियश्च शिशुसौन्दर्य्येण प्रभाविता आकृष्टाश्च समभूवन्।

भगवता श्रीकृष्णेन स्वजन्मत एवालौकिक्यो लीलाः प्रदर्शिताः, किन्तु तत्पित्रोर्हृदयं तदुपरि वात्सल्यरसाप्लुतमेवासीत्। तौ किल भगवन्तं श्रीकृष्णं स्वकीयस्नेहघनगोपालातिरिक्तं न कमप्यन्य-ममन्येताम्। गदाधरजन्मतः प्रागेव ब्राह्मणो ब्राह्मणी च बहुविधा-मलौकिकीं लीलामपश्यताम्। तथापि वात्सल्यभावातिरिक्तं दिव्यानां श्रवणदर्शनादीनां न कोऽपि प्रभावस्तयोरुपर्यपतत्।

---

परवर्तिनि समये परमहंसदेवमुखादेव बहुधा समाकर्णितं यत् तदीय-सपर्याविधिमवलोक्य मुग्धो भवन् परमहंसपितृव्यदेवज्येष्ठपुत्रो हलधारी बहुवार-मिदमुक्तवान् यत्—"रामकृष्ण, मया, त्वं सम्यक् ज्ञात" इति। (लीला प्र०)। घटनेयं तोतापुरीमहोदयस्य दक्षिणेश्वरागमनात् पूर्वकालीना, परमहंसदेव-दिव्योन्माददशासामयिकी च।

मथुरामोहनेन रामकृष्णेति नाम निर्दिष्टमित्यत्र नास्ति किमपि प्रमाणम्।
माणिकरामः, खुदिरामः, रामशीला, निधिरामः, रामकनाई, रामकुमारः, रामेश्वरः··· । रामाक्षयः, रामलालः, शिवरामश्चेति परमहंसदेव वंशतालिका वेद्या।

अत एवोपर्युक्तनामसूचीविलोकनेनेदमवगम्यते यत् तदीयं रामकृष्णेति नाम वंशानुक्रमिकमस्ति। अन्येऽत्र बाल्यकालत एव परमहंसदेवस्य नाम गदाधरो रामकृष्णश्चेति निर्देक्ष्यते।

बालकस्यावस्था प्रायोऽष्टमासदेशीयाऽस्ति । माता चन्द्रमणिर्दुग्धं पाययित्वा मशकहरीनिम्नभागे शिशुमशाययत् । बालकं प्रगाढ़निद्रा-वशीभूतमालोक्य सा गृहकार्येषु व्यापृताऽभवत् । मध्ये मध्ये गत्वा शिशुमपश्यदपि । एकदा समागत्यासौ बालकं मशकहरीतले न विलोक-यन्ती. तत्स्थाने परिपूर्णकायमेकं पुरुषं निरीक्ष्य भयाकुला चीत्कार-मकरोत् । तस्याश्चीत्कृतिं निशम्य खुदिरामो व्याकुलमना धावन्नु-पातिष्ठत् । गृहिण्या सह गृहाभ्यन्तरे प्रविष्टेन तेन बालोऽसौ पुनरपि मशकहरीनिम्नभागे शयानो निभालितः । श्रीरामकृष्णस्य जन्मत एव तस्य देहं मनोऽवलम्ब्यैदृश्योऽनेकविधालौकिकघटना घटिताः । एतत् वयमग्रे द्रक्ष्यामः ।...

जानुभ्यां प्रसर्पणं समाप्य गदाधरः पद्भ्यां गन्तुं प्रारभत । मातुः स्नेहचुम्बनाभिलाषया तदञ्चलमाश्रित्योत्तिष्ठति । माता च सस्नेहं परिष्वज्य चुम्बति । खुदिरामस्य चन्द्रमणेश्च नेत्रमणिर्गदाधरः शनैः शनैः प्रवधमानः अतीव चंचलोऽभवत् । माता बालकं धौतोत्तरीय-परिवेष्टितं कारं कारं प्रासीदत् । वेशेनामुना बालः सातिशयं शोभमानो बालगौरङ्ग इवादृश्यत । किंचित्कालानन्तरं गदाधरस्य क्रीड़ा-सह-चरीवैका सोदरा समजायत ।...

गदाधरेणेदानीं किमपि किमप्यस्पष्टशब्दोच्चारणं शिक्षितम् । खुदिरामस्तं क्रोड़ीकृत्य स्वपूर्वपुरुषाणां नामानि देव-देवीनां च प्रणामस्तवादिसम्बद्धानि लघुरूपाणि पद्यानि च श्रावयन् पाठयति । रामायणमहाभारतयोर्विचित्रमुपाख्यानं वारमेकमाकर्ण्यैव गदाधरः श्रावयति । बालकस्य तादृशं श्रुतिधरत्वमवलोक्य खुदिरामो नितरां प्रसीदन् आश्चर्यचकितोऽभूत् । एवं किल पित्रा बालकं बहुप्रकारेण शिक्षयितुं प्रववृते । परन्तु बालकस्याङ्कावर्त्तनशिक्षणे रुचिर्नासीत् । बालकमवगत्य खुदिरामेण प्रसह्यकारिता नाश्रिता । पिता केवलं श्रावयति स्म स्तवमात्रमेव । अल्पीयसैव कालेन गदाधरेण बहु-शिक्षितम् ।

पंचमेऽब्दे खुदीरामेण यथाविधि विद्यारम्भं कारयित्वा बालकः पाठशालायां प्रवेशितः। गृहसन्निधाने ग्राम एव ग्रामभूपतिलाहा-महादयस्य विशालमण्डपे पाठशाला आसीत्, यत्र द्विसन्ध्यमेव शिक्षा दीयते स्म। समवयस्कबालकसंगेन गदाधरो नितरां प्रासीदत्। पाठशालायां लेखनपाठनातिरिक्तं क्रीड़ाया अपि सुन्दरसौविध्य-मभवत्। पाठशालावकाशकाले सहचरैः साकं स क्रीड़ामारभत।

पाठशालायां गदाधरस्य समीचीनतया शिक्षणं प्राचलत्। अल्पी-यसा समयेनैव तेन साधारणं लेखनपठनादिकं शिक्षितम्। अंक-गणिते तस्य मनो नारमत। बालकस्य प्रतिभाया विकासो नित्य-नवीनोद्भावनशक्तौ, अनुकरणप्रियत्व-देवदेवीमूर्त्तिनिर्माण-चित्रांकनेपु च पर्यदृश्यत। एकवारं श्रुतं दृष्टं वा गदाधरो न विस्मरति। तस्य ग्रामे कथाप्रवचनानि नाटकानि यात्रामण्डलीगानानि च प्रायशः अभूवन्। भजननाटकयात्राभिनयशास्त्रोपाख्यानादीनि समाकर्ण्य निरीक्ष्य च सर्वमिदमनायासेनैव गदाधरेण सुशिक्षितम्। खुदिरामेण ध्यानप्रदानपूर्वकं दृष्ट्वा बालकस्य निर्भीकत्वमकपटत्वं च बहुवार-मनुभूतम्। गदाधरः स्वापराधं न गोपायति, प्राणभयेनापि नैव कदाप्यसत्यमुदीरयति। विशेषतो बालकस्य सहजस्वाभाविकसरल-देवभक्तिस्तदीयजन्मसम्बन्धीयगयाधामस्वप्नवृत्तान्तं सदैव खुदिराम-मस्मारयत्।...

कुसुमकलिकायां सञ्चितसौरभप्रमाणं तद्विकासत एव समुप-लभ्यते, सुगन्धपरिपूरितोच्छ्वास इव गदाधरस्येश्वरीयस्वरूपप्रकाशः कदाऽजायतेत्यस्य निर्णयो नितरां काठिन्यमभजत्। रामकृष्णस्य जीवने दिव्यभावावेशप्रथमविकासस्तदीयातिशैशवदशायामेव परि-लक्षितः। तस्य षड्वर्षावस्थायामेव, प्रथम ईश्वरावेशः समदृश्यत। अवस्थायामत्र प्रायशोऽन्यबालकाः क्रीड़ास्वेव संरता भवन्ति।...

स्वकीये परवर्त्तिनि जीवने घटितायाः स्वसम्बन्धिन्या घटनायाः

दक्षिणेश्वरे स्वयमेव तेन समुल्लेखः कृतो विद्यते, तथा हि—"स हि ज्येष्ठस्याषाढ़स्य वा मासोऽस्ति। षड्वर्षदेशीयोऽहमेकदा प्रातःकाले एकस्मिन् लघीयसि पात्रे तण्डुलभर्जनं खादन् कृषिबन्धोपरि गच्छन्नासम्। आकाशे सजलो मेघखण्ड एकः समदृश्यत। अश्नतैव मयाऽसौ दृष्टः। वर्धमानेन तेन मेघखण्डेन सम्पूर्णोऽप्याकाशः समाच्छादितोऽभूत्। तदानीमेव दुग्धधवला बलाकापङ्क्तयस्तत्तले उड्डीयमानाः कुत्रापि गच्छन्त्योऽभूवन्। दृश्यमिदमद्भुतमवलोक्य तन्मयोऽहमाविष्ट इव ज्ञानशून्यो भवन्नपतम्। तण्डुलभर्जनानि परितो बन्धं विकीर्णानि। भावावेशदशायामस्यां कियत्कालं यावदहमासमिति न निश्चेतुं शक्यते। लोकैस्तत्र संज्ञाशून्यः पतितोऽहम् इति निरीक्ष्य गृहं प्रापितः। अयमेव मे प्रथमो भावावेशः।" प्राकृतिकसौन्दर्ये सौन्दर्यनिधानस्य भगवतो दर्शनानन्दमनुभूय गदाधरस्यान्तःकरणं भावावेशपरिपूर्णमभूत्। उच्यते च "परब्रह्मस्वरूपायाः प्रकृतेरपि दर्शनात्। प्राप्नोति महतां स्वान्तं भावावेशनिमग्नताम् ॥"

वृत्तान्तेनानेन नितरामुद्विग्नः खुदिरामश्चन्द्रादेवी च। ताभ्यामवधारितं यदयं कस्याश्चनोपदेवताया आवेशोऽपस्माररोगो वा भवेदिति। यद्यपि गदाधरो मातापितरावुवाच—"नाहं चेतनाशून्योऽभवम्, तदानीं मदीयं मन एकस्मिन्नपूर्वानंदे निमग्नमासीत्, एतादृशाभिनवभावलीनतापरिणामेन ममेयं दशा जाता" इति। तथापि मातापितृभ्यां शांतिस्वस्त्ययनौषधिसेवनव्यवस्था सम्पादिता।

* * *

तत. प्रायशः सार्धहायनानन्तरं कामारपुकुरपुरे चट्टोपाध्यायपरिवारे महती शोकघटनैका घटिता। तया च सर्वैरेव किङ्कर्त्तव्यविमूढ़ता समासादिता। खुदिरामस्याकस्मिको मृत्युरभवत्। ६८-वर्षदेशीयोऽयम् अस्वस्थशरीरोऽपि स्वीयभागिनेयरामचन्द्रस्य सेलामपुरीयावासगृहे शारदीयदुर्गापूजावसरे प्रत्यब्दमिव गतोऽभवत्। तेन साकमास्ते ज्येष्ठ-

पुत्रो रामकुमारः। तत्र गमनानन्तरम् अस्वस्थमपि तदीयं शरीरमसाध्य-संग्रहणीरोगसमाक्रान्तमभूत्। रोगः प्रावर्धत। पूजादिवसाः कथञ्चिद् व्यतीताः। विजयदशमीदिने प्रतिमाविसर्जनतः प्रागेव तस्य वाणी निरुद्धा चैतन्यं च तिरोहितम्। प्रतिमां विसर्ज्य समायातो रामचन्द्रोऽवालोकयद् यन्मातुलस्यांतिमसमयः समुपस्थितो वर्त्तत इति। रामचन्द्रो रुदन् प्रोवाच—"मातुल! त्वया सदैव श्रीरघुवीरः स्मर्यते स्म, साम्प्रतं कथं न स्मर्यते?" रघुवीरनाम समाकर्णनसमकालमेव खुदिरामः सचेतनो जातः। कम्पितस्वरेणासौ प्रतिजगाद—"कोऽसि रामचन्द्र! प्रतिमां विसर्ज्य समागतः। मामुत्थाप्योपवेशय। अहमुपविश्य देहं त्यक्ष्यामि?" इति। उपवेशितश्च परिपूतगम्भीरस्वरेण वारत्रयं श्रीरघुवीरनाम समुच्चारयन् समाहितचेताः खुदिरामः प्राणान् विससर्ज। चिराय च श्रीरामचन्द्रचरणसरसीरुहेषु चञ्चरीकतामापन्नो मुक्तिमवाप।

—:*:—

कामारपुकुरस्य लघुरप्ययं ब्राह्मणपरिवारो निर्धनोऽपि दुःखितो नासीत्। खुदीरामस्य राममयेन जीवनेन निरन्तरमानन्दविकासोऽजायत। सौम्यमूर्त्तिरस्य न केवलं निजपरिवाराय, प्रत्युत सकलेभ्योऽपि ग्राम-वासिजनेभ्यो महान्तमानन्दं वितरति स्म। खुदिरामस्यासामयिकेन मृत्युना गदाधरस्य हृदयं नितरां विव्यथे। स्नेहमयस्य पितुः खुदिरामस्य देवोपमजीवनेन गदाधरस्य जीवनमपि प्रभावितं बभूव। प्रेममयो जनको गदाधरस्य ज्ञानगुरुरप्यभवत्। गदाधरः पितरमादर्शमानवं, गदाधरं च खुदिरामः शिशुरूपं भगवन्तमपश्यत्।

श्रीभगवान् व्यासो लक्षश्लोकात्मकमहाभारते संसारस्य यावद्घ-टनावर्णनानन्तरं तस्य वास्तविकं स्वरूपमुद्घाटयन्नेकस्मिन् श्लोके उक्तवान्—

'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्" इति।

पितुः परलोकप्रयाणेन गदाधरस्य प्रज्ञामये मनसि सांसारिक्या अनित्यताया वास्तविकं स्वरूपमुद्घाटितमभूत्। "न धनेन न प्रजया त्यागेनैके अमृतत्वमानशुः" इत्याप्तवाक्यं गदाधरमानसमन्दिरे झङ्कृतमिवाभूत्।

गौतमबुद्धेनापि वार्धक्यव्याधिमृत्यूनवलोक्य जीवनस्यानित्यत्वमुप-लब्धम्। यत् किल दृश्यं गौतमस्य प्रौढे मनसि संसारस्य वास्तविकं स्वरूपं प्राकाशयत् यतिजीवनप्रेरणां यथा चायच्छत्, तथैव पितृमरणरूपा

एकैव साधारणघटना सांसारिकविषयेभ्यस्तीव्रं वैराग्यं समुत्पादयन्ती गदाधरं विरक्तमनसमकार्षीत् ।

(बालकस्य हास्यप्रियत्वं नृत्यगीतादिष्वासक्तिश्च गम्भीरभावुकतायां परिणनाम । ततः प्रभृत्येव प्रायशः बालकं भूतिनहरश्मशाने माणिकस्य राज्ञो रसालकाननादिनिर्जनस्थानेषु च एकाकिनं पर्यटन्तं लोका व्यलोकयन् । किन्तु तन्मनसि वैराग्याग्निशिखा प्रज्वलतीति न कश्चिज्जानीयादिति बाह्यव्यवहारादिषु सावधानो गदाधरो मातृसमीपे नितरां सतर्कतामध्यगच्छत् । मातृसान्निध्यमुपेयुषो गदाधरस्य देवसेवागृहकार्यादिषु च जननीसाहाय्यदानं नित्यकर्त्तव्यमिव संवृत्तम् ।)

श्रीपुरीधामगमनमार्गस्तद्ग्रामान् सन्निधत्ते स्म । प्रत्यब्दमनेके निर्धना वैराग्यनिरताः साधवश्च तन्मार्गमाश्रयन्तः श्रीजगन्नाथदर्शनार्थं गतवन्तः । ग्रामस्य भूस्वामिनो लाहामहोदयस्यातिथिशालायां प्रतिदिनमेव यात्रिणां सम्मर्द उपतिष्ठति स्म । ग्रामीणानां प्रतिगृहं साधुसेवाया विशिष्टा व्यवस्था विहिताऽऽसीत् । मातुश्चन्द्रमणिदेव्याः सपर्यादाक्षिण्याकर्षणतो बहवः साधवः सन्तः खुदिरामस्यापि लघीयसि पर्णकुटीरे समाययुः । स्वयमुपोषिता स्थित्वा चन्द्रा सर्वेभ्योऽन्नं प्रायच्छत् । सा किल स्वकीयमशनमौदरिकेभ्यः प्रयच्छन्ती नितरां प्रासीदत् । चन्द्रा न कमप्यतिथिं विमुखीकरोतीति सर्वजन-विदितचरमासीत् ।

(पितर्युपरते गदाधरस्य साधुसंन्यासिसंगप्रियताऽवर्धत । सुन्दरदेवोपमबालकस्य मधुरव्यवहारेण निष्कपटसेवया च सन्तुष्टाः सन्तः संन्यासिनः तस्मै भगवद्भजनशास्त्रादिशिक्षणं ददतो हार्दिकानाशीर्वादान् समर्पितवन्तः ।) स्निह्यन्तश्च साधवः कदाचिद् विभूतिभूषितं, कदापि चन्दनचर्चितं बालकं विधाय महान्तं प्रमोदमन्वभवन् । कियन्तश्च कौपीनवन्तं बटुसंन्यासिनं समनुष्ठाय नितरामानन्दुः ।

तदानीन्तनघटनयैकया बालकजीवनस्यैको नवीनोऽध्याय आरब्धः। बालकस्यायुरष्टवार्षिकमभूत्।) तस्मिन् समयेऽसावनुपनीत एवासीत्। एकस्मिन्नवसरे कामारपुकुरस्य क्रोशैकमात्रदूरे उत्तरदिशि—आनूड़नामधेये ग्रामे प्रत्यक्षीभूतदेव्या विशालाक्ष्या मन्दिरे मनःसंकल्पितसमर्चासमर्पणार्थं तद्ग्रामनिवासिन्यो बह्वः स्त्रियः प्रसन्नमयीप्रभृतयो गन्तुं प्रवृत्ताः। ताभिः साकं बालको गदाधरोऽपि समगच्छत्। तासां सहगामिनीनामनुरोधेन मार्गे गदाधरो भावपूरितमानसः सुमधुरकण्ठेन देव्या महिमानं गातुं प्रावर्तत। गायन् गदाधरोऽकस्मान्निःशब्दो बभूव। तदीयनयने निरन्तरमश्रुधारां प्रावाहयताम्। अङ्गप्रत्यङ्गानि स्तब्धीभूतानि। मुखमण्डलं चालौकिकप्रभया परिपूर्णमभवत्। सूर्यसंतापपातेन बालकोऽयं शीतोष्णतावैषम्यसमाक्रांतो जात इति विचिंत्य सर्वा अपि स्त्रियश्चिन्तां प्रपेदिरे। काश्चित् तस्य नयनयोर्मुखे च जलं प्रचिक्षिपुः। अपरा व्यजनवातं चक्रुः। बालकश्चैतन्यशून्य एवास्ति। निर्जने मार्गे क उपायोऽनुष्ठेयः? इति विचिन्त्य सर्वोऽपि स्त्रीजनः अतीवव्याकुलितमानस आसीत्।

अकस्मात् प्रसन्नमय्या विचारितम्, यद् गदाधरे किं देव्या आवेशो जातः? तदुक्तिमाकर्ण्य सर्वाः स्त्रियो दीनभावेन देव्याः स्तुतिं चक्रुः। आश्चर्यम्! कियत्कालं यावत् स्त्रीभिर्मिलित्वा कृतेन देवीस्तवेन गदाधरमुखमण्डले दिव्यहास्यसुमधुरच्छविरदृश्यत। शनैः शनैर्बालकः सचेतनो जातः। सर्वाभिरिदमनुभूतं यद् बालकोपरि वस्तुतो देव्या आवेश एवासीत्। गदाधरे प्रकृतिस्थे जाते सर्वाः स्त्रिय आनंदिता देवीमन्दिरमुपढौकमाना यथाविधि सपर्यादिकार्यं समनुष्ठाय स्वगृहमाजग्मुः। चंद्रादेवी समाकर्ण्य वृत्तांतममुं पुत्रस्वास्थ्यविषये चिन्तिताऽभूत्। किंतु गदाधरः पौनःपुन्येन नैजां जननीं प्रोवाच—"देव्याश्चिन्तनेन मदीयं मनो देवीपादपद्म एव व्यलीयत।"

नवमो हायनः समाप्तिमेति, इत्यालोच्य चंद्रा देवी रामकुमारश्च गदाधरस्योपनयनप्रबन्धं कर्तुं प्रवृत्तौ, निर्धनपरिवारस्य सर्वमप्यायोजनं सात्त्विकमासीत्। यज्ञोपवीतमुहूर्त्तो निश्चितः।···

लौहकारिणी धनी गदाधरस्य प्रसवगृहमगच्छत्, चुल्लिकाभस्मचयाच्च बालकमुत्थाप्य सर्वप्रथमं निजक्रोडे गृहीतवती इति पूर्वमेवोल्लिखितम्। बालविधवया सन्तानहीनया चानया स्वहृदयसञ्चितः सर्वोऽपि वात्सल्यरसो गदाधरस्योपरि परिस्रावितः। यावदियं गदाधरमुखेन 'मा'-शब्दं न शृणोति, किञ्चिदपि तद्भक्षणार्थं न प्रयच्छति, न सा तावत्सन्तोषमधिगच्छति। एकदा साश्रुनयना धनी बालकस्याभ्यर्णमुपेत्य स्वकीयहृदयभावं प्रकटयंती तमुवाच—"उपनयनदिने सर्वप्रथमं मामेव मातरं मत्वा मम हस्तत एव प्रथमभिक्षामङ्गीकुरु।" धनीप्रेमद्रवीभूतो गदाधर इदं स्वीचकार। तदाप्रभृति 'भिक्षामाता' भविष्यामीत्याशया धनी एकैकशः पणसंग्रहपरायणा संप्रवृत्ताऽभवत्।

उपनयनवेला समागता। गदाधरो रामकुमाराय निजप्रतिश्रुतिमुक्तवान्। रामकुमारः सदृढ़स्वरमुवाच—"कथमिदं सम्भवम्? धनी जन्मना नीचजातीया, मम कुले कदाचिदप्येतन्नाभूत्, इदं भवितुं नार्हति।" खुदिरामः सदाचारी अशूद्रयाजी ब्राह्मण आसीदिति पितुर्ब्राह्मणोचितगुणवार्त्तां जानन्नपि गदाधरो नैजं हठं न परितत्याज। रामकुमारोऽपि स्वकुलमर्यादापरिरक्षणाय कटिबद्धो बभूव। गदाधरोऽपि स्वीयसत्यसंरक्षणे दृढ़व्रतो भवन् जगाद—"सत्यभ्रष्टो मिथ्याचारी ब्राह्मणोचितयज्ञसूत्रधारणाधिकारी भवितुं नार्हति।" रामकुमारो व्याकरणकाव्यस्मृतिशास्त्रपारङ्गतो नववर्षदेशीयापरिपक्वबुद्धिबालकमुखादीदृशीं वाचमाकर्ण्य सहसा स्तम्भितो बभूव। अन्ततो गत्वा पितृबन्धुधर्मदासलाहामहोदयमध्यस्थतायां गदाधरेण विजयो लब्धः। 'सत्यमेव जयते नानृतम्।' सत्यान्नास्ति परो धर्मः। सत्यमेव परमः पुरुषार्थः। उक्तमपि महाभारते—

चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।

स्वधीता मनुजव्याघ्र ! सत्यमेकं किलैकतः ।" इति । तथा च—

"अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।

अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥" इति ।

(नववर्षबालकस्येदृशं स्वीयसत्यरक्षणदृढ़त्वममानवत्वद्योतकं किं नास्ति ? मनसा कर्मणा वाचा च सत्यस्वरूपे स्वाभाविकं दृढ़त्वं बाल्यकालादेव श्रीरामकृष्णजीवने परिदृश्यते । बालो गदाधरो मिथ्या वचो न भाषत इति दर्शं दर्शं स्वजीवितदशायां खुदिरामोऽपि परमानन्द ।)

धर्मस्य चतुर्ष्वपि तपस्या-शौच-दया-सत्याख्येषु पादेषु कलिकालेऽपि सत्यमेव सर्वतो विशिष्यते । परवर्त्तिनि काले श्रीरामकृष्णदेवो ब्रूते स्म यत् "सत्यभाषणमेव कलियुगे तपः ।" बाल्यकालादारभ्यैव कर्ममनोवचोभिः सत्यपालनं श्रीरामकृष्णजीवनलक्ष्यभूतमभत् ।)

उपनयनानन्तरं गदाधरस्य भावप्रवणं मनः श्रीरघुवीरस्य ध्यानपूजासपर्यास्वेव निरन्तरं निमग्नमासीत् । क्रीड़ाक्षेत्रेषु, मार्गेषु स्थानान्तरेषु च यो बालकः स्वकीयं समयं स्वीयैः सहचरैः साकं क्रीड़नकूर्दनेष्वेव व्यत्यगमयत्, स एव गदाधरोऽङ्कुरितेन नवानुरागेण देवपूजायामेव तन्मयो जातः । आत्यन्तिक्या श्रद्धया निष्ठया च गदाधरो रघुवीरस्य, बाणेश्वरशिवस्य, शीतलामातुश्च समर्चनमकरोत् । पूजासमये तदीये नेत्रे सजले अभूताम्; देवदर्शनार्थं च दीनभावेन तेन सकरुणप्रार्थना समक्रियत । तदीयं व्याकुलत्वमवलोक्य सर्वैराश्चर्यचकितैरभूयत । अल्पीयसैव समयेन गदाधरस्य दीनप्रार्थनया देवप्रतिमाः प्राणवत्यो बभूवुः । गदाधरस्य परमपूते सरले च स्वान्ते देवाविर्भावोऽजायत । अद्यप्रभृति प्रायशो गदाधरो भावाविष्टो दरीदृश्यते । दिव्यदर्शनपरिणामतो दिव्याभा तदीयाङ्गेभ्यो निर्बभौ । बालको देवबालकस्वरूपतामधत्त ।

...इदानीं गदाधरस्य ध्यानप्रवणता समैधत। शिवरात्रिः समागमत्। बालस्य वयः केवलं दशवार्षिकम्। बालोऽसौ यथाचारमुपोषितो भूत्वा शिवसमर्चया समस्तामपि निशां जागरणेन व्यतियापयितुमियेष। प्रतिवेशिनः सीतानाथस्य वेश्मनि तस्यां निशि शिवमहत्त्वसूचकस्य संगीतनाटकादेः प्रबन्धो विहितः। गदाधरः प्रथमप्रहरपूजनं समाप्य शिवध्याने निमग्नः। तदानीमेव केचित् तस्य सहचारिबालकाः समागत्य तं प्रति शिवस्याभिनयार्थं महान्तमाग्रहमकार्षुः। नाट्यमण्डल्यां शिवाभिनयकर्त्ता सहसाऽस्वस्थोऽभवत्। अतोऽभिनयसम्पादने नान्य उपाय आसीत्।...

निजसङ्गिनामनुरोधहेलनां कर्त्तुमसमर्थेन तेन तदर्थं स्वीकृतिः प्रदत्ता। शिववेशविभूषितो गदाधरो यदाभिनयमण्डपप्रविष्टो दर्शकैर्नरदेहेऽवतीर्णः साक्षात् शङ्कर इवानुभूतः। जनतायामेकमतुलनीयमानन्दस्रोतः प्रवाहितम्। तदानीं केचित् "हरि-हरि"-शब्दमुच्चारयामासुः। महिलासमाजश्च उलू उलू* इति शब्दमुच्चारयन् शङ्खं दध्मौ। दर्शकसमुदायं शान्तं कर्तुं स्वयं प्रबन्धकः समागत्य शिवस्तवमकार्षीत्। गदाधरः शिवध्याने तन्मयत्वादचेतनो जातः, स हि भावाविष्टश्चित्रार्पित इव निश्चलोऽतिष्ठत्। तदीयकपोलावश्रुधाराभिः संसिक्तौ। बहुकालानन्तरमपि सचेतनो नाऽभूत्। तदानीं गदाधरस्योपरि शिवस्यावेश इति सर्वैरवगतम्। अभिनयो निरुद्धः। स्कन्धे संस्थाप्य स्वभवनं नीतोऽपि स गदाधरः समस्तामपि निशां भावसमाहितो व्यत्यगमयत्। तं तथाविधं दृष्ट्वा गृहजना रुरुदुः। प्रत्यूषे गदाधरस्य सहजदशा पुनः समायाता।...

श्रीरामकृष्णे बा... बाल्यकालादेव सर्वविधसमुन्नतभावानां समुन्मेषः, समावेशो, विकासः, भूम्नः चरमप्रकाशश्च समवालोक्यत, विश्व-

---

* माङ्गलिकावसरेषु जिह्वान्दोलनपूर्वकं स्त्री-ध्वनिम्।

रूपस्य, भगवत्याः, शिवस्य च ध्यानसमये तस्य भावावेशोऽजायत। क्रमशो रामकृष्णशरीरं सर्वेषां देवानां देवीनामाविर्भावस्थानमभवत्। जागतिके आध्यात्मिकेतिवृत्ते कस्मिन्नपि युगे कुत्राप्यवतारे वा एतादृशं नैव दृष्टचरमास्ते। ··

* * *

गदाधरेण कियदधीतमिति न विशिष्य वक्तुं शक्यते। तथाप्येतन्निश्चितमेव यत् तदध्ययनमतीव स्वल्पमासीत्। अपराविद्यार्जने सुखोपलब्धौ च बाल्यसमयादेव तस्य वैतृष्ण्यमासीत्। एतावतैव वयसा "विद्यां चाविद्यां च यस्तद्वेदोभयं स ह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।" इत्युपनिषद्वचनानुसारं पराऽपराविद्याभेदस्तेनाज्ञायत, तेनेदमवहितं यद् भूमैव परमसुखस्वरूपः। ज्ञानोपलब्धेरनन्तरं विश्वात्मस्वरूपपरिज्ञाने तस्य दृढसंकल्पो बभूव। तद्ब्रह्मोपलब्ध्यनुकूले सर्वत्रैव गदाधरोऽरमत। समीचीनया विधया तेन पठ्यमानं रामायणं महाभारतं च श्रोतुं जनसम्मर्द उपातिष्ठत्। श्रुतिधरत्वगुणेन रामकृष्णायणो ग्रन्थः, योगाद्या, सुबाहुनाटकं चेत्यादि सर्वं तस्य कण्ठस्थमासीत्।

शनैः शनैर्गदाधरस्त्रयोदशे चतुर्दशे वाऽब्दे प्रवेशमलभत। तदीयस्वल्परिवारस्य विशिष्टघटनेयमासीत् यत् तस्य कनिष्ठभगिन्याः सर्वमङ्गलायाः, सोदरस्य रामेश्वरस्य च विवाहो जातः, एवं रामकुमारस्य प्रथमपुत्रस्य रामाक्षयस्य जन्मकाले सूतिकागृह एव रामकुमारपत्नी द्युनिवासभूयमगच्छत्। विद्वानपि रामेश्वरः परिवारस्यार्थिकसाहाय्यदानेऽसमर्थोऽविद्यत। अथ च ज्येष्ठस्य रामकुमारस्य यजनयाजनेन, शान्तिस्वस्त्ययनेन, स्मार्तव्यवस्थादानेन च समुपलब्धेनार्थेन पारिवारिकः सर्वोऽपि व्ययो न पूर्यते स्म, ऋणग्रस्तो रामकुमारो धनागममार्गान्वेषणप्रवृत्तः कलिकत्तामागत्य झामापुकुरस्थाने पाठशालां संस्थाप्य छात्रानपाठयत्।···

तदानीन्तनं गदाधरजीवनं भगवद्भावमयमासीत्। स्वेष्टदेवसमर्चनान्तरं तस्य सर्वोऽपि समयो ध्यानादिष्वेव व्यत्यगच्छत्। तन्मुखादीश्वरीयप्रसङ्गमाकर्णयितुं खुदिरामस्याङ्गणे प्रतिदिनं प्रातः सायं च बहवो मानवाः समुपातिष्ठन्। गदाधरेण रामायणमहाभारतपुराणादिपाठेन सुमधुरभजनकीर्त्तनेन च सर्वेभ्यो दिव्यानन्दः प्रादीयत। सन्ध्यासमये च बाला युवानो वर्षीयांसश्च समागत्य गदाधरसुमधुरकण्ठनिर्गतभावपूर्णमनोहरभजनावलीमाकर्णयन्तोऽश्रुसिक्ता अबोभूयन्त। तदा प्रभृत्येव तदीयजीवनसम्बन्धिन्येका निरवच्छिन्ना भगवद्भावधारा प्रावहत्, यस्याः सुशीतलस्पर्शो बहूनामेव मनुतनुजनुषां प्राणमनःशान्तिलाभायालमभूत्। ईश्वरीयविषयेऽनुरक्तो गदाधरः सांसारिके विषये नितरां विरक्त आसीत्।....

पारिवारिककार्यकलापनिरीक्षणार्थं रामकुमारो वर्षे एकवारं स्वगृहमायाति स्म। गदाधरस्य सर्वेषामाचाराणां साधीयस्त्वेऽपि पठने रुचिर्नासीत् इति रामकुमारेण अवलोकितम्। पितृहीनस्वलघीयसो भ्रातुर्भाविजीवनसम्बन्धे रामकुमारो मनसि निरन्तरमतप्यत्। किन्तु प्रियगदाधरस्नेहात् किमपि वक्तुमसौ न प्रावर्त्तत।

रामकुमारः कियद्भ्यो हायनेभ्यः कलिकत्तायां स्वीयं संस्कृतविद्यालयं चालयति। चतुर्दिक्षु तद्विद्यालयप्रशंसा प्रसृता। पाठशालायामध्यापनातिरिक्तमपि सन्निहितविशिष्टगृहेषु यजनयाजनादिना रामकुमारेण धनमुपार्जितम्। एकाकिना तेन निखिलमपि कार्यभारमुद्बोढुं काठिन्यमनुभूतम्। तदानीं तस्य गदाधरः स्मृतिपथमारूढः। आलोचितम्—"कलिकत्तायां गदाधरस्यानयनं समीचीनं स्यात्। पाठशालायां पठिष्यति, पूजनमर्चनमनुष्ठास्यति, याजनादिकर्मणि साहाय्यं च दास्यति, एवं तदीयभाविजीवनस्य व्यवस्थापि सम्पत्स्यते" इति।

रामकुमारः स्वगेहमागत्य मात्रा भ्रात्रा च सह परामर्शं विधाय

कलिकत्तायां गमनवार्त्तां गदाधरं श्रावितवान्। ज्येष्ठस्य भ्रातुरादेशः पित्रादेशतो नातिरिच्यत इति विचार्य गदाधरः कलिकत्तागमनं स्वीचकार। शुभेऽहनि श्रीरघुवीरं प्रणम्य चन्द्रमणिचरणधूलिं शिरसि निधाय मातुः स्नेहचुम्बनमादाय च स्वीयज्येष्ठभ्रात्रा साकं गदाधरः कलिकत्तां प्रतस्थे।



३

कलिकत्तायामागतस्य गदाधरस्य स्वान्तं कानिचिद्दिनानि यावन्-मातुः कृते व्याकुलत्वमवाप। परमीषत्कालानन्तरमेव तदीयो भावोऽयं व्यपगतः। कलिकत्तापत्तनीयचाकचक्यविलोकनेन तस्य चेतो न प्रासीदत्, किन्तु मनोनुकूलकार्यमासाद्य नितरां मुमुदे। रामकुमारो यत्र यत्र वन्दनार्चनादिकमनुतिष्ठति, तत्सर्वमेव क्रमशः गदाधरेण स्वायत्ती-कृतम्। एतदतिरिक्तं ज्येष्ठस्य भ्रातुः सपर्यादिकमप्यनुष्ठीयते स्म। अल्पीयसैव कालेन प्रियदर्शनोऽयं किशोरो निजेन मनोहरव्यवहारेण सुमधुरभजनस्तवादिना च यजमानपरिवारेषु परमप्रियो जातः। विशेषतश्च गदाधरस्य भक्तिभावमयी समर्चा, ध्यानस्य तन्मयता च समेषामपि श्रद्धां दृष्टिं चाकृष्टवती। परमध्ययने गदाधरः पूर्ववदु-दासीन एवास्ति। अनेकमासपर्यन्तं रामकुमारस्तस्येमं भावं पश्य-पश्यत्। एकस्मिन् दिवसे किञ्चित्कठोरस्वरेण रामकुमारो गदाधर-मवोचत्—"पठनं लेखनं सर्वथा परित्यक्तं त्वया, किमस्य कारणम्; तव दिनानि कथं व्यतिगमिष्यन्ति ?" किञ्चित्कालं मौनमाश्रित्य स्वाभाविकस्वरतो गदाधरः प्रत्युवाच—"कदलीफल-तण्डुलादि-प्रदात्रीं यजमानतोषिणीं विद्यां नाहमधिगन्तुमिच्छामि, यथार्थ-ज्ञानदायिनीं विद्यां शिक्षितुमभिलषामि, यया मानवजीवनं सार्थकं भवेत् ?" गदाधरस्यैतादृशमुत्तरमाकर्ण्य रामकुमारस्तम्भितोऽभवत्, आश्चर्यं, गदाधरो लेखनमध्ययनं च तण्डुलरम्भाफलदायिनीं विद्यां मन्यते ! समयान्तरे भ्रातरं बोधयिष्यामीत्यालोच्य रामकुमार-स्तदानीं न किमप्यवोचत्। तदानीन्तनीयं गदाधरस्य वयः सप्तदशवर्ष-देशीयमासीत्।...

अनेन क्रमेण वर्षद्वयं व्यतीतम् । रामकुमारस्यार्थिको दशा दिनानुदिनं ह्रासमयासीत् । बहुविधदुश्चिन्ताभिस्तदीयमन्तःकरणं शरीरं चावसन्नं जर्जरितमप्यभूत् । पाठशालां परित्यज्य कार्यान्तरमनुष्ठेयं नवेति तेन परिचिन्तितम् । इतश्च सांसारिकेषु सर्वेष्वपि विषयेषु गदाधरस्यौदासीन्यं क्रमशो ववृधे । परन्तु तस्य ध्यानगाम्भीर्यं, भावतन्मयत्वं च विलोक्य रामकुमार एकतः प्रसीदति, अपरतः कारणान्तरेण च विषीदति । तदानीन्तनीयया घटनयैकया द्वयोरेव जीवनगतिर्नूतनमार्गे प्रावर्त्तत ।

* * *

कलिकत्तापत्तनस्थजानबाजारस्य प्रसिद्धभूस्वामिनो रामचन्द्रदासस्य पत्नी राणी रासमणिरासीत् । तस्याश्चतस्रः कन्या अभूवन् । अकस्मात् तस्याः पतिः परलोकं प्रतस्थे । रासमणिः प्रचुरधनसम्पदामधिकारिणी जाता । पत्युर्देहावसानेन भूस्वामित्वस्य सर्वोऽपि भारो रासमण्या स्वहस्तयोर्गृहीतः । स्वल्पेनैव कालेन तस्या असाधारणकर्मकुशलतया भूस्वामिताया आयः प्रचुरमवर्धत । पुण्यकार्यकलापेषु बहुधनदानेन, अन्नदानेन विविधजनहितकरकार्यानुष्ठानेन च तस्याः सीमातिक्रांतया साहसिकतया च तदीया कीर्त्तिचन्द्रिका चतुर्दिक्षु प्रासरत् । तया स्वीयं राणी नाम सार्थकीकृतम् । महाकाल्यां तस्या असीमभक्तिरभवत् । भूस्वामितायाः सर्वविधेष्वपि पत्रादिषु स्वनामधेयाङ्कितमुद्रायास्तयोपयोगः क्रियते स्म, तस्यां लिखितमेतदभूत्—"कालीपदाभिलाषिणी श्रीमती रासमणिदासी ।" निम्नकुलोत्पन्नाऽपि राणी देवद्विजभक्तिपरायणा बभूव । वस्तुतस्त्वियं देव्यंशसम्भूता भगवत्या अष्टसहचरीष्वेकाऽप्यविद्यत ।

सुबहोः कालात् तस्याः काशीमागत्य विश्वनाथान्नपूर्णादर्शनसंकल्पोऽभवत् । परमनेकप्रत्यूहहेतुना नासौ परिपूर्णो बभूव । एतर्हि

तस्या जामातरो विधेयविधानदक्षाः सन्ति। विशेषतो मथुरामोहनो निखिलकार्यकलापसम्पादने रासमणिदेव्या दक्षिणो हस्त इव गण्यते।

श्रीकाशीयात्रामुद्दिश्य प्रचुरो धनराशिः संरक्षित आस्ते। १२५५ वङ्गाब्दे ( १८४८ ख्रीष्टाब्दे ) राणी काशीयात्रायै प्रस्तुता। पूजोपकरणानि बहुविधान्यन्यानि वस्तूनि द्रव्यादीनि च तरीषु संस्थापितानि। यात्रायाः सर्वोऽपि प्रबन्धः सुसम्पन्नोऽभवत्। परन्तु यात्रायाः * पूर्वस्यां रात्रौ भगवती भवतारिणी धृतज्योतिर्मयविग्रहा स्वप्ने दर्शनं दत्वा तामुवाच— "काशीगमनप्रयोजनं नास्ति, अत्रैव कुत्रापि भागीरथीतीरे रमणीयस्थाने मम मूर्त्तिं प्रतिष्ठाप्य सपर्यादिव्यवस्थामनुतिष्ठ। तत्रैवाहं तव सेवासमर्चनादिकं नित्यमङ्गीकरिष्यामि।"

देव्याः प्रत्यादेशः! राणी काशीयात्रां परित्यज्य भगवत्या आदेशपरिपालने तत्परा बभूव। कलिकत्तासन्निधाने वाराणसीक्षेत्रवत् श्रीमन्दिरनिर्माणयोग्यं स्थानं भागीरथीपश्चिमरोधसि बहुविधप्रयत्नेनापि नाधिगतम्। अतो गङ्गायाः पूर्वस्मिन् तीरे दक्षिणेश्वरे तया षष्टिबीघात्मिका भूमिः क्रीता। अस्या भूमेः कस्यचिदंशस्य स्वामी हेस्टीसाहबमहोदय आसीत्। अवशिष्टांशे कब्रिस्तानं गाजीपीरस्थानं चाविद्यत। स्थानमेतत् कूर्मपृष्ठवददृश्यत। तन्त्रशास्त्रमतेन तादृशं स्थानमेव शक्तिसाधनानुकूलं सम्मतम्। भगवत्याः अनुकम्पया समीहयैव च तत्स्थानमधिगतम्।

मनोवांछितस्थानेऽधिगतेऽमितधनराशिं व्ययीकृत्य राणी रमणीयनवरत्नसुशोभितं बृहत्कालीमन्दिरं, नाट्यमन्दिरं द्वादशशिवमन्दिरं राधाकान्तमन्दिरं च निर्माय आच्छादनीं, तत्सम्मुखे शिलाचयनिबद्धं घट्टं,

* केषांचिन्मतेन राणी काशीयात्रायै प्रतिष्ठमाना वर्तमानदक्षिणेश्वरकालीमन्दिरस्याभ्यर्णे रात्रौ गङ्गायां निशां निनाय। तदानीमेव भगवत्यादेशो लब्धः। अतस्तया काशीयात्रा निरुद्धा।

वस्तुवेश्म, भोगगृहम्, अतिथिशालां, वाद्यस्थानम्, मनोरमोद्यानं च निर्ममौ। अन्यान्यपि निर्माणकार्याणि सम्पन्नानि। महतो दूरादेव भागीरथीतटे मन्दिरशिखराणि दृष्टिगोचरतामापद्यन्ते। निर्माणकार्य-परिपूर्त्यै नवलक्षं मुद्राणां व्ययीभूतमास्ते। ततश्च देव्याः सेवासमर्च-नादिकृते रासमणिर्दिनाजपुरमण्डलान्तर्गत – 'ठाकुरगाँव'-विभागस्य सालबाड़ीनाम विशालं भूखण्डं लक्षद्वयमुद्राव्ययेन क्रीतवती।

एतद्देवीमन्दिरनिर्माणकालमारभ्य मूर्तिप्रतिष्ठान्तं यावत् राणी रास-मणिः कठोरव्रतमकार्षीत्। त्रिसन्ध्यस्नानं, हविष्यान्नभोजनम्, भूशयनं कुर्वाणया राण्या सर्वविधव्यावहारिककार्यकलापतो विरतयाऽनन्यमनसा स्वीयाराध्यदेवीध्यानचिन्तनेष्वेव न्यमज्ज्यत।

सर्वसुलक्षणसंयुक्ता देवीप्रतिमानिर्माणानन्तरं पेटिकायां संस्थापिता, मृण्मयी मूर्त्तिः रासमणेरान्तरिकभक्त्या जीवन्तीव संवृत्ता। सा देवी पेटि-कायां तिरोहिता स्थातुं न समीहते, सेवां सपर्यां च स्वीकर्त्तुमुद्यताऽभूत्। राणी स्वप्ने आदेशं प्राप्तवती—"कियन्तं कालं यावत् मां पेटिकापिहितां स्थापयिष्यसि, एतदवस्थायां मया महत्कष्टमनुभूयते; यथाशीघ्रं मां संस्थापय।" निद्राभङ्गे जाते विमनायमानया तया पेटिकामनावृता-मनुष्ठाय विलोकितं यत् देवीप्रतिमा स्वेदसमाक्रान्तेति। तद्दर्शनेन राणी अतीव खिन्ना अस्वस्थमानसा च संवृत्ता। आसन्ने शुभेऽहनि देवी प्रतिष्ठाप्येति राणी निश्चयमकरोत्। आगामिनी स्नानयात्रा-पूर्णिमा देवीप्रतिष्ठार्थं निर्णीता, यतस्तत्पूर्वं न किमपि प्रशस्तदिनमविद्यत।

मातुर्देव्या आदेशमनुसृत्य राणी भगवत्या मूर्त्तेः प्रतिष्ठापूजादि-व्यवस्थाविधानाय उद्यता। परं तत्समीहासिद्धिकाले ब्राह्मणाः प्रबल-विरोधमाचेरुः। वङ्गदेशीयाः प्रसिद्धा विद्वांसो भूदेवा एकस्वरतो व्याजह्रुः— ब्राह्मणेतरवर्णप्रतिष्ठापितदेवीमूर्तेरन्नभोगदानाधिकारः शास्त्र-विहितो नास्ति। तदानीमत्यन्तव्याकुलमानसा राणी समस्तभारतवर्ष-विद्वत्सन्निधाने व्यवस्थाग्रहणाय स्वीयजनान् प्रेषयामास। किन्तु

शूद्राणीप्रतिष्ठितदेवविग्रहस्यान्नभोगदानव्यवस्था नाधिगता। अन्नभोगादि-पूजनव्यवस्था तु दूरे वर्त्तते, कश्चिदपि कुलीनो ब्राह्मणस्तादृशदेवविग्रहाय प्रणामादिसम्मानदानमपि कर्तुं नाचेष्टत। ब्राह्मणानामेतादृशव्यवहारेण राणीमानसे सुमहानाघातो जातः।

भगवत्या भोगः समीह्यते, परन्तु तस्यै अन्नभोगं दातुं न शक्यत इत्यालोच्य राणी मर्मण्यताड्यत। प्रतिष्ठादिने सन्निहिते सति झामा-पुकुरस्थचतुष्पाठिपाठशालात एतादृशी व्यवस्था लब्धा यत् "प्रतिष्ठातः पूर्वं यदि मन्दिरदेवसम्पत्तिः कस्मैचन ब्राह्मणाय प्रदीयेत, स च ब्राह्मणो मन्दिरे देवीं प्रतिष्ठाप्यान्नभोगव्यवस्थां कुर्यात् तर्हि शास्त्रीयं विधानं पालितं भवेत्। तदानीं ब्राह्मणादिभिः सर्वैरपि वर्णैरन्नप्रसादं ग्रहीतुं शक्यते।"

रामकुमारभट्टाचार्यतो लब्धया व्यवस्थया राणी निविडान्धतमसि किंचिज्ज्योतिराशाया अध्यगच्छत्। सा निजकुलगुरुनाम्ना मन्दिर-प्रतिष्ठाया निश्चयमकार्षीत्। किन्तु गुरुवंशेषु कोऽपि पूजनक्रियाविज्ञाता नासीत्। देवीसमर्चायाः कृते कस्यचिद्योग्यपूजकस्यावश्यकताऽविद्यत। कश्चिदपि सुयोग्यो ब्राह्मणः शूद्राणीप्रतिष्ठितदेवीमन्दिरे पूजको भवितुं नैच्छत्। राणी निरुपाया भूत्वा रामकुमारभट्टाचार्यमेव पूजकपदग्रहण-पूर्वकं स्वीयमन्दिरप्रतिष्ठाकार्यं सम्पादयितुमनुरुन्धाना पत्रमेकं प्रहितवती। राण्या आन्तरिकानुरोधाद् रामकुमारस्तदर्थं स्वीयां स्वीकृतिं प्रादात्।...

१२६२ वंगाब्दस्य ज्येष्ठमासीयाष्टादशतारिकायां (३१ मई, १८५५ ई०) गुरुवासरे जगन्नाथदेवस्नानयात्रादिवसे महता समारोहेण भगवत्या भवतारिण्या नूतनमन्दिरे प्रतिष्ठा समभूत्। श्रीराधाकान्तस्य द्वादशशिवलिंगानां च विभिन्नमन्दिरेषु प्रतिष्ठा जाता। सर्वविधभावानां भाविनि केन्द्रस्वरूपे दक्षिणेश्वरे श्यामा, श्यामो, महेश्वरश्चान्योन्यसन्नि-धाने व्यराजन्त। दिवसे तस्मिन् पूजासपर्या-हवनादि-पाठ-भजन-

कीर्त्तन-नाट्यमण्डलीगानादिभिः "दीयतां भुज्यताम्" इति जनरवैश्च हरितो मुखरिता बभूवुः । अभूतपूर्वोऽयं महोत्सवः, सुदूरेभ्यः कान्यकुब्ज-वाराणसीश्रीहट्टनवद्वीपचट्टग्रामोत्कलादिस्थानेभ्यो विशिष्टा निमन्त्रित-ब्राह्मणाः समवेता अभूवन्। तत्र आशातीतदक्षिणादि ते समधिगत्य सुतृप्ता धन्यं धन्यमिति वदन्तो यथेच्छमाशिषो ववृषुः । बहूनि दिनानि महोत्सवानन्दः प्राचरत्। अत्रानन्दोत्सवे सम्मिलितुं श्रीरामकृष्णोऽपि दक्षिणेश्वरमायासीत्। परवर्त्तिनि समये तन्मन्दिरप्रतिष्ठामहोत्सवविषये तेनेत्थमुक्तमासीत्—"एतादृगनुभूयते यद् भगवती कैलासं परित्यज्य मन्दिरेऽत्र समागता, रासमणिदेव्या च सम्पूर्णोऽपि रजतगिरिरुत्थाप्य दक्षिणेश्वरमानीत" इति ।

श्रीरामकृष्णः सानन्दमितस्ततो बम्भ्रम्यमाणः सम्पूर्णमपि दृश्यं विलोकयन् दिनं यावन्न किमप्यश्नन् सन्ध्याकाले तण्डुलभर्जनं लाजा-मोदकांश्च क्रीत्वा भुक्त्वा च झामापुकुरस्थानं परावर्त्तत । द्वितीयदिनेऽपि प्रातःकालेऽसौ महोत्सवं द्रष्टुं दक्षिणेश्वरमायातो ज्येष्ठभ्रात्रा च स्थातु-मादिष्टः, किन्तु भोजनकाले झामापुकुरमेव प्रत्याववृते । पंचसप्त दिनानि पुनर्दक्षिणेश्वरं नायातः । प्रतिदिनं व्यचारयत्—"अग्रजोऽद्य समाग-मिष्यति" । परमेतावद्दिनानन्तरमपि परावर्त्तमानं तं नावलोक्योद्-विग्नचेताः स ज्यायसो भ्रातुर्वृत्तान्तं परिज्ञातुं पुनर्दक्षिणेश्वरमाजगाम । तत्राकर्णितवांश्च यदग्रजन्मा राण्या विशेषानुरोधेन जगन्मातुः पूजको भवितुं सहमतोऽभवदिति ।

प्रथमं तु वृत्तान्तेऽत्र श्रीरामकृष्णो न विश्वासमकरोत्। पुनश्चाग्र-जन्मानं पप्रच्छ—"मया श्रूयते यदत्रभवान् अत्र पूजको बुभूषुः, किमेतत् सम्भवति ? अशूद्रयाजिनः पितुः पुत्रो भूत्वा भवान् कथमेतादृशं कार्यं स्वीकृतवान् ?" रामकुमारः शास्त्रेण युक्त्या च श्रीरामकृष्णं बोधयितु-मचेष्टत, परमसौ स्वनिष्ठायां निश्चलस्तस्थौ । ततश्चैतत्सिद्धान्तनिर्णयार्थं

धर्मपत्र * निःसारणं निश्चितम् । धर्मपत्रेऽत्र रामकुमारस्य पूजकत्व-सम्मतिर्लब्धा । श्रीरामकृष्णोऽपि धर्मपत्र-निर्णयमीश्वरेच्छामवधार्य स्वीचकार ।

झामापुकुरपाठालयो निरुद्धः, इति रामकुमारो गदाधरं दक्षिणेश्वरे स्थातुमनुरुरोध । स्वकर्त्तव्यनिर्णयार्थमसौ विशेषचिन्ताग्रस्तो बभूव । देवीभोगप्रसादभक्षणप्रस्तावं नायं स्वीचकार । अतः भ्रातुराज्ञयाऽमान्न-मादाय गङ्गाकूले स्वयं पाचयित्वा भोजनं कुर्वन् दक्षिणेश्वरे स्थातुं सहमतोऽभवत् । इदमाचरणं तस्यानुदारता ऐकान्तिकी निष्ठा वेति को निर्णयेत् ?

गङ्गातीरवासो रामकृष्णस्य कृते परमाकर्षकोऽभवत् । यतः स्थानं रमणीयं, देवालयश्च सन्निधत्ते । किंचिद्दिनानन्तरमेव प्रियदर्शनो ब्राह्मणकुमारोऽयं समेषां दृष्टीराचकर्ष । तेजःपुञ्जस्वरूपेण रूपेण, स्वीय-स्वाभाविकानन्दनिमग्नतया, सांसारिकवस्तुषु उदासीनतया, तन्मन-स्कतया, विनम्रेण तेजोदीप्तेन व्यवहारेण, सरलतया चासौ सर्वप्रियो-ऽभूत् । कियद्दिनानन्तरमेव मन्दिरनिकटस्थपंचवटीवनं श्रीरामकृष्णकृते सर्वाभ्यर्हितं प्रियस्थानमभवत् । भ्रातुर्नेत्रपथं विरहय्य, अवकाशं चासाद्य निर्जनारण्यस्थाने प्रविश्य बहुहोरां यावदसौ गभीरे ध्याने न्यमज्जत् । अयमेव स्वल्पः समयस्तत्कृते शान्तिमयः समपद्यत ।

एवं दक्षिणेश्वरे प्राय एकमासो व्यपगतः । स्वीयभोजननिर्माणा-शनात् स्वकीयाग्रजन्मसेवाया व्यतिरिक्तं च श्रीरामकृष्णस्य किमपि कार्यान्तरं नाविद्यत । निजमनोऽनुकूलसुखपुरस्सरसमययापनयथो-चितावसराधिगमात् स्थानं तत् तत्कृते प्रियतरमभूत् । तदानीमेव काले

* कस्यचिद् विषयस्य "अस्ति नास्ति वा" इति निर्णयार्थं कर्गजयोर्लिखित्वा तद्वोभयं गोलाकारं विधाय, तयोरेकस्य निःसारणेन निश्चयीक्रियते ।

राणीजामाता मथुरमहाशयो युवकमिमं शान्तदर्शनमुदासीनमपश्यत्। तदन्तःकरणे ब्राह्मणयुवानं प्रत्यान्तरिकमाकर्षणं कथमुत्पन्नमिति न वक्तुं शक्यते। युवकसम्बन्धे जिज्ञासया मथुरमहाशयेनेदमवगतं यत् अयं पूजकस्य रामकुमारभट्टाचार्यस्य कनिष्ठो भ्राता। ततश्च युवानमिमं देव्याः सपर्यार्थं नियोक्तुं तन्मनसि बलवती समीहा समुदपद्यत। ततो वार्तालापप्रसंगेन रामकुमारभट्टाचार्यो मथुरमहोदयं स्वकीय-कनिष्ठभ्रातुर्वैराग्यपूर्णां मानसिकीमवस्थां सुस्पष्टं व्यजिज्ञपत्। श्रुत्वापि वृत्तान्तममुं महाशयोऽसौ अनुकूलावसरं प्रतीक्षमाणस्तस्थौ।

एतस्मिन् एव काले कामारपुकुरनिकटवर्त्तिनः शिहरग्रामवास्तव्यो हृदयराममुखोपाध्यायो जीविकाप्रदं किमपि कार्यमन्विष्यन् दक्षिणेश्वर-मायातः। हृदयरामो रामकृष्णस्य भागिनेयो भवति, पितृश्वसृतनूजाया हेमाङ्गिन्या आत्मजश्च। बाल्यावस्थायामुभावप्येकत्रैव क्रीडतः। हृदयरामो मातुलस्य प्रेयानासीत्। तदानीं काले श्रीरामकृष्णः सार्ध-विंशतिवर्षदेशीयः। तस्माच्च हृदयरामश्चतुर्वर्षैः कनीयान्। बाल्यकालतः सुपरिचितं हृदयरामं प्रति श्रीरामकृष्णस्यान्तरिकं प्रेम केनापि कारण-विशेषेण परमं प्रगाढ़मभूत्। हृदयरामोऽपि मातुलममुं प्राणप्रियं पर-मात्मीयममन्यत। दक्षिणेश्वरेऽत्र द्वावपि परस्परं संमिलितौ परमा-नन्दमनुबभूवतुः।

सांसारिकसम्बन्धानुसारेण हृदयरामः श्रीरामकृष्णस्य भागिनेयः, परन्तु वस्तुतस्त्वयमस्ति युगावतारसेवकस्तत्सहचरश्च। अवतारस्य बहवः पार्श्वचरा यथानिर्दिष्टकार्यसम्पादनार्थं विभिन्नलोकेभ्यः समा-गत्य नररूपं गृहीत्वा युगप्रयोजनमनुष्ठाय स्वानभीष्टान् लोकान् प्रति-पेदिरे। तथैव श्रीरामकृष्णस्य शरीररक्षाया विशिष्टं कार्यम् संपादयितुं हृदयरामो जन्म लेभे। परमहंसदेवः परवर्त्तिनि काले स्वयमवोचत्— "यदि हृदयरामो नाभविष्यत् तर्हि साधनाकाले मम शरीररक्षण-संभवोऽपि नाभविष्यत्।" अत एव निश्चीयते यद् दक्षिणेश्वरे प्रथम-

समागमदिवसादारभ्यः पंचविंशतिवर्षपर्यन्तं हृदयरामः स्वमातुलस्य छायापुरुष इव समपद्यत। शयनम्, भ्रमणम्, उत्थानम्, उपवेशनं च सर्वमपि तस्य मातुलेन सहैवाभूत्। केवलं मध्याह्नभोजनसमय एवोभौ परस्परं वियुक्तावभूताम्। तदानीमपि श्रीरामकृष्णेन स्वहस्तपक्वं भोजनमक्रियत, हृदयरामेण देव्याः प्रसादः अगृह्यत च। मातुलभोजननिर्माणप्रबन्धः सकलोऽपि हृदयरामेणाक्रियत, कस्मिंश्चिद् दिवसे मातुलप्रसादोऽपि गृह्यते स्म। रात्रौ तु द्वाभ्यामपि देवीप्रसाद-शष्कुल्योऽभुज्यन्त।

—:*०*:—

वयं क्रमशः द्रष्टुं शक्ष्यामः यत् श्रीरामकृष्णपितृमरणम्, रामकुमारस्य कलिकात्तागमनम्, दक्षिणेश्वरे मन्दिरप्रतिष्ठा, तत्पूजकपदस्वीकृतिः, मथुरानाथ-हृदयराम-ब्राह्मणी-तोतापुरीस्वामिनां समागमाश्चेति सर्वमीश्वरेच्छया युगधर्मसंस्थापनानुकूलम्, प्रयोजनीयजनानां च समावेशमात्रमेव ।...

एकस्मिन् दिने अनुगंगातटमुपविश्य श्रीरामकृष्णो गङ्गामृत्तिकया परममनोहरमसृणभावमयशिवप्रतिमां निर्माय तन्मयभावतः समर्चयति स्म । इतस्ततो भ्राम्यन् मथुरमहोदयस्तत्र समायातः । तां च जीवन्तीमिव प्रतिमां ध्यानस्थं पूजकं चावलोक्य आश्चर्यचकितः सन् तत्रैवातिष्ठत् । एवंविधा सुलक्षणसंवलिता देवभावपरिपूर्णा प्रतिमा न तेन कदापि दृष्टपूर्वा । जिज्ञासया तेन यदैतज्ज्ञातं यन्मूर्त्तिरियं श्रीरामकृष्णेन स्वहस्ताभ्यामेव निर्मिता, तदानीं तस्यासीमविस्मयोऽभूत् । पूजनान्ते तां प्रतिमां स्वस्मै प्रदातुमनुरुध्य मथुरमहाशयो निर्जगाम । हृदयरामद्वारा समासादिता शिवप्रतिमेयमत्यन्तमुग्धमनसा तेन राणीसमीपे प्रहिता । तल्लघुमूर्त्तिनिर्माणकलायां मथुरमहाशयो निर्मातुः प्राणचित्रस्य भक्तिगाम्भीर्यस्य च परिचयं प्राप्तवान् । ततः प्रभृति कनिष्ठं भट्टाचार्यं (श्रीरामकृष्णं) देव्याः पूजासपर्यासु नियोक्तुं तस्याग्रहो नितरां ववृधे ।

मथुरमहोदयसमीहां रामकुमारमुखादाकर्ण्य श्रीरामकृष्णस्तद्वासराद्दूर एव तिष्ठति । मनुष्यदासता, दक्षिणादानपूर्वकं देवसमर्चनं चेति द्वयमेव तद्विवेकविरुद्धमविद्यत ।...

एकदा कालीमन्दिर-प्राङ्गणे श्रीरामकृष्णो हृदयरामेण सह पर्यटन् मथुरमहोदयेनाकारितः। मथुरमहाशयो भवन्तमाकारयतीति भृत्य-मुखादाकर्ण्य श्रीरामकृष्णश्चिन्तासन्तानवितानैकतानतां प्रपेदे। हृदयराम-द्वारा चिन्ताकारणं पृष्टो मातुलः प्रत्युवाच—"अनुमीयते, तत्र गतं मामसौ भृत्यतामङ्गीकर्त्तुं निर्देक्ष्यति।" "कोऽत्र दोषः? एतादृशं सुमनोहरं स्थानम्, एतादृक्सुसम्पन्नमानवस्याश्रये कार्यानुष्ठानमित्यु-भयमेव समीचीनम्" इति हृदयराम उदतरत्। निजचिन्तने स्वतन्त्रः श्रीरामकृष्णो निजगाद—"दासत्वग्रहग्रस्तता मह्यं न रोचते। अन्यच्च पूजने स्वीकृते देवीविग्रहस्य बहुमूल्यानामाभूषणानां रक्षाभारोऽपि मयैव ग्राह्यो भवेत्, एतत्सर्वं मया कर्त्तुं न शक्यते। यद्याभूषणाना-मुत्तरदायित्वं त्वमङ्गीकुर्यास्तर्हि केवलं समर्चाकार्यमनुष्ठातुं नास्ति मम काचिदप्यापत्तिः।" हृदयरामः स्वानुकूलभृत्यतामन्विष्यन्निहागत इति प्रसन्नेन चेतसा तेन स्वीया स्वीकृतिः प्रदत्ता।

श्रीरामकृष्णमुखादङ्गीकृतिमाकर्ण्य नितरामानन्दितो मथुरमहो-दयोऽब्रवीत्—"इदं त्वतीवसमीचीनमभवत्, भवान् मातुः सपर्यामनुष्ठा-स्यति, रामकुमारभट्टाचार्यो हृदयरामश्च भवत्साहाय्यं विधास्यतः।"

देवीमन्दिरप्रतिष्ठातः प्रायो मासत्रयाभ्यन्तर एव देवीपरिचर्यादि-कृते श्रीरामकृष्णः समागतोऽभूत्, तेन स्वहस्ताभ्यामेव सुरभितकुसुमानां स्रजोऽग्रथ्यन्त स्वस्वान्तानुकूलं माता भवतारिणी भूष्यते स्म, विह्वलेन सता स्वीयसुमधुरकण्ठतो गीतान्यश्राव्यन्त। अहर्निशं तन्मयतास्वरूप-मादकतयैव व्यत्ययासीत्। कथञ्चिदवकाशमधिगत्य श्रीरामकृष्णः पञ्चवटीकाननेऽदृश्यो भूत्वा ध्यानमग्नोऽप्यभवत्। हृदयरामो मातुल-मदृष्ट्वा इततस्तो भ्राम्यन् बहुकालानन्तरं मातुलमुदासीनमवलोक्य-ा पृच्छत्—"एतावत्कालपर्यन्तं भवान् कुत्रासीत्, विलम्बेन दृष्टो भवान्।" "अहो, अत्रैवासम्" इति किञ्चिन्मातुल उदतरत्।

मन्दिरप्रतिष्ठानन्तरं भाद्रमासः समायातः। पूर्वस्मिन् दिवसे

जन्माष्टमीमहोत्सवः सम्पन्न आसीत्। तत्र महान् आनन्दोद्रेकोऽभवत्। अद्य राधागोविन्दमन्दिरे विशिष्टो नन्दोत्सवः सम्पाद्यते। ससमारोहं कीर्त्तनं प्रचरति। द्वितीयप्रहर-भोगावसानेऽन्यत्र प्रकोष्ठे नीयमाने गोविन्दे पूजकक्षेत्रनाथः पादपिच्छिलत्वात् प्रतिमया सहैव पतितः; विग्रहस्य च पदमेकं भग्नम्। मन्दिरे महान् कोलाहलो बभूव—"इयं तु महती अमङ्गलसूचना।" घटनामिमामाकर्ण्य राणी अनिष्टाशङ्कया रोमाञ्चिता जाता। नूनमेव कोऽपि सेवापराधो जातः। अकल्याणभयेन सर्वे भीता बभूवुः। उपायान्तरमज्ञात्वा पण्डितानां सभा संयोजिता। पण्डितपरिषदा निर्णीतं यत् "खण्डितप्रतिमां गङ्गाजलप्रवाहे विसर्ज्य तत्स्थाने नूतनमूर्त्तेः प्रतिष्ठा कारयितव्या"। नवीनप्रतिमानिर्माणमादिष्ट-मपि।...एतावत्या प्रेमभक्त्या परिपूजितो भगवानल्पेनैव हेतुना परित्यज्यत इत्यालोच्य मथुरमहोदयान्तःकरणं दारुणशोकेनोद्वेलित-मभूत्। स च राणीमातरमवोचत्—"विषयेऽत्र कनिष्ठभट्टाचार्यस्य (श्रीरामकृष्णस्य) मतं कथं न ज्ञायते ?"

श्रीरामकृष्णे जगज्जनन्या वेशकारिपदे नियुक्ते मथुरमहाशयो रामकुमारं ज्येष्ठभट्टाचार्यं, श्रीरामकृष्णं च कनिष्ठभट्टाचार्यमकथयत्। यदा कदा भगवद्भावाविष्टं विलोक्य कनिष्ठभट्टाचार्योपरि विशेषतो मथुरमहोदयदृष्टिराकृष्टाऽभवत्। मथुरमहाशयपरामर्शं राणी चापि सममन्यत। भग्नप्रतिमाविषये मथुरमहोदयेन पृष्टेन श्रीरामकृष्णेन भावाविष्टेन सता प्रतिपादितम्—"राणीजामातृषु यदि कस्यचित्पादो भग्नः स्यात् तर्हि तं त्यक्त्वा तत्स्थानेऽन्यः समानीयेत किं वा तस्य चिकित्साव्यवस्था विधीयेत ? अत्रापि विषये तदेवानुष्ठेयम्। प्रतिमाया भग्नं पादं संयोज्य यथापूर्वं स[illegible]तम्।"

एतादृशं सरलं समाधानमाकर्ण्य सर्वे सविशेषं विस्मयं जग्मुः। गोविन्ददिव्याविर्भावविग्रहो भग्नोऽपि न परित्याज्य इति रामकृष्ण-व्यवस्था विद्वद्भिर्ब्राह्मणैर्नाङ्गीकृता। तैरुक्तम्—"व्यवस्थेयं शास्त्रविरुद्धा,

भग्नविग्रहसमर्चनं नोचितम्"। परन्तु कनिष्ठभट्टाचार्यस्य प्रेमपूर्णा व्यवस्था राण्या मथुरमहाशयस्य चैतादृशी मनोनुकूलाऽभवत्, यदुभावेवानन्दसागरे निमग्नौ।" राणीनेत्राभ्यामानन्दाश्रुधारा प्रवाहिता।"

अनुरुद्धेन श्रीरामकृष्णेन विग्रहभग्नपाद एवं संयोजितो यद् योगचिह्नमपि न विलोक्यते। प्रतिमायास्तस्याः पूजासपर्यादिकं सर्वं यथापूर्वं प्राचरत्। बहुकालानन्तरं वराहनगरस्य कूटीघट्टे तत्रत्यप्रसिद्धभूस्वामिना जयनारायणवन्द्योपाध्यायेनैकस्मिन् दिने वार्ताप्रसङ्गेन श्रीरामकृष्णः पृष्टः—"महाशय! तत्रत्यो गोविन्दः किं भग्नोऽस्ति?" श्रीरामकृष्ण उदतरत्—"अरे कीदृशी भवदीया बुद्धिः, योऽखण्डो मण्डलाकारः स किं भग्नो भवितुमर्हति?"

नवीना मूर्तिर्निर्मिता समानीता च, किन्तु प्रतिष्ठितानभमनाऽभवत्।* असावधानताहेतोर्देवविग्रहपूजकपदात् क्षेत्रनाथो निःसारितः। ततः प्रभृति गोविन्दपूजाभारः कनिष्ठभट्टाचार्योपरि समागतः। हृदयरामश्च कालीमातुर्वेशकारिपदे नियुक्तः।

* * *

काशीपुरोद्याने स्वीयरुग्णावस्थायामन्तिमे काले एकस्मिन् दिवसे गम्भीरसमाधितो जागृतो भावाविष्टः श्रीपरमहंसदेवः समुदीरयामास—"एतदभ्यन्तरे द्वौ स्तः, एकः सः स्वयमोश्वरः, द्वितीयश्च भक्तो भूत्वा विराजते।"

वर्तमानयुगे श्रीरामकृष्णः भगवतः भक्तभावरूपलीलाऽऽसीत्। भक्तस्वरूपेण तेनैकाग्रसाधनाऽभिनवलीला च सम्पादिता। तस्याः

---

* रासमणिराण्या मथुरानाथस्य च परलोकप्राप्तेरनन्तरं तद्वंशधरेषु कैश्चन शास्त्रविहितेतन्नवीनप्रतिमाप्रतिष्ठाऽऽयोजनं कृतम्, किन्तु पारिवारिकविघ्नदुर्घटनादिना तदायोजनं कार्यान्वितं नाभूत्। गोविन्दस्य सा नूतना प्रतिमा साम्प्रतमपि मन्दिरे तथैव संरक्षिता विद्यते।

साधनायाः प्रयोजनद्वयम्—एकमादर्शमुपस्थापयितुमेतत्सर्वमासीत्—द्वितीयं च विकृतस्य दीर्घविस्मृतस्य च सनातनधर्मस्य युगोपयोगिना नूतनेनादर्शेन पुनः प्रतिष्ठापनम्।

भक्तरूपतोऽसौ भवतारिण्याः समर्चनमकरोत्। तेनैव माध्यमेन मूर्त्तिपूजाया निगूढ़रहस्यमुद्घाटितमभवत्, ततश्च संसारे सत्य-शान्तिलाभाय लुप्तस्य सहजमार्गस्यान्वेषणपूर्णपरिबोधो जातः। एतत्फल-स्वरूपं निराशान्धकारनिपीड़ितमानवजनैः हृदयाप्यायनकारिण्या आशाया आनन्दस्य च शुभः सन्देशो लब्धः। मूर्त्तिपूजापरमतत्त्वलाभस्य मार्गनिर्देशोऽयं केवलं हिन्दुजातेर्भारतवर्षस्यैव कृते न हि, प्रत्युत समस्तस्यापि भूमण्डलस्य मानवजातेः सर्वधर्मावलम्बिनामादर्शस्वरूपो हिताधायकश्चासीत्। अतः परं श्रीरामकृष्णदेवो दीनहीनो भक्त-पूजकरूपेण अकिञ्चनव्याकुलरूपेण च परिदृश्यते। इयं तदीया अनन्य-सदृशी लीला विद्यते।

* * *

श्रीरामकृष्णेन केवलं विग्रहस्यैव न हि, चिन्मयदेवतायाः समर्चनं क्रियते स्म। तत्कृतपूजनमवलोकयितुं जनाः पंक्तिबद्धा मुग्धाः सन्तः समतिष्ठन्त। परवर्त्तिनि समये पूजाकालीनावस्थासम्बन्धे स्वयमेव परमहंसदेवेन व्याजह्रे—"अङ्गन्यास-करन्यासादीनि पूजाङ्गानि सम्पा-दयता मया ते ते मन्त्राः समुज्ज्वलवर्णरूपाः स्वदेहांगेष्वेव संनिविष्टा दरीदृश्यन्ते स्म, 'रं' इति जलधारया वह्निप्राकारं विचिन्त्य, इत्यादि मन्त्रान् उच्चार्य्य परितो जलं सिंचन् ध्यायन्नहं स्वचतुर्दिक्षु शतशो जिह्वा विस्तारयन्तं साक्षादग्निदेवमेव दुर्भेद्यप्राचीरवत् पूजास्थानस्य सर्वप्रत्यूहान् निराकुर्वन्तं रक्षन्तं चापश्यम्। कुण्डलिनीध्यानकाले सर्पाकृतिं कुण्डलिनीशक्तिं सुषुम्णामार्गतः सहस्रारमध्ये प्रविशन्ती-मपश्यम्। देहस्य यान्यङ्गान्यतिक्रामन्ती शक्तिरियमूर्ध्वगामिनी बोभूयते स्म निखिलान्येव तानि नितान्तजड़वत्स्पन्दनहीनानि प्रतीयन्ते स्म।"

समर्चनसमये श्रीरामकृष्णस्य तेजःपुञ्जशरीरं, तन्मनस्कविह्वलभावम्, अनेकहोरा यावत् ध्यानस्थितिं च निरीक्षमाणा लोकाः परस्परमूचुः—"स्वयं ब्रह्मण्यदेव एव साक्षात् पूजायामुपविष्टोऽस्तीति।" ध्यानविलीनचेता असौ भगवतो दिव्यं प्रकाशमेवापश्यत्। महता मोदेन तस्यान्तःकरणं परिप्लुतं, वक्षःस्थले चानन्दाश्रूणि प्रवहमानानि लोकैर्व्यलोक्यन्त। समर्चासमाप्तौ हार्दिकावेगेन सह सुमधुरकण्ठतो गानस्तुतिं कुर्वतस्तस्य परमभावुकतयाऽऽत्मविस्मृतिर्बोभूयते स्म। तदानीं सम्पूर्णमपि मन्दिरं दिव्यप्रकाशसमुद्भासितम् इव जायते। इदं ज्ञायते यद् देवता अपि कर्णौ दत्वा स्तुतिगीतिं शृणोतीव।

देव्याः साधको रामकुमारः कनिष्ठभ्रातरं देवीसमर्चनभारं गृह्णन्तं यदा ददर्श तदानीं नितरां प्रससाद, निश्चिन्ततां च जगाम। तेनालोचितम्—भ्राता कार्ये संलग्नः। किन्तु श्रीरामकृष्णस्योदासभावम्, निर्जनपंचवटीवने एकाकिनीं स्थितिम्, अधिकाधिकं ध्यानम्, निःसंगभावविहारादिकं दर्शं दर्शं चिन्तासन्तानवितानैकतानतां कदा कदाचिदसौ प्रपेदे। किन्तु तद्भक्तिभावसमर्चनमवलोक्य मथुरमहाशयोऽपि परमां प्रसन्नतां भेजे। अतो रामकुमारो व्यचिन्तयत्—समीचीनसमर्चनशिक्षणमस्मै प्रदेयमिति। तदाप्रभृति दुर्गापाठम्, कालीमातुः अन्यान्यदेवदेवीनां च पूजनादीनि विशेषतोऽसौ श्रीरामकृष्णमशिक्षयत्। श्रीरामकृष्णोऽपि अल्पीयसैव कालेन पूजादिकार्यमशिक्षत, शक्तिमन्त्रदीक्षितो भवितुं च स्वीचकार। शुभो वासरो निर्णीतः। कलिकत्ताया बैठकखानानामकविभागस्य शक्तिसाधक-केनारामभट्टाचार्यद्वारा दीक्षाकार्यं सुसम्पन्नम्। शक्तिमन्त्रदीक्षाग्रहणकाल एव श्रीरामकृष्णो भावावेशेन समाधिस्थो बभूव। शिष्यस्य भक्तिगाम्भीर्यं निरीक्ष्य गुरुः स्तम्भितोऽभवत्। स च शिष्याय हार्दिकानाशीराशीनर्पयत्।

भ्रातरं जगन्मातुः समर्चायां विनियुज्य रामकुमारो विष्णमन्दिर-

पूजको भवितुमियेष। मथुरमहोदयहार्दमपीदमेवासीत्। श्रीरामकृष्णे देवीपूजकपदे नियुक्ते, रामकुमारो नितरां निश्चिन्तोऽभूत्। श्रीरामकृष्णोऽत्यन्तदक्षतया देवीं पर्यपूपुजत्। राणी मथुरमहोदयश्च तदीयां भावपरिपूर्णामर्चामवलोक्य सातिशयं प्रासीदताम्। यथा यथा दिनानि व्यतिगच्छन्ति, तथा तथा कनिष्ठभट्टाचार्यं प्रति तयोः श्रद्धाभाव आकर्षणं च ववृधे। हृदयरामो विष्णुमन्दिरस्य पूजको न्ययुज्यत। इतो रामकुमारो चिन्ताविरहितः सन् प्राप्तावकाशो गृहगमनाय समुद्यतोऽभवत्। किन्तु कामारपुकुरगमनतः प्रागेव कार्यविशेषतः श्यामनगरमूलाजोड़नामकं स्थानं तेन गन्तव्यमभूत्। तत्रैवासौ अकस्माद् रोगग्रस्तो मृत्युमवाप। दक्षिणेश्वरे श्रीजगन्मातुः प्रतिष्ठाया एकवर्षानन्तरमेव रामकुमारः पांचभौतिकं शरीरमत्यजत्।

—:❀:—

५

निज-जनकमृत्युः श्रीरामकृष्णहृदये संसारस्यानित्यताविषये विशिष्टं प्रभावमपातयत्। इदानीं पितृतुल्यस्य अग्रजस्य मृत्युना तदीयान्तरिक-वैराग्याग्निर्नितरां प्रजज्वाल। संसारोऽनित्यः, जीवनं क्षणभंगुरम्, मानं, यशः, पार्थिवसम्पत्त्यश्चेत्यादि सर्वमतीव तुच्छम्। तथापि जीवास्तान्येवानित्यानि वस्तूनि संगृहीतुमिच्छन्ति! शरीरनाशोऽवश्यम्भावी, मृत्युरपि सुनिश्चितः, तथापि अग्निशिखासक्ताः पतङ्गा इव मनुष्या अप्यनित्यभोगासक्ता मृत्युमाप्नुवन्ति। "अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्। शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम्" इति युधिष्ठिरेणोक्तम्।

महाभारते वर्णितं यत् राजा ययातिः स्वीयकनिष्ठपुत्राद्यौवन-मधिगम्य सहस्रवर्षपर्यंतमिच्छानुसारं विषयभोगान्ते दृष्टवान् यत्—भोगवासनाया अन्तः न विद्यते इति। उक्तं च—"न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते। यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत्॥" सहस्रवर्षविषयभोगान्ते ययातिमनसि विषय-वितृष्णाप्रश्नः समुत्पन्नः, परं श्रीरामकृष्ण-जीवने दृश्यते यत् विषय-भोगं विनापि तस्मिन्नुपरतिरजायत। श्रीरामकृष्णजीवनं वस्तुतः निरूपमम्।

ज्यायसो भ्रातुर्मरणशोकः श्रीरामकृष्णस्वान्ते तीव्रानुरागरूपतः परिणतः। सदैवासौ स्वस्वरूपे स्थितः सच्चिदानन्दे निमज्जितुं व्याकुलो बभूव।

परवर्त्तिनि समये श्रीरामकृष्णेन स्वशरीरमुद्दिश्यांगुलीनिर्देशं कुर्वता स्वीयान् भाविनः सन्देशहरान् त्यागिनः शिष्यानुद्दिश्य प्रोक्तम्—"अत्रत्यसाधनभजनानुष्ठानं युष्माकं हिताय आदर्शरक्षणाय च सम्पादितम्। मत्कृतसाधनभजनषोड़शांशेषु कदाचित् युष्माभिरेकांशः करिष्यते।" श्रीरामकृष्णजीवनस्य प्रत्येकमपि कार्यं दृष्टान्तभूतम्, भविष्यतो मानवजीवनस्य च दिग्दर्शनस्वरूपम्। ततः प्रभृति सुदीर्घा द्वादशवर्षव्यापिनी याऽत्यद्भुता साधना तेन समनुष्ठिता, सा किल जगत्कल्याणार्थमेव। यस्य महतो धर्मस्य प्रचारार्थमसौ समागमत्, येषां शान्तिसमन्वयैक्यभावानां सन्देशं श्रावयितुं तदाविर्भावस्तेषां सर्वेषामेव तज्जीवनमादर्शस्वरूपं सजीवप्रमाणं च। यस्याः प्रतिमापूजाया विरुद्धो भारते देशान्तरे च सुमहान् झञ्झावातः प्रावहत्, सैव तज्जीवनयात्रामार्गस्य निर्देशचिह्नायिताऽभूत्। दक्षिणेश्वरे भवतारिण्या मूर्त्तेः पूजामवलम्ब्य तदीयसत्यप्रतिष्ठारूपकार्यं प्रादुरभवत्।

* * *

ततः प्रभृति श्रीरामकृष्णस्य समस्तोऽपि समयोऽपार्थिववस्तुध्यानचिन्तने व्यतीयाय। समर्चनानन्तरं मन्दिरे समुपविष्टो जगन्मातुः सन्निधाने नैजां हार्दिकीं तीव्रवेदनां व्यञ्जयति, भजनकीर्त्तनद्वारेण अभ्यर्थनामनुतिष्ठति च। तन्मयताया विह्वलतायाश्चायं विचित्रो भावः। दिनस्य द्वितीययामे मन्दिरद्वारेषु पिहितेषु पञ्चवटीमुपस्थाय स गम्भीरे ध्याने न्यमज्जत्। आहारेषूदासीनता, निद्रायां विरतिः प्रतिक्षणमेव तन्मयो भावः। स्वकीयजीवनान्तिमकाले त्यागिनं निजशिष्यमेकमुद्दिश्योक्तवान्—"चतुर्दशवर्षाणि नाहमस्वपम्"। गीयते स्म—

"अपास्तास्ति निद्रा, पुनः किं शयिष्ये
सुजागर्मि योगाख्ययागप्रयोगे।
इदानीं यदीयाऽस्ति निद्रा हि तस्मै
प्रदायाऽखिलां तां स्वयं शाययामि।"

निशा निःस्तब्धा। मन्दिरद्वाराणि पिहितानि। सर्वे शेरते। परन्तु श्रीरामकृष्णनयनयोर्निद्रा नास्ति। नैजं विष्टरं विहाय स निर्गतः। पञ्चवटीकाननस्यैकस्यामलकीवृक्षस्य तले समुपविश्य स ध्यानस्थोऽभवत्। सर्वेषामलक्षितः प्रभाते यदा प्रत्यागच्छत् तदानीं तस्य नयने समुद्भ्रान्ते रक्ते च निभालिते।

एकदा रात्रौ द्वितीयप्रहरे हृदयरामस्य निद्रा सहसा भग्ना। अपश्यदसौ विष्टरे मातुलो नास्ति। स कुत्रागच्छदिति चिन्तया समस्तामपि रात्रिं हृदयरामो जागृत एवातिष्ठत्।...

क्रमेण बह्वयो निशा व्यत्यगुः। एकस्यां रात्रौ हृदयरामः शयनच्छद्मना नेत्रे निमील्य विष्टरे शयानो मातुलं ददर्श यदसौ शयनस्थानमपहाय पंचवटीवनाभिमुखं प्रस्थितः। सोऽपि निःशब्दं दूरत एव तत्पृष्ठे चलितवान्। परन्तु तेन निरीक्ष्यमाण एव मातुलो वने व्यलीयत। आश्चर्यचकितो भवन् बहुकालं यावत्तत्रैवातिष्ठत्। विलम्बेनापि यदा मातुलो न प्रत्यागतस्तदासौ लोष्टानि चिक्षेप। प्रगाढ़निःशब्दताभङ्गव्यतिरिक्तो लोष्टप्रक्षेपणस्य कोऽपि परिणामो नाऽभवत्। अनेकास्वपि रात्रिषु हृदयरामस्य भयप्रदानपरम्परा प्राचलत्। परमेतावताऽपि मातुलं पराङ्मुखं कर्तुमपारयन्नसौ पृष्टवान्—"मातुल! रात्रौ सघने कानने गत्वा त्वं किमनुतिष्ठसि, कथय?" तेनोक्तं—"तत्रैक आमलकीद्रुमः, तदीये तले समुपविश्य मया ध्यानं क्रियते! शास्त्रेषूक्तं यत् धात्रीतरुतले* समुपविश्य ध्यानविधानेन सर्वेऽपि कामाः सिध्यन्ति।"

एकदा निशायामन्यस्यां भूतप्रेतानामावासे 'कबरडाँगा'-कानने प्रविष्टं श्रीरामकृष्णदेवं हृदयरामो दूरादेवाऽपश्यत्—मातुलो नग्नो

---

* "धात्रीतले समाश्रित्य जपध्यानादिसाधनात्।
साधकस्य समस्तापि कामना सफला भवेत्॥"

भूत्वा ध्यानमग्नोऽस्ति। असौ व्यचारयत्—किं मातुलस्योन्मादो जातो यदयं नग्न उपविष्टः? किमिवाश्चर्याधायकमिदम्। साहसेन समीपमुपस्थायापश्यत्—मातुलो यज्ञोपवीतमपि परित्यक्तवानस्ति। तदानीमुच्चैःस्वरेण "मातुल, अये मातुल" इत्युद्घोषणात् तदीयध्यानभंगे जाते हृदयरामेण पृष्टः—"किं करोषि, यज्ञोपवीतं वस्त्रं चावतार्य नग्नः किं तिष्ठसि"? शून्यया दृष्ट्या हृदयरामस्याभिमुखमवलोक्य स प्रत्युवाच—"हृदु, त्वं न जानासि, एवमेव पाशमुक्तेन सता ध्यानं क्रियते, लज्जा-घृणा-भय-जात्यभिमानादिकं सर्वमेव पाशस्वरूपम्, तन्मुक्तेन सता मातुर्ध्यानं कर्तव्यम्। अत एव सर्वमेतदवतारितम्। ध्यानान्ते प्रत्यागमनकाले पुनर्धारयिष्यामि"। निशम्यैतदुत्तरं हृदयरामः स्तम्भितोऽभवत्।...

जगन्मातुर्दर्शनाभिलाषव्याकुलत्वमुत्तरोत्तरं श्रीरामकृष्णहृदये प्रावर्धत। मातुः सेवासमर्चादिषु दीर्घः कालो मन्दिर एव व्यतिगच्छति। प्रारब्धा समर्चा न समाप्तिमेति। स्वरुच्यनुकूलमनेकप्रकारस्रक्चन्दनादिना मातरं भूषयति। देव्याः श्रीमदङ्गस्पर्शः कोमलः प्रतीयते। तदानीं तस्य सर्वांगेषु रोमांचो जायते। निश्चिनोति—मम माता पाषाणमयी नास्ति, सा तु चिन्मयी वर्त्तते।...

तन्मयत्वमवर्धत। माता विभूष्यते, बहुभिरुपचारैः सेव्यते, परन्तु तृप्तिर्न भवति। आरब्धमारात्रिकं न समाप्यते, बहुकालं प्रचलितमपि न विराममुपगच्छति, यत इयं भगवत्या आरतिः!

मथुरमहोदयः कनिष्ठभट्टाचार्यस्य पूजाभावमिममालोक्य विह्वलो मुग्धश्च बोभूयते। "किं प्रतिमाया एतादृक् समर्चनं सम्भवम्?" इत्यसौ व्यचिन्तयत्। कियत्कालानन्तरमनेन राणी प्रोक्ता—"महत्सुकृतिफलस्वरूपमयमद्भुतः पूजकोऽधिगतः। यथासम्भवं त्वरितमेव देवी जागर्त्तिमाप्स्यति।"...

श्रीरामकृष्णस्यालौकिकं व्यवहारं दिव्यभावावेशं गम्भीराभिनिवेशं च दर्शं दर्शं लोकैरन्योन्यमुच्यते—"कनिष्ठभट्टाचार्यमस्तिष्कं विकृतमभवत्।" कैश्चनैवमपि कथ्यते—"अस्य भूतावेशोऽभूत्।" तस्य मनः प्राणाश्च जगन्मातुर्भावसमुद्रे न्यमज्जन्। तीव्रा व्याकुलता तन्मयता च शनैः शनैरेवं प्रववृधे, यत् तस्य यथाविधिपूजाविधानमसम्भवमिव जातम्। आहारेषूदासीनतया निद्रायां च विमुखतया तदीयं शरीरं क्रमशः क्षीणतां प्रपेदे। वक्षःस्थलं रक्तायमानं नेत्रे च सर्वदैव सजले प्रतीयेते। प्रतिक्षणमव्यक्ता अशान्तिः। अन्तर्दाहात् व्याकुलः सन् 'मा मा' इत्यार्त्तनादं करोति।...

कदा कदाचित् तीव्रया व्याकुलतया छिन्नद्रुम इवापतत्। भूतले विलुठन् अङ्गानि परिवर्त्तयति। लोका उदरशूलं व्याहरन्ति। देवीमन्दिरे सन्ध्याया आरतौ मञ्जीरढक्काघण्टा निनदन्ति। तदानीमप्यसौ दिव्योन्मादे रोरुद्यमानो व्याकुलीभवति। "मातः, एकदिनं पुनरपि व्यत्यगात्, तव दर्शनं न लब्धम्, दिने दिने आयुः क्षीणं भवति। मातः! तव दया नास्ति, इदानीमपि त्वया दर्शनं न दीयते।" एतया रोदनव्याकुलतया शिलाऽपि द्रवति स्म।...

अबोधस्य शिशोः करुणं क्रन्दनमाकर्ण्य किं जननी निजक्रोडे तं नोत्थापयिष्यति? कियत्कालमन्तर्हिता स्थास्यति? आनन्दमयी चिन्मयी माता स्वीयशिशुसन्निधाने समुपस्थिता बालकं च क्रोडीकृतवती।

प्रथम-दर्शनसम्बन्धे तेन कदाचिदुक्तमासीत्..."एकदाहं जगन्मातरं गीतिमश्रावयम्, रुदन् प्रार्थयम्—'मातः! त्वामाह्वयामि, किं त्वया न श्रूयते? रामप्रसादाय दर्शनं दत्तम्, मह्यं न दास्यसि?' मातुरदर्शनेन मम मानसेऽसह्यवेदना आसीत्। लोको यथाऽङ्गप्रोक्षणं निपीडयति तथा मम हृदयमपि केनापि निपीड्यते स्म। मातुर्दर्शनं कदापि न भविष्यतीत्यालोच्य वेदनयाऽहं व्याकुलत्वमन्वभवम्। चञ्चलचेतसा विचारितं—तर्हि जीवनेन किं प्रयोजनम्? मातुर्मन्दिरे स्थापितं

करवालं प्रति मम दृष्टिरपतत्। एतस्मिन्नेव क्षणे जीवनं समापयिष्यामीति विचार्य खड्गं ग्रहीतुमधावम्। तदानीमेव मातुर्दर्शनं लब्ध्वा बाह्यज्ञानशून्यः सन्नपतम्। तदनन्तरं बहिः किं भवति, केन प्रकारेण तद्दिनं द्वितीयदिनं च व्यत्यगादिति मया न ज्ञायते। किन्तु तदानीं मदीये हृदये प्रतिक्षणमननुभूतपूर्व एक आनन्दप्रवाहः प्रावहत्। मया च मातुः प्रकृष्ट प्रकाशः समन्वभूयत।"...

एतद्दर्शनप्रसङ्गे तेन कदाचिदुक्तम्—"द्वाराणि मन्दिरं च निखिलं लुप्तमासीत्। केवलमद्वितीयानन्तासीमचेतनज्योतिःसमुद्रव्यतिरिक्तं न किञ्चददृश्यत। यस्यां दिशि यावद्दूरं दृष्टिर्धावति, तत्र सर्वत्र सर्वास्वपि दिक्षु तस्यैव चैतन्यज्योतिःसमुद्रस्य समुज्ज्वलतरंगा नानारूपास्तीव्रवेगा भीषणं गर्जन्तो मां परितो वेष्टयन्ति। क्षणादहं समाच्छन्नो जातः। अहं च गभीरसागरे निमग्न इव संवृत्तः। चैतन्यसागरतरङ्गेषु निमज्जन् उन्मज्जन् बाह्यसंज्ञाशून्योऽपतम्।"...एतत् प्रथमदर्शनानन्तरं यदा तेन बाह्यचेतना समधिगता तदानीं करुणस्वरेण 'मातः! मातः!' इति सम्बोध्यार्त्तनादो विहितः।

पूर्वोक्तदर्शनोल्लाससमाप्तौ जगन्मातुरविच्छिन्नदर्शनार्थं तदीयमन्तःकरणं व्याकुलं बभूव। निरन्तरं मातुः परमानन्दप्रदप्रकाशे निलीनता तेन समीह्यते स्म। अबोधशिशुवत् मातुरंकवियोगमात्रेणैवासावरोदीत्। निर्निमेषनेत्राभ्यां सदैव मातरं द्रष्टुमकामयत। न तद्भिन्नं किञ्चिदन्यत्। मातुरदर्शनात् हृदयस्य शून्यता व्यथा चैवं प्रावर्धत यदेतां न निरोद्धुमपारयत्। वेदनया भूमौ विलुठन् मस्तकं च घर्षयन् रुरोद—"मातः, दर्शनं देहि, दर्शनं देहि।" तदीयमद्भुतं दृश्यमिदं द्रष्टुं लोकानां सम्मर्दः समुपतिष्ठते स्म। असह्यव्याकुलतासमये 'माता' वराभयदा चिन्मयीरूपेण दर्शनं ददौ, कदापि विहस्यालापं चकार, बहुविधेन प्रकारेण प्रेम प्रदर्शयन्ती सान्त्वनां प्रददौ।'

—:*:—

श्रीजगन्मातुः प्रथमदर्शनान्तरं बहूनि दिनानि यावत् मन्दिरसमर्चादिकार्यं श्रीरामकृष्णस्यासम्भवमभूत्। हृदयरामोऽन्यब्राह्मणद्वारा पूजासपर्याप्रभृतिविधेयानि समपादयत्। वायुरोगसन्देहमनुष्ठाय भूकैलासस्य राजवैद्येन मातुलस्य चिकित्सामकारयच्च। परन्तु अयं भावरोगः किं वैद्यकचिकित्सया व्यपगतो भवेत् ?

यस्मिन् दिवसे जागतिकबोधोऽजायत तस्मिन् दिने तेनैव पूजनमनुष्ठातुं गम्यते स्म। पूजापि तस्यात्यद्भूताभवत्। पूजायामुपविष्ट एव ध्यानावस्थितो निश्चलत्वमध्यगच्छत्। परवर्त्तिनि काले स्वकीयान् त्यागिशिष्यानयमवोचत्—"मातृमन्दिरप्रकोष्ठोपरि भागे ध्यानस्थभैरवमूर्त्तिमवलोक्य ध्यानानुष्ठानकाले मया मनसि चिन्त्यते स्म, 'हे हृदय ! एवमेव निश्चलभावेन मातुः पादपद्मचिन्तनं त्वया समनुष्ठेयम्।' ध्यानमनुष्ठातुमुपविष्टेनैवमनुभूयते, शरीरस्था निखिला ग्रन्थयः खटखटाशब्दपुरस्सरं पादत उपरि भागे एकैकशोऽभ्यन्तरत एव स्तब्धा इवाजायन्त। ध्यानकाले ईषदपि शरीरसञ्चालनस्य आसनपरिवर्त्तनस्य वा सामर्थ्यं नाध्यगच्छम्। ध्यानस्थितेनानेके ज्योतिर्विन्दवोऽदृश्यन्त। कदापि पुञ्जीभूतानि ज्योतींषि चतुर्दिक्षु व्याप्तानि दृष्टानि। कदा कदाचिच्च द्रवीभूतरजतोज्ज्वलज्योतिषां तरंगैः सर्वमपि समाच्छादितमदृश्यत।··· नेत्रयोरुन्मीलने निर्मीलने च दृश्यं तदवालोक्यत।"

तदानीं कालत एव श्रीरामकृष्णदेवस्य समर्चासपर्यादीनि कमपि नवीनभावं दधुः। विधिनिषेधसीमानमतिक्रामन् भावोऽयं सीमाति-

क्रान्तभावसमुद्राभिमुखं प्रतस्थे। तदानीं काले तेन पाषाणमयी प्रतिमा नावलोक्यते, प्रत्युत प्राणमयी जाग्रद्देवीमूर्त्तिरवलोक्यते। जगन्माता वदति, विहसति, इदमनुतिष्ठ, इदं नानुतिष्ठेत्यादिशति च।...

पूर्वं भोगनिवेदनकाले दृश्यते स्म यद् 'देव्या नेत्राभ्यां देदीप्यमानोऽपूर्वः कश्चन ज्योतीरश्मिर्निर्गत्य भोगपदार्थं स्पृशति ;' परमधुना निरीक्ष्यते, 'निवेदिते भोगे, भोगनिवेदनात्पूर्वं वा देवी स्वीयांगज्योतिषा मन्दिरं प्रकाशयन्ती भोक्तुमुपविशति।' एकस्मिन् दिवसे हृदयरामो व्यलोकयत्—"मातुलो हस्तेऽर्घ्यं गृहीत्वा तन्मयो ध्यानमग्नस्तिष्ठति। सहसैवासौ चीत्कुर्वन् अगादीत्—"तिष्ठ तिष्ठ, पूर्वं मन्त्रमुच्चारयामि ततो भोक्तव्यम्।" कदाचिच्च पूजासमाप्तेः प्रागेव भोगो निवेदितः।

श्रीरामकृष्णो यदा कदाऽवोचत्—"देव्या नासिकासमीपे हस्तमानयता मया दृष्टम्, माता सत्यमेव श्वासप्रश्वासौ प्रकुरुते। बहुवारं यत्नतो विलोकनेनापि रात्रौ मन्दिरदीपकज्योतिषि मातुर्दिव्यांगच्छाया कदापि न दृष्टा। स्वीये प्रकोष्ठे स्थितेन मया बहुधा श्रूयते स्म, यत् देवी नूपुराणि धारयन्ती छम-छम शब्दं प्रकुर्वाणा बालिकेव आनन्देन मन्दिरोपरि गच्छति, शीघ्रमेव प्रकोष्ठाद् बहिर्निर्गत्यापश्यम्—देवी मन्दिरस्योपरि द्वितीयतले विकीर्णकेशा कदाचित् कलिकत्तां कदापि च भागीरथीं विलोकयति।"

पूजाकाले श्रीरामकृष्णदेवः कदापि एवमकरोत्—अर्घ्यं परिकल्प्य पूर्वं स स्वीयं मस्तकं वक्षःस्थलं पादौ च स्पृष्ट्वा तदर्घ्यजलं जगन्मातुः पादपद्मे समर्पयामास। किमिदं सर्वत्र दिव्यदर्शनं वा? उताहो देव्या सह स्वकीयोऽभेदभावावबोधो वा? किं वा स्वस्याभ्यन्तरे ओतप्रोतरूपदेवीप्रकाशानुभवो वेति?...

कदाप्यसौ सिंहासनमारुह्य मातरं भोजयति "भुङ्क्ष्व, मातः भुङ्क्ष्व, पर्याप्तं भुङ्क्ष्व।" ततश्च कदाचिदवोचत् "अपि अहं खादेयम्?

भवतु खादामि” इदमुच्चारयन् किंचित् खादित्वा अवशिष्टं मातुर्मुखे समर्पयति।

ततः प्रभृति प्रतिक्षणमेव जगन्माता तेनैव सह स्थित्वा तदीयां सम्पूर्णचेतनां व्याप्नुवाना समतिष्ठत। मात्रा साकं वार्तालापः कौतुक-परिहासः, मानाभिमानं सर्वमपि बोभूयते स्म। क्रमशः कनिष्ठभट्टाचार्यस्य क्रियाकलापोपरि कालीमन्दिरकार्यकर्तॄणां दृष्टिरपतत्—पूजानाम्ना ईदृशमवैधं कर्म! भट्टाचार्यस्य मस्तिष्कं नूनं विकृतमास्ते। एतादृशेन अनाचारेण महतोऽकल्याणस्य सम्भावना। सर्वे चिन्ताग्रस्ता बभूवुः। निखिलं वृत्तान्तमिमं विशदरूपतो विलिख्य जानबाजारे मथुरमहोदयसन्निधौ मन्दिरकार्यकर्त्तारः प्रेषितवन्तः। तेन प्रत्युत्तरितम्—“अहं स्वयमागत्य तस्य यथावद् व्यवस्थापनं विधास्यामि” इति।

सूचनामदत्त्वैवैकस्मिन् दिवसे मथुरमहोदयो मन्दिरे समुपतस्थौ। मन्दिरे क आयाति याति वेत्यत्र भावविह्वलस्य पूजकस्य किमपि ध्यानं नास्ति। स तु मातरमवलोक्य प्रमोदमग्नः समतिष्ठत। कदापि च श्रीरामकृष्णः पूजामनुतिष्ठन् व्याकुलो भूत्वा रुरोद, कदाचिद् आनन्दोल्लासनञ्चीत्कुरुते स्म। प्रियबालकवत् मात्रा साकमालापं कदापि मानं च विधत्ते स्म। मन्दिरे देवीप्रकाशो व्याप्नोति। पश्यतो मथुर-महोदयस्य शरीरं रोमाञ्चितमभूत्, स च स्तब्धोऽभवत्। “एतादृशं भाग्यम्! किं पश्यामि! मम मानवजन्म सार्थकमभवत्।” स पुलकितः सन्नचिन्तयत्। सजले नयने न सम्यक् पश्यतः। नेत्राश्रूणि प्रोञ्छन् यथागतस्तथैव मन्दिराद् विनिर्गत्य जानबाजारं निववृते। “देवी-प्रतिष्ठा सार्थिका जाता। एतावद्दिवसानन्तरं वस्तुतो जगज्जननी प्रतिमायां समाविरस्ति। इयमेव मातुर्वास्तविकी पूजा!” मथुरमहोदयो विचारे निमग्नः। द्वितीये दिने मन्दिरप्रधानकर्मचारिणा आदेशपत्रमधिगतम्—“भट्टाचार्यमहाशयो येन केनापि प्रकारेण पूजां विदधीत, न तत्र बाधा विधेया।”

तदा प्रभृति श्रीरामकृष्णं प्रति मथुरमहोदयस्याकर्षणं गम्भीरश्रद्धास्वरूपं जगृहे। क्रमशस्तद्विषयकविविधपरिचयमधिगत्य विद्वान् अनुभवी मन्दिराधिपतिमथुरमहोदयो जीवनस्यान्तिमसमयं यावत् तदीयान्तरङ्गसेवको बभूव।...

* * *

जगन्मातृविषयकः श्रीठाकुररामकृष्णस्य गम्भीराभिनिवेशः, भावावेशः, आनन्दविलासश्च क्रमश एतावान् प्रवृद्धो यत् तद्द्वारा नियमितपूजानुष्ठानादिकमसम्भवमभूत्, कदापि च तेन पूजामन्तरेणैव नैवेद्यो न्यवेदयत्, कदाचिच्च स पूजासनमुपविश्य पुष्पचन्दनादिना स्वात्मपूजामकार्षीत्। कदापि च क्षणार्धकृते मातुरदर्शनेन विच्छेदेन च महतीमस्थिरतामुपातिष्ठत्। 'मातः मातः' इत्युदीरयन् भूमावलुण्ठत्। शरीरं सम्पूर्णमेव रक्ताक्तमजायत। मातुरदर्शनेन श्वासावरोधो भूत्वा हृदयमकम्पत. अनले जले वा पतति इति न परिज्ञायते स्म। समस्तेऽपि देहे भीषणज्वाला समवर्धत। विरहाग्निसन्तापेन तदीयानि सर्वाण्यङ्गानि प्राज्वलन्। अनेकहोरापर्यन्तं गङ्गाजलनिमग्नतयापि विरहज्वाला नैवोपशमं गच्छति।

हृदयरामेणायुर्वेदिकं तैलं मर्दितम्, औषधानि सेवनार्थं प्रदत्तानि, किन्तु तस्य सत्परिणामो न जातः। मासषट्कं यावत् एषासहनीया शरीरज्वाला प्रचलति। सहसा विचित्रोपायेनैकेन सा ज्वाला कंचित्कालं शान्तिमापद्यत परवर्तिनि काले अवोचदेकस्मिन् दिवसेऽसौ—"कदाचिदहं पञ्चवटीवने समुपविष्ट आसम्, अपश्यम् एको भयङ्करः कृष्णः पुरुषो मम शरीरात् निर्गत्य पतन् लुण्ठन् रक्तनयनः मत्त इव पुरतोऽभ्राम्यत्। द्वितीये क्षणे अद्राक्षम् मद्देहनिर्गतः एकः शान्तो गैरिकवस्त्रधारी पुरुषस्त्रिशूलं करे गृह्णन् तं भयावहं कृष्णपुरुषं स्वहस्तस्थत्रिशूलेनामारयत्। ततः प्रभृति कष्टदायकः असहनीयः शरीरदाहः क्षीणतामा-

पद्यत। ततः पूर्वमसहनीया ज्वाला षण्मासपर्यन्तमत्यन्तक्लेशमदात्।"
परमुन्मादभावस्य ह्रासो नाभूत्, भावावेशः क्रमशो ववृधे। तदानीमंशतो
गात्रदाहस्योपशमो जातः।

अकस्माद्वैकदा तद्दिव्योन्मादस्यास्वाभाविकव्यवहारेण मन्दिरे
महान् कोलाहलः संवृत्तः। अतीव विपरीता घटना घटिता।
राणी देव्या दर्शनार्थमागताऽऽसीत्। गंगास्नानं विधाय मन्दिरमागत्य
श्रीमूर्त्तिपुरतः समर्चनमनुष्ठातुमुपविष्टा। राणीमाता कनिष्ठपुरोहित-
मधुरकण्ठविनिर्गतं मातृनामगानं श्रोतुमभिलषति स्म। गानश्रवणकाले
कर्णेपु सुधावर्षणमिवान्वभूयत। पूजां कुर्वाणया तया मातुः स्तवनगान-
कृते कनिष्ठभट्टाचार्योऽनुरुद्धः। श्रीठाकुरोऽपि * राणीमातुः समीप-
मुपविश्य भावाविष्टो रामप्रसादकमलाकान्तप्रभृतिभक्तसाधकविरचितं
गानमगायत्। राणीमातुर्हृदयं भक्तिरसाप्लुतमभूत्। परन्तु सहसैवा-
ज्ञानतः राणीमानसे अभियोगचिन्तैका प्रादुरभूत्। सा तु तदभियोग-
फलाफलचिन्तायां न्यमज्जत्। श्रीठाकुरस्य गानं सहसा निरुद्धमभवत्।
असन्तुष्टोऽसौ रूक्षस्वरेणोवाच—"अत्रापि सैव चिन्ता"? इत्युक्त्वा
तेन राणी चपेटिकया ताड़िता।

एकः साधारणपूजको राज्यै चपेटिकां दत्तवान्। मन्दिरे कोलाहलः
संवृत्तः। मन्दिररक्षकसेवको भट्टाचार्यं श्रीठाकुरं निगृहीतुमाक्रामत्।
केचित् कुवाच्यमवादिषुः। केऽपि च हन्तुमुद्यताः। परन्तु असौ भावा-
विष्ट आसीत्। तस्य मुखे च मृदुमन्दहास्यं व्यराजत। अनेन मधुर-

---

* 'ठाकुर' (ठक्कुर)-शब्दस्य 'देवता' 'देवप्रतिमा' वा इति वाच्यार्थः
कोशेपु दृश्यते। वङ्गदेशे पूज्यब्राह्मणकृते 'ठाकुर' इति शब्दप्रयोगः क्रियते।
दक्षिणेश्वरे भक्तसमागमानन्तरं श्रीरामकृष्णं तद्भक्तगणः 'श्रीठाकुर'-शब्देनैव
समबुध्यत। अतः वयमपि अस्मिन् ग्रंथे श्रीरामकृष्णकृते ठाकुरशब्दस्य
परमहंसदेव-शब्दस्य च प्रयोगं विधास्यामः।

महोदयचेतसि सुमहानाघातो जातः। परन्तु राणीमाता प्रत्युवाच—"कनिष्ठपुरोहिताभ्यन्तरप्रविष्टा देव्येव मामशिक्षयत्"। एतावता मथुरमहोदयो न सन्तुतोष। विचारशीलत्वादसौ व्यचिन्तयत्—देव्या आवेशः कनिष्ठपुरोधसोऽभ्यन्तरे जायते इति सत्यम्; परन्तु वायुप्रकोपोऽपि वर्धमानः सम्भवति, तस्य चिकित्सा कर्त्तव्या। प्रसिद्धकविराजगंगाप्रसादसेनचिकित्सायां श्रीठाकुरः स्थापितः। परन्तु ततः कालात् कनिष्ठपुरोधसं प्रति राणीदेव्याः श्रद्धाभावः प्रववृधे। अन्तर्यामी पुरुषोऽयमिति भावो राणीमनसि स्थानमगृह्णात्।

मथुरमहोदयः केवलं चिकित्साप्रबन्धं विधाय न न्यवर्त्तत, प्रत्युत विविधयुक्तितर्कैः श्रीठाकुरं सावधानमप्यकार्षीत् यद् भगवद्भक्त्या एतावानतिरेको न साधीयान्। सर्वोऽपि विषयः सीमातिक्रान्तो न समीचीनः। उभयोरपि मध्ये एतादृशो समन्वयवार्ता प्रचचाल। तदानीन्तनीयया घटनयैकया मथुरमहोदयस्य नेत्रयोर्यवनिकाऽपसृतेव। कथाप्रसंगेनैकदा मथुरमहोदयेन श्रीठाकुरः प्रत्युक्तः—"ईश्वरोऽपि स्वनियममनुसरति। तेन यो हि नियमो निर्धारितस्तं त्रोटयितुमीश्वरे शक्तिर्नास्ति।" एतदाकर्ण्य श्रीठाकुरश्चकितोऽब्रवीत्—"किं जल्पसि, भगवान् स्वीयनिर्मितनियमं यदैव समीहते तदैवान्यथा कर्तुं शक्नोति, तत्स्थाने च नियममपरं निर्मातुं शक्नोति।" मथुरमहोदयस्तद्वचनमनादृत्य तर्कमुपास्थापयत्—"रक्तपुष्पवृक्षे रक्तमेव कुसुमं जायते, तत्र श्वेतस्योत्पत्तिरसम्भवा। यतस्तेन नियमोऽयं निर्धारितः। यद्येवं तर्हि रक्तपुष्पवृक्षे श्वेतपुष्पमीश्वरः कथं नोत्पादयति"? ठाकुरस्त्वरितमेवोदतरत्—"स्वाधीनोऽसौ, समीहामात्रेणैव सर्वमनुष्ठातुं प्रभवति।" परन्तु मथुरमहोदयो न तद्वचसि विश्वासमकरोत्। द्वितीये दिवसे श्रीठाकुरः शौचार्थं बहिर्गच्छन्नभूत्। मार्गेऽपश्यत् एकस्य रक्तजपाकुसुमवृक्षस्यैकस्यां शाखायां द्वे पुष्पे विकसतः। तत्रैकं रक्तमपरं च श्वेतम्। दृष्ट्वैव तां शाखाम् उभयविधकुसुमसहितां भङ्क्त्वा मथुरमहोदयसमीपं

प्रक्षिप्योवाच—"पश्येदम् ।" मथुरमहोदयश्चकितो भवन् उक्तवान्—"अस्तु महाशय, अहमेव पराजितः ।"

एतावतापि मथुरमहोदयः श्रीठाकुरं स्वच्छेन मनसा नांगीकृतवान्, उपायान्तरेणापि तं परीक्षितुमचेष्टत ।

"श्रीरामकृष्णस्य निद्राराहित्यं भावाभिनिवेशाधिक्यं च द्वयमिदं कठोरस्येन्द्रियनिग्रहस्य फलं भवितुमर्हति । किञ्चित् खण्डिते ब्रह्मचर्ये भावोऽयं शैथिल्यमाप्स्यति व्यवहारे च समतास्थापनं भविष्यति ।" इति मथुरमहाशयेन मनसि आलोचितम् । केषांचनापि परिज्ञानमन्तरेणैव नगराद् द्वे परमसुन्दर्यौ समानीय रहः श्रीठाकुरस्य प्रकोष्ठे प्रवेशिते । वारांगनारूपेण इमे तेन न दृष्टे । "स्त्रियः समस्ताः सकला जगत्सु" इति बुद्ध्या द्वयोरभ्यन्तरे भवतारिणी जगदम्बैव विलोकिता । स तु मातः ! मातः ! इत्युक्त्वा समाधिस्थो जातः । द्वे अपि ते लज्जिते अधोमुख्यौ विनिर्गते । नैतेन किमप्यभवत्, किंचिद्दिनानन्तरं मथुरमहाशयः श्रीरामकृष्णं मछुआबाजारस्यैकस्यां वीथ्यां सुन्दरीणां विलासिनीनां मध्ये समानयत् स्वयं च तस्मात्स्थानादपससार । श्रीठाकुरो विलासिनीर्विलोक्यैव मातुः स्तुतिं कर्त्तुं प्रवृत्तः । बाह्यचेतना व्यलुप्यत । शिशुरिव मग्नोऽभवत् । स्त्रियः अवाचो बभूवुः । किमेतादृगपि सम्भवति, कोऽयं महापुरुषः ? ता आत्मानं धिक्कुर्वाणाअपराधिन्य इव तच्चरणयोर्निपेतुः । परन्तु तदानीं कालेऽप्यसौ समाधिस्थ एवासीत् । यदा मथुरमहोदय एतां वाराङ्गनाघटनामाकर्णितवान् तदा सोऽतीवाश्चर्यचकितः बभूव । परं तेन श्रीठाकुरस्य परीक्षा न परित्यक्ता । एवं किल मथुरमहोदयेन बहुभिः प्रकारैः श्रीठाकुरः परीक्षितः ।

* * *

श्रीठाकुरद्वारा नियमितसेवापूजनादि न सम्भवमिति श्रीमथुरमहाशयो निर्णिनाय । तत्प्रबन्धोऽपि तेन सम्पादितः, तदानीमेव काले श्रीठाकुरस्य पितृव्यपुत्रो रामतारकचट्टोपाध्यायो जीविकामन्विष्यन्

दक्षिणेश्वरमाययौ। तदीयं हलधारीति व्यावहारिकं नाम। श्रीठाकुरो यावत् स्वास्थ्यं न लभते तावत्कालपर्यन्तं मथुरमहोदयस्तमेव देव्याः पूजकं न्ययुंजत्।

हलधारी सुपण्डितो निष्ठावान् विष्णुभक्तश्चासीत्, वृत्तिकर्षितो देवीपूजाव्रतमङ्गीचकार। किंचिद्दिनानन्तरं बलिदानप्रथा निरोद्धुं तेन प्रस्तावः कृतः। बलिदानप्रथा बहोः कालात् प्रचलिता आसीत्। एकस्य पूजकस्य कथनेन सा कथं निरोद्धुं शक्यते ? बलिदानं न निरुद्धम्। अतः कारणात् हलधारी दुःखितेन चेतसा पूजनमकार्षीत्। सम्भवत एक-मासानन्तरं हलधारी मन्दिरे सन्ध्यावन्दनं कुर्वन् कर्कशशब्दपूर्वकं देव्या आज्ञापनमशृणोत्—'अद्य प्रभृति मम पूजा त्वया न कर्त्तव्या, यदि करिष्यते तर्हि सेवापराधेन तव पुत्रो मरिष्यति।" हलधारिणा तत्र ध्यानं न दत्तम्। विषयेऽत्र तेन स्वमनसो दुर्बलत्वमंगीकृतम्। परन्तु किंचिद्दिनानन्तरमेव तत्पुत्रो दिवंगत इति संवादो लब्धः। श्रीराम-कृष्णपरामर्शमनुसृत्य तद्दिवसादसौ हलधारी देवी-पूजां परित्यज्य गोविन्दपूजनमंगीचकार। हृदयरामश्च देव्याः पूजकपदे नियुक्तः।

* * *

श्रीरामकृष्णजीवने इदानीं प्रभृति सततबोधा, केवलानन्दरूपा निर्विकल्पावस्था प्रारब्धा। श्रीरामकृष्णो जगन्मात्रा विविधभावतः अनेकरूपतश्च निरन्तरमेव समाकीर्णमात्मानमपश्यत्। निरवकाशं मातृ-दर्शनम्! अविच्छिन्नो मातृप्रकाशः! मातृसाधना सिद्धिरूपेण परिणता, एतर्हि माता बहिरभ्यन्तरे सर्वत्रैव परिव्याप्नोति। स नेत्रयोरुन्मीलने निमीलने निर्निमेषदृष्टौ च नानारूपेषु मातुरेव दर्शनमकार्षीत्। कदाचित् मातुरभिन्नमात्मानमपश्यत्। तथापि मातरि शिशौ चास्त्येव भेदः। इदानीमसौ मातुः क्रोडस्य लघुतरः शिशुः। उत्तिष्ठन् उपविशन् चरन् विचरंश्च मातृमुखापेक्षी बभूव। इदानीं पूर्ववत् विरहजनितशिरो-घर्षणादिकम् अंगानां चेतस्ततः क्षेपणं व्यपगतम्। सम्प्रति क्रमशो

विलासो—मातृभावतश्च निरवच्छिन्ना चैकतानता। मातृविरहजनितो गात्रदाहो रूपान्तरितोऽभवत् दिव्यानन्दस्य परिपूर्णतायामुच्छलतायां च।

त्रिकालेषु कालातीतसत्तायामपि "सर्वं खल्विदं ब्रह्म" इति वाक्यं नूतनरूपेण विकसितम्। मातैव सर्वं, समस्तापि चेतना मातृरूपा। यावत्प्रकाशः मातृस्वरूपः। कालातीत-सत्तायामपि सैव विराजते। सर्वत्रैव वस्तुषु प्राणिषु वाणीषु गुणेषु च सैव विराजते। न केवलं सत्त्वगुण एव तमस्यपि तस्या एव सत्ता। "तस्य भासा सर्वमिदं विभाति"—एतादृशी दिव्याऽनुभूतिस्तस्य जाता।···

पुनः स्थूलदृष्ट्या मानवाः यां मूर्त्तिपूजां मन्यन्ते, सैव ज्ञानातीतपरमतत्त्वस्यैक उत्तमः स्तरः। तेन स्वजीवनादर्शे तस्यैव तत्त्वस्य प्रतिष्ठा कृता। अयमेव तदीयसमन्वयस्वरूपजीवनवेदस्य प्रथमो मन्त्र इवाभूत्।

* * *

युगधर्मसंस्थापनाय श्रीरामकृष्णो निरन्तरं द्वादशवर्षपर्यन्तं सातिशयकठोरां साधनामकरोत्। प्रथमं वर्षचतुष्टयस्य साधनकाले जगज्जनन्या मुखमवलोक्यैव एकाकी असौ साधनपथमन्वसरत्। अनन्तरं जगन्माता, मातृमुखापेक्षिणः शिशोः प्रसारितौ हस्तौ स्वयं गृहीत्वा स्वकीये क्रोडे तं स्थापितवती। साधनमार्गेऽत्र एकान्तनिष्ठा तीव्रतमा व्याकुलता चेति द्वयमेव तस्यैकमात्रं पाथेयमभूत्। व्याकुलतेयं कीदृशी गम्भीरा तीव्रतमा चासीदित्येतदाभासः श्रीठाकुरस्य स्वमुखःवर्णनेनैव समुपलभ्यते—"शरीरानपेक्षितत्वान्मनसस्तदानीं मम शिरोरुहा प्रवर्धमाना धूलिधूसराः जटिलतां दधुः। ध्यानमनुष्ठातुमुपविष्टस्य मनस एकाग्रतया शरीरमेतादृक् स्थाणुत्वमापद्यते स्म यत् पक्षिणो जडवस्तु समवधार्य निःशङ्कं शिरसि समुपविश्य च जटासु चञ्चुपुटानि निक्षिप्य खाद्यवस्तून्यन्विष्टवन्तः। कदाचिच्च भगवतो विरहे व्याकुलो

भूत्वा भूमौ विलुठ्य शिरोघर्षणेन रुधिरमपि निःसरति । एवं ध्यान-भजन-प्रार्थनादिभिः समस्तमपि दिनं कथं व्यतिगच्छतीत्यस्य परिज्ञानमेव नाभवत् । पुनश्च सायंकालीनमन्दिरशङ्खघण्टारवमाकर्ण्य दिनं समाप्तमिति बोधो जायते, जीवनस्यैकं दिनमिदमपि वृथा व्यपागच्छत्, मातुर्दर्शनं नाभवत् ! तदानीं तीव्रतरवेदनया मनसो व्याकुलत्वादहमवशो भूमौ निपतन् चीत्करोमि—'मातः, इदानीमपि दर्शनं न दीयते ।' यातनया पौनःपुन्येन विलुण्ठन् रुदन्नभवम् । लोकाः कथयन्ति—"उदरे शूलमुत्पन्नमिति रोदिति ।"

परवर्त्तिनि काले बालभक्तानुद्दिश्य सखेदं स प्रोक्तवान्—"मानवाः पत्नीपुत्रादिमरणेन सम्पदो नाशेन च अश्रूणि प्रवाहयन्ति, परन्तु परमेश्वरप्राप्तये तथा को रोदिति, कथय ? यदि कोऽपि कथयेत्—'मया एतावानार्त्तनादः कृतः, एतावती प्रार्थना विहिता, परं तेन दर्शनं न दत्तम् ।' भगवन्तमुद्दिश्य व्याकुलो भवन् एकवारं रुदिहि, तदानीं पश्य यदसौ कथं दर्शनं न ददाति ।" आन्तरिकतोद्भूतं वचनमेतादृशं श्रोतृहृदयमस्पृशत् ।

एषु द्वादशसु वर्षेषु तथा परवर्त्तिनि जीवनेऽपि श्रीठाकुररामकृष्णेन कति नवीना अनुभूतयो, नूतनानि दर्शनानि च सुविहितानि ! एतद्विषये संसारः किं जानाति ? तस्या अनन्तासीमानुभूत्याः सम्बन्धे तेन कदाचित् प्रोक्तम्—"अत्रत्योपलब्धिर्वेदवेदान्तमलङ्घयत् ।" तस्य 'अवाङ्मनसगोचर'-राज्यपरिज्ञानं यावदेव लब्धं, तत्प्रकाशस्थानमप्यत्र लघीयसि पुस्तके नास्ति । अतो अस्माभिर्विभिन्नसाधनदर्शनादिविषये साधारणतयैवात्र निर्देष्टुं शक्यते ।

श्रीरामकृष्णस्य साधनाक्रमो विभिन्नसाधनमार्गस्तरसूचको नास्ति । 'सर्वेऽपि धर्माः भगवत्प्राप्तेः सन्मार्गभूताः', एतत्सत्यस्य प्रदर्शनमेव तत्साधनाया मूलसूत्रं मर्मवाणी वा ।...अद्वैतभावतः सिद्धिं लब्ध्वाऽपि तेन एकेश्वरवादमूलक इस्लामधर्मः संसाधित आसीत् ।

विभिन्नधर्मेषु लघुत्वगुरुत्वयोर्हेयोपादेययोश्च यद्द्वन्द्वं संकुचितो दृष्टिकोणो वा विद्यते श्रीरामकृष्णसाधनक्रमे तन्निराकृतिर्दृश्यते। तेन शर्करापर्वतस्य कथैका श्राविताऽऽसीत्—"शर्करायाः एककणभक्षणेन यस्याः पिपीलिकाया उदरं पूर्यते, सा किल शर्करायाः पर्वते कियती शर्करेति परिज्ञातुमभिलषति किम्? शुकसनकादयः पिपीलिकोपमाः, श्रीपरमात्मा शर्करापर्वतसमानः।"

सर्वसम्प्रदायसाधनासु सिद्धिं लभमानेन तेन परमं सत्यमिदमुपलब्धम्—"यावन्ति मतानि तावन्तो मार्गाः।" प्रत्येकोऽपि धर्मः समुत्कृष्टशान्तिलाभस्यैकः पन्थाः।...महामानवस्यैतस्य जीवने समधीता वेद-बाइबिल-पुराण-कुरान-त्रिपिटिक-जेन्दावस्ताप्रभृतयः सर्वेऽपि साम्प्रदायिकग्रन्थाः सन्देहवितर्कात्मके वर्तमानयुगेऽपि एकस्यां वेद्यां सहैव स्थानमधिगतवन्तः सन्ति।...

प्रथमचतुर्वर्षाणि यावद् बहुविधैर्भावैर्जगन्मातुर्दर्शने प्रतिष्ठिताऽपि श्रीरामकृष्णजीवनगतिस्तत्रैव नावरुद्धा परमनवच्छिन्नरूपा अनन्तभावसमुद्राभिमुखं वेगशालिनी सरिदिव प्रवहमाना बभूव। सम्प्रत्यसौ दासभावसाधनासमुद्रे न्यमज्जत्। श्रीरामचन्द्रदर्शनाय तेन रामदासस्य हनूमतः पूर्णो भावः स्वात्मन्यारोपितः।..

दास्यभावसाधनायाश्चरमाऽनुभूतिस्तदीया तत्कथनेनैव विज्ञायते—"तदानीमेकदाऽहं पञ्चवट्यामुदासीन उपविष्ट आसम्। तदाऽपश्यम् अतुलनीयैका ज्योतिर्मयी नारीमूर्त्तिः कियद्दूरे आविर्भूय तत्स्थानं प्राकाशयत्। तन्मुखोपरि प्रेमदुःखकरुणासहिष्णुतापरिपूर्णमनुपमं लावण्यं नृत्यति। मूर्त्तिरसौ प्रसन्नदृष्टिः शनैः शनैरुत्तरतो दक्षिणस्यां दिशि ममाभिमुखमग्रे ससार। आश्चर्यचकितेन मया विचारितम्—केयम्? सहसा कश्चिद्वानरः शब्दायमानोऽभिमुखं कूर्दित्वा तच्चरणयोरपतत्। ममाभ्यन्तरे केनचित्कथितमिव यत् "इयं जनकराजतनया राममय-

जीविता सीतादेवी" इति। मातर्मातर् इत्युच्चारयन् तस्याश्चरणयोः पतनेच्छया यावदहमुपसर्पामि तावन्मूर्त्तिरसौ मम शरीरे प्रविवेश। अहमानन्दाप्लुतश्चेतनाशून्यो जातः। ध्यानचिन्तनविधानमन्तरेणैव सहजरूपेण एतादृग्दर्शनं प्रागितो न मया कदापि समुपलब्धम्।"

—:-*-:—

राण्या रासमणिदेव्याः कालीमन्दिरस्य कीर्तिश्चतुर्दिक्षु प्रसृता। साधुसेवायामप्यसौ मुक्तहस्ता। अनेके तीर्थयात्रिणः साधवः संन्यासिनः सिद्धपुरुषाश्च दक्षिणेश्वरे समायान्ति। तदानीं कस्यचित्साधुपुरुषस्य साहाय्यतः श्रीरामकृष्णेन प्राणायामादिहठयोगक्रियाऽभ्यस्ता। तत्फल-रूपेण तस्य जडसमाधिप्राप्तेरुपक्रमो बभूव। परन्तु जगत्कल्याणसाधनं तज्जीवनोद्देश्यमिति भगवत्कृपया जडसमाधौ तस्य प्रवृत्तिर्नाभूत्।....

हलधारिणश्चर्चाऽस्माभिः पूर्वमनुष्ठिता। स किल राधाकृष्णस्य पूजक आसीत्। अस्मिन्समये रहसि परकीयाप्रेमसाधने प्रवृत्तः। वैष्णवमते-ऽयमप्येकः साधनमार्गः। तस्य निन्दा सर्वतः प्रसृता। वाक्सिद्ध आसीदसाविति, अतस्तदभिमुखं किञ्चित् कथयितुं कस्यापि साहसं नाभवत्। सद्धर्मप्रवर्त्तकः श्रीरामकृष्णस्तत्कल्याणकामनयैकदा तं बोधयितुमगच्छत्। परन्तु फलं प्रतिकूलमेव जातम्। क्रुद्धेन हल-धारिणा प्रत्युक्तम्—"कनिष्ठो भूत्वा त्वं मामनादृतवानसीति तव मुखाद् रुधिरं निर्गच्छतु।"

ततः किञ्चिद्दिनानन्तरं सन्ध्यासमये श्रीठाकुरस्य तालुदेशतो निरवच्छिन्नो रक्तस्रावः प्रारब्धः। तेनोक्तम्—'सेमपत्ररसवत् कृष्ण-वर्णमिदं रुधिरम्....मुखाभ्यन्तरे वस्त्रखण्डप्रदानेनापि न रक्तस्रावो निरुध्यते।' समाचारं प्राप्यानेके समागताः। हलधारी चापि सविस्मयं समागतः। मयोक्तोऽसौ—'भ्रातः शापं दत्वा त्वया मम कीदृगपकारः कृतः। पश्य।' सोऽपि रुरोद। 'तस्मिन् दिवसे एको वृद्धः साधुर्मन्दिरे समागच्छत्। कोलाहलमाकर्ण्य सोऽपि तत्र समायातः। परीक्षणानन्तरं

तेनोक्तम्—'ज्ञायते, त्वया हठयोगसाधना क्रियते स्म, परं न किमपि भयकारणम्। रुधिरपातः समीचीन एवाभवत्। हठयोगस्य चरमा सिद्धिर्जड़समाधिरेव। तवापि स एवं सिध्यति स्म। रुधिरं शिरसि न समागत्य मुखादेव विनिर्गतम्। एतल्लक्षणं समीचीनमेव। यतः समधिगतो जड़समाधिर्न कदापि भग्नो भवति। तव शरीरेण जगन्मातुः किमपि विशिष्टं कार्यं सम्पत्स्यते। अतः प्रकारेणैतेन त्वं रक्षितः।' साधोर्वचन-मिदमाकर्ण्य मया सन्तोषो लब्धः।" श्रीठाकुरस्य शरीरं देवरक्षितं देवकार्यायैव वर्तते। अतः यावत्तत्कार्यसमाप्तिर्न स्यात् न तावदिदं नङ्क्ष्यति।

* * *

हलधारिणा सह श्रीठाकुरस्य रहस्यमयः सम्बन्ध आसीत्। श्रीठाकुरो वयसा लघुर्हलधारिदृष्ट्या वज्रमूर्खश्च। हलधारी वयःश्रेष्ठः शास्त्रज्ञः पण्डिताभिमानी चाविद्यत। तथापि श्रीठाकुरस्य दिव्यभावावेशं, जगन्मातृभावे तन्मयत्वं, भगवद्गुणनामगानश्रवणेऽपूर्वमुल्लासं च दर्शं दर्शं तेनेदं विज्ञायते स्म यद् रामकृष्णस्याभ्यन्तरे ध्रुवमेव ईश्वरा-वेशो जायते। हृदयराममुद्दिश्य हलधारी स्वयमुवाच च—"नूनमेव त्वया तस्याभ्यन्तरे किंचिद्दृष्टम्, अन्यथा एतावता यत्नेन तस्य सेवा-सम्पादनं न सम्भवम्।'

श्रीठाकुरकृतं समर्चनमवलोक्य हलधारी मुग्धो भवन् उवाच—"रामकृष्ण! इदानीं मया त्वं परिज्ञातः।" एतादृशघटनायाः परिसमाप्ति-रेकया विचित्ररीत्या समभूत्। कालीमाता तमोगुणमयी, अतस्त्वया तस्या आराधना न विधेयेति श्रीरामकृष्णो हलधारिणा प्रोक्तः। एकस्मिन् दिवसे श्रीठाकुरो मन्दिरं प्रविश्य रुदन् भवतारिणीं पृष्टवान् "मातः! किं त्वं तमोगुणमयी असि? हलधारी तु तथैव वक्ति।" जगन्मातुर्मुखात् तद्यथार्थस्वरूपमाकर्ण्य भावाविष्टः श्रीठाकुरो

हलधारिणः समीपमागत्य, तत्स्कन्धमारुह्य च प्रत्युवाच—"त्वया मम माता तामसी प्रोच्यते ? किं मम जननी तामसी ? जननी तु त्रिगुणमयी सत्यपि विशुद्धसत्त्वगुणमयी विद्यते।" भावाविष्ट-श्रीठाकुर-स्पर्शनेन पूजासनोपरिसमुपविष्टस्य हलधारिणोऽन्तःकरणं दिव्यालोकोद्भासितं संवृत्तम्। स च श्रीठाकुरस्याभ्यन्तरे जगन्मातुः प्रकाशमवलोक्य श्रद्धया तच्चरणयोः पुष्पाञ्जलिं समपर्यत्।

हृदयरामो घटनामेतामद्भुतामपश्यत्। स चानन्तरं हलधारिणं पृष्टवान्—"मातुल ! भवान् कथयति—रामकृष्णोपरि भूतावेशो वर्त्तते, यद्येवं तर्हि भवता तस्य पूजनं कथं कृतम् ?" हलधारिणा उत्तरितम्—"किं वच्मि, हृदयराम ! कालीमन्दिरादागत्य ममोपरि कीदृशमिन्द्रजालमयमपातयदिति न वेद्मि। इदानीं मया सर्वं विस्मृतम्। तदभ्यन्तरे मया साक्षाद्भगवतः प्रकाशो दृष्टः। कालीमन्दिरे यदैव श्रीरामकृष्णसमीपमुपसर्पामि तदैव मया तथैव दृश्यते। कीदृशोऽयमत्यद्भुतश्चमत्कारः, मम मतिः किमपि निर्णेतुं न प्रभवति।"

ततः प्रभृति संख्यातीता भाग्यशालिनः पुरुषाः श्रीठाकुरस्याभ्यन्तरे जगन्मातुरन्यान्यदेवदेवीनां च प्रकाशमवलोक्य देवमानवभावनया सश्रद्धं तं पूजयन्ति।

* * *

तदानीं काले तेन 'मृत्तिका रूप्यकम्, रूप्यकं मृत्तिका' चेत्यभिनवं साधनमनुष्ठितम्। एतत्साधनावसरे श्रीठाकुरेण सुवर्णमृदोः समानज्ञानं प्राप्यते स्म। 'समलोष्टाश्मकाञ्चन' इति शास्त्रवाक्यं प्रमाणितमभवत्। ततश्च तेन समदर्शनस्य समज्ञानस्य च विविधसाधनमनुष्ठितम्। आब्रह्मस्तम्बपर्यन्तेषु सर्वेष्वपि वस्तुषु प्राणिनिवहेषु च श्रीभगवतः प्रकाशमालोकयन् असौ "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति शास्त्रवाक्यं स्वजीवने चरितार्थयामास।

तदानीं भावाधिक्यवशात् "सर्वं खल्विदं ब्रह्म, नेह नानास्ति

किञ्चन" इत्युपनिषद्वाक्यं संगतमभवत्। सामान्यजातिकुलसीमाभावप्लावनेन विनाशमगच्छत्। अज्ञातजातीनामौदरिकानामुच्छिष्टं महाप्रसादबुद्ध्या स्वीचकार। तदुच्छिष्टस्थानं च स्वयमेव मार्जनीभिः समशोधयच्च। भगवांस्तु सर्वत्रैव परिव्याप्नोति, हेयोपादेयताबुद्धेः कुतोऽवकाशः? श्वपाकोऽपि भगवद्रूप एव। श्वपाककर्मापि भगवत्समर्चनमेव। अतस्तेन तदपवित्रस्थानं स्वशिरोजटाभिः मार्जयित्वा पवित्रीकृतम्। एतावदेव न हि, तदनन्तरं बहूनि रोमाञ्चकारीणि अभिनवसाधनानि समनुष्ठितवान्। शास्त्रेषु तादृशसाधनानामुल्लेखो नास्ति। शास्त्रं नाम किम्? तत्तु अवतारभूतपुरुषाणामनुशासनवाक्यं, तथा महामानवानां च वचनमेव। श्रीठाकुरस्य समबुद्धिसाधना तदानीं चरमसीमानं प्रापद् यदाऽसौ परकीयं मलमपि निर्विकारचेतसा रसनयाऽस्पृशत्। तदानीं तद्दृष्ट्या सुगन्धितचन्दने दुर्गन्धितमलेऽपि किञ्चिदन्तरं नासीत्। एतादृशसाधनायामप्यसौ सफलोऽभवत्।

एतादृशसाधनप्रेरणा गुरूपदेशेन नाधिगता। स्वीयशुद्धमनसः प्रेरणयैव तथाविधसाधनायां स्वयं प्रववृते। स उवाच—"शुद्धमनो नात्मातिरिक्तम्, तदेव शुद्धं मनः गुरोः कर्म सम्पादयति।" सद्गुरुरिव तस्य जन्मपरिशुद्धमन एव बाल्यात् तस्य कृते साधनपथं निर्दिशति। तदीयं शुद्धं मानसमेव युवसंन्यासिवेशानुरूपसूक्ष्मदेहं गृहीत्वा सर्वानपि साधनविषयान् यथाकालं तं निर्दिदेश विषयेऽत्र परवर्त्तिनि काले श्रीठाकुरः स्वयमेव प्रोवाच—"मादृश एव कोऽपि युवा ममाभ्यन्तरतः संन्यासिवेशं गृहीत्वा निर्गत्य सर्वस्मिन् विषये मामुपादिशत्। तन्मुखाद् यद्यदाकर्णितं तदेव सर्वं ब्राह्मणीनागाप्रभृतयो ममाभ्यर्णमागत्योपदिदिशुः। एतेनैतत्प्रतीयते यत् केवलं शास्त्रविधेः सत्यतां तन्मर्यादां चाक्षुण्णां विधातुं ते गुरुरूपतो मम जीवने समुपस्थिताः समभूवन्। एतदतिरिक्तं गुरुरूपतस्तेषां ग्रहणस्य कारणान्तरं नोपलभ्यते।"...

साधनकालिकप्रथमचतुर्वर्षाणामन्तिमे भागे श्रीठाकुरस्यैकं

महत्त्वपूर्णमलौकिकं दर्शनं समपद्यत। तदानीं कालेऽसौ कामारपुकुरे ग्रामे न्यवसत्। शिविकामारुह्यैकदा शिवहर (शिहड़) ग्रामनिवासिनो हृदयरामस्य गृहे गच्छन्नासीत्। सुविस्तृतपरिसरस्य, छायाशीतल-मार्गस्य, प्राकृतशोभासमृद्धमनोहरपरिवेशस्य, सुनीलाकाशमहत्तादीनां च प्राकृतिकसौन्दर्यस्यानन्दमनुभवन् गच्छन् अभूत्। सहसैव तेन दृष्टम्—स्वस्यैव शरीरात् सुन्दरौ द्वौ किशोर-बालकौ अकस्मात् निर्गत्य काननोत्पन्नपुष्पान्वेषणतत्परौ कदापि परिसरे धावतः, कदापि च शिविकापार्श्वमुपस्थाय हसन्तौ वार्तालापहासपरिहासादिकं कुर्वाणौ सहैवागच्छताम्। बहुकालपर्यंतं विविधप्रकारक्रीडां कुर्वन्तौ तौ द्वावपि दिव्यमूर्त्ती तस्यैव देहे पुनः प्रविष्टौ। सहजदशायामेव श्रीठाकुरेणैतादृशो लीलाभिनयो दृष्टः।*

—:❀:—

* ततः प्रायशः सार्धैकवर्षे व्यतिगते दक्षिणेश्वरे चैकदा प्रसङ्गवशात् भैरवीं ब्राह्मणीमुद्दिश्य एतादृशदर्शनकथां श्रीठाकुरो जगाद। ब्राह्मणी समुत्तेजिता सावेगं बभाषे—"महात्मन्! त्वया सत्यमेव दृष्टम्। सम्प्रति नित्यानन्ददेहे श्रीचैतन्य आविर्भूतः। नित्यानन्दः श्रीचैतन्यश्च साकमेव भवदभ्यन्तरस्थौ।" ततो ब्राह्मण्या चैतन्यभागवतात् तदनुरूपः श्लोकः समुद्धृतः।

केवलं 'श्रीगदाधरः' रामकृष्णरूपेण समवतीर्णोऽभवदेतदेव नास्ति, तत्र गौरीशङ्करयोः, सीतारामयोः, ईसामुहम्मदयोः, नित्यानन्दचैतन्ययोरन्येषां चावताराणां समावेशो बभूवेत्यग्रे वक्ष्यते।

श्रीठाकुरस्य प्रथमचतुर्वार्षिकसाधनेषु तथा च स्वकीयजीवनस्य सर्वाभ्यर्हितसाधनासु साम्प्रतमयं व्रती बभूव। केवलं तस्यैव जीवने न हि, प्रत्युत संसारस्याध्यात्मिके इतिवृत्ते दुस्तरतमेयं साधना। 'क्षुरस्य धारा निशिता दुरत्यया' इत्यपेक्षयापि सुदुस्तरे साधनासमुद्रे निर्भीकं न्यपतदित्यस्यापि परिचयोऽत्र प्राप्स्यते।···

गदाधर उन्मादरोगग्रस्ततया मन्दिरे सम्प्रति पूजनं नानुतिष्ठतीति चन्द्रमणिदेव्या समाकर्णितम्, रामेश्वरेणापि। मातृवक्षःस्थलं निपीड्य स्नेहमयी धारा चन्द्रमणिनेत्रयोरुद्भूता। हा रघुवीर! मम भाग्ये इदमेवास्ति। मातुर्हृदयं चिन्ताशतैराकुलितं संवृत्तम्। पत्रपरम्परा विलिख्य माता चन्द्रमणिः स्वकीयं स्नेहनिधिमाहूतवती। तदानीं वंगीय १२६५ संवत्सरस्य (१८५८ ई०) कार्त्तिकमासो भवेत्।

श्रीरामकृष्णस्योन्मादभावं विलोक्य 'मातः मातः' इति क्रन्दनशब्द-माकर्ण्य च चन्द्रमण्या वक्षःस्थलं विदीर्यते। तया मन्त्रतन्त्रादिभिः शान्तिकरणस्य औषधादिचिकित्सायाश्च प्रबन्धो विहितः। मान्त्रिकाः समागत्य भूतनिवृत्तिप्रयोगान् विहितवन्तः। सर्वैरुक्तम् "अयं भूतावेशो नास्ति" इति।

श्रीठाकुरः पूर्ववत् स्वसुहृद्भिः साकं परिहासं सुमधुरव्यवहारं चाकरोत्। परन्तु तत्र किञ्चिदन्तरमप्यविद्यत। सुहृदो यथापूर्वं तमालिङ्गितुं न प्राभवन्।···कियद्दिवसानन्तरं भावोऽयं यथाकथंचित् शान्तिमवाप, परन्तु तदानीमपि यदा कदा भावावेशो जागर्त्ति स्म। निरन्तरमेकस्यानन्दस्य मादकतायामयं निमग्नस्तिष्ठति। बाह्योच्छ्वासो न

तावानधिक आसीत्। विरहस्य तन्मर्मभेदिक्रन्दनमपि न श्रूयते। एतर्हि परिपूर्णतामहानन्दसागरे मनस्तदीयं नितरां सम्भृतमिव विलोक्यते। न तत्र तरङ्गाः, न वा स्फीतयः, तद्धि प्रशान्तसमुद्रवत् शान्तमासीत्। जगन्मातुर्विविधदर्शनेनायमात्मस्थोऽभवत्। अशनादिकमपि आंशिकरूपेण स्वाभाविकमेवासीत्।

···श्रीठाकुरो भूतिजलप्रवाहस्थले बुधईमण्डलश्मशाने च समयमधिकं व्यत्ययति। अहोरात्रं तत्र गत्वा विविधां साधनामनुतिष्ठति। मातुर्देव्याः सङ्गिन्यो योगिन्यो डाकिन्यश्चाहूयन्ते। ताभ्यो भोगमर्पयित्वा प्रसीदति। एकदा निशीथे संवृत्तेऽपि गदाधरो न गृहं न्यवर्तत। इदमवलोक्य रामेश्वरस्तमाह्वयन् श्मशानाभिमुखं प्रतस्थे। दूरत एव परिचितं भ्रातृशब्दं समाकर्ण्य गदाधरश्चीत्चकार—"अहमागतोऽस्मि भ्रातः! भवता नाग्रे सर्त्तव्यमन्यथा उपदेव्यो भवतो हानिं विधास्यन्ति।"

क्रमशो निर्बाधं निरन्तरदर्शनं जगन्मातुर्नानाभावविलासाश्च श्रीरामकृष्णमानसं परिशांतयंति। बाह्यतो गदाधरं किञ्चित् स्वस्थमवलोक्य चन्द्रमणिनेत्रयोरानन्दाश्रूणि समुद्भूतानि। चन्द्रमणिदेव्या गदाधरस्य विवाहनिश्चयः कृतः। एकान्ते रामेश्वरेण सह परामर्शं विधाय गुप्तरूपेण योग्यकन्यामन्वेष्टुं चतुर्दिक्षु तया मानवाः प्रहिताः। गदाधरो जानीयाद् यदि नूनं न स्वीकरिष्यतीतिहेतुना सुगुप्तमनुसन्धानमक्रियत। कन्या तु समुपलब्धा, परन्तु तावन्ति रुप्यकाणि कुतः प्राप्तव्यानि? कन्या यावती वयःस्था सुन्दरी च लब्धा, देय ( देहज ) रूप्यकाण्यपि न न्यूनानि। क्रमशश्चन्द्रमणिरामेश्वरयोर्मनो गम्भीरविषादपरिपूर्णमभवत्। इदानीमुपायान्तरं किमस्ति? इमे निर्धनाः सन्ति। मातुः पुत्रस्य च परामर्शो यद्यपि सुगुप्त एव वर्तते, तथापि तं श्रीठाकुरोऽपि परिज्ञातवान्। स मनसैव सर्वं कौतुकमपश्यत्। यदा चन्द्रमणिचित्तं हताशं संवृत्ताम् तदा एकस्मिन् दिवसे भावावेशेन श्रीरामकृष्णेन प्रोक्तम्—'अन्यत्रान्वेषणं व्यर्थम्, जयरामवाटीस्थानस्य रामचन्द्रमुखोपाध्यायस्य गृहे कन्या क्रीडति, गत्वा तां पश्यत।"

तत्कथनानुसारमन्वेषो जातः। अन्यविषये यद्स्तु परन्तु वयोविचारतः सा केवलं षड्वार्षिकी बालिका आसीत्। भवितव्यतां परिज्ञाय चन्द्रादेव्या तयैव सार्धं गदाधरस्य परिणयो निर्णीतः। १२६६ वंगीयहायनस्य ( १८५९ ई० ) वैशाखमासस्यान्तिमसप्ताहे शुभोऽयं विवाहः सुसम्पन्नः। शतत्रयं रूप्यकाणां प्रदत्तमभूत्। तदानीं श्रीरामकृष्णवयश्चतुर्विंशतिवर्षात्मकम्, श्रीसारदामणेस्तु केवलं षड्वर्षात्मकम्। विवाहे आडम्बरस्य लेशोऽपि नाभवत्। परन्तु साधारणी घटनेयं संसारस्येतिहासे कियद्गुरुस्थानमधिकृतवतीत्यत्राग्रे प्रदर्शयद्भिः अस्माभिः किञ्चिदालोचयिष्यते।

निर्धनाऽपि चन्द्रादेवी वंशसम्मानरिरक्षयिषया ग्रामभूस्वामिनो लाहामहोदयस्य गृहात् भूषणानि समादाय नववधूमलंकृतवती। भूषणानां प्रत्यर्पणसमयः समागतः, परन्तु चन्द्रादेवी बालिकाया वध्वा अङ्गादाभूषणान्यवतारयितुं न शेके। मानसिककष्टाभिभूता वृद्धा अंचलेनाश्रूण्यपाकुर्वती सारदां निजाङ्के कृतवती। सूक्ष्मदर्शी श्रीठाकुरो मातुर्हार्दिकीं वेदनामवागच्छत्। प्रगाढनिद्रां गतायाः वध्वा अंगेभ्यः शनैः शनैराभूषणान्यवतार्य स मातुः करयोः समर्पयत्। प्रबुद्धा सारदा रुदती स्वश्वश्रूमुक्तवती— 'ममाभूषणानि क्व गतानि ? चन्द्रमणिः किमुत्तरं दद्यात्। तस्या अपि वक्षःस्थलं विदीर्यते स्म, स्नेहपुत्तलिकां बालिकां वधूमिमां स्वाङ्के समारोप्य सा गद्गदस्वरेण तां प्रोवाच—"मा रुदिहि पुत्रि ! गदाधरस्ततोऽपि सुन्दराणि भूषणानि तवार्थं निर्मापयिष्यति।"

परन्तु तस्मिन् एव दिने वध्वाः पितृव्यः समायातः, सर्वं विदित्वाऽत्यसन्तुष्टः कन्यां स्वगृहमानयत्। पारिवारिकजनेभ्यः सांत्वनां ददत् श्रीरामकृष्णः परिहसन्नुवाच—"ते किमपि वदेयुर्वदध्युर्वा विवाहस्तु नैव विच्छेत्स्यते।"

विवाहानन्तरं श्रीठाकुर एकवर्षाधिककालं यावत् कामारपुकुरे

न्यवात्सीत्। १२६७ वर्षीये ( १८६० ई० ) अग्रहायणे मासे वधूः सप्तमे वर्षे प्रविवेश। कुलप्रथामनुसृत्य किंचित्कालकृते श्वसुरपुरमसौ जगाम। शुभे मुहूर्ते पत्नीमादाय कामारपुकुरे पुनराययौ। किंचिद्दिनानन्तरमसौ पूर्णं स्वास्थ्यं लब्ध्वा दक्षिणेश्वरमागत्य यथापूर्वं कालीमातुः समर्चायां पुनः संलग्नः।...

एतावद्दिनानि मन्दिरे स्वसन्तानमनवेक्ष्य माता व्याकुलीबभूव। माता समागतं शिशुमालिलिङ्ग। ततः श्रीठाकुरस्योन्मादभावस्तीव्रतया ववृधे। पूर्ववत् शरीरे ज्वाला, अशान्तिश्चाविद्यत। वक्षो रक्तरञ्जितमिव जातम्। निर्निमीषे नयने। निमेषशून्यनयनाभ्यां विविधरूपेषु सर्वेषु वस्तुषु सर्वत्रैव सर्वभावैर्मातरमेव पश्यति।..

मथुरमहोदय आश्चर्यचकितोऽभूत्। विवाहानन्तरं तु मनसा शान्तेन भवितव्यम्। परन्तु वैपरीत्यं जातम्। एतेन मथुरमहोदयस्य श्रद्धा भक्तिश्च श्रीरामकृष्णोपरि सुतरामवर्धत। स च चिंतातुरो रामकृष्णं कलिकत्ताया विश्रुतकविराजगंगाप्रसादसेन-चिकित्सायां संरक्षितवान्। फलाभावेऽपि चिकित्सा प्राचलत्। एकदा हृदयरामेण सह श्रीठाकुरो वैद्यमहोदयस्य गृहमागतवान्। तत्र कविराजमहोदयस्य निकटसम्बन्धी कश्चिदपरो वृद्धवैद्यो व्यराजत। रोगलक्षणान्याकर्ण्य तेनोक्तम्—"एतस्य दिव्योन्माददशा विज्ञायते, योगजोऽयं व्याधिर्नैव कदापि औषधादिना शांतिमाप्स्यति।" एतदेव संवृत्तम्। रोगो नोपशशाम, उन्मादावस्था च परिववृधे।

कामारपुकुरे पुत्रस्य रुग्णतामाकर्ण्य चन्द्रादेवी रुदती चिंताशतैराक्रान्ता 'वृद्धशिवमन्दिर'-शरणं शरणीचकार। वृद्धशिवोऽयं जाग्रद्देव इति लोके विश्रुतः। चन्द्रा निराहारा मन्दिरे तस्थौ। अशरीरिणी वागुदचरत्—"मुकुन्दपुरस्य शिवसन्निधाने प्रायोपवेशनेन तव मनोरथः सेत्स्यति।" यथाऽऽदेशं वृद्धा उपवासपरा मुकुन्दपुरशिवसमीपमागत्य न्यपतत्। दिवसत्रयानन्तरं दिव्यशरीरसमाविर्भूतः शिवश्चन्द्रामवोचत्

—'मा भैषीः, तव पुत्र उन्मत्तो नास्ति, ईश्वरीयभावावेशात्तदीयैषा दशा।' स्वल्पां शांतिमासाद्य चन्द्रा स्वगृहं परावर्त्तत।···

इतश्चैका विचित्रा घटना मथुरमहोदयजीवने विराट्परिवर्त्तनमकरोत्। श्रीठाकुरस्याभ्यन्तरे मथुरमहोदयेनैकमलौकिकं दर्शनमनुष्ठितम्। एतद्घटनाविषये श्रीठाकुर एवैकदा प्राचीकथत्—"मया मथुरं प्रत्यभिहितम् त्वं किं करोषि, त्वं श्रीमानसि, राणीमहोदयायाः जामाता, त्वामेवं कुर्वाणं विलोक्य लोकाः किं कथयिष्यन्ति। स्थिरो भव, उत्तिष्ठ।' स च किं शृणुयात्? ततः प्रशान्ताय तस्मै सर्वोऽप्युदन्तः स्पष्टतया प्रोक्तः। तेनापूर्वं दर्शनं लब्धम्, उक्तं च—"भगवन्! भवतो भ्रमणं मया दृष्टम्, यदा भवानितः समागतस्तदा मया विज्ञातम्—भवद्रूपे मम मन्दिरस्य माता वर्त्तते, ततश्च परिवृत्यान्यत्र गच्छता मया दृष्टम्—यदयं महादेवो वर्तते। दृष्टिभ्रमाशङ्कया चक्षुषी प्रोंछ्य पुनर्दृष्टं तदेव। बहुवारं विलोकितं भवद्रूपे माता पार्वती शिवश्च।" इत्युक्त्वा स रुरोद। मयोक्तम्—'मया तु किमपि न ज्ञायते पुत्र!" परन्तु कः शृणुयात्। बहुबोधितः शान्तो बभूव। मथुरः किं स्वेच्छयैतत् चक्रे? न हि, जगज्जननी तं स्वयमेव सर्वमिदमदर्शयत्।"

एतद्दर्शनानन्तरं मथुरमहोदयस्य मानसी शङ्का निरस्ता। ततः प्रभृति जीवनस्यान्तिमक्षणं यावत् स ठाकुरं महामानवं धृतमनुष्यदेहं देवं च समवधार्य तदीयां भक्तिं सेवां च विहितवान्। तद्दिनात् परिपूर्णेन मनसा श्रीठाकुरं श्रद्दधौ, तत्सपर्यां च परमपुरुषार्थं मेने।

—:*:—

श्रीरामकृष्णः कामारपुकुराद् दक्षिणेश्वरं समागतः। ततः किंचिद्दिनानन्तरं तात्कालिकरोगभोगं समाप्य राणी रासमणिः १८६१ वर्षीयफरवरी मासस्यैकोनविंश्यां तारिकायां रात्रौ परलोकं प्रस्थिता।

श्रीठाकुरः कदाचित् प्रोवाच—"शरीरत्यागस्य कतिभ्यश्चन दिवसेभ्यः प्राक् राणी स्वकीये कालीघट्टस्थे आदिगंगातट-भवने समागत्यातिष्ठत्। देहत्यागस्य किंचित्क्षणपूर्वं गंगातटं सा समानीता। तदानीं स्थानं तद् उज्ज्वलदीपमालाप्रकाशपरिपूर्णमासीत्। सहसैव सा निजगाद—'अपसारय, अपसारय, साम्प्रतं लौकिकप्रकाशो मह्यं न रोचते, सम्प्रति मम माता देवी समागता, तदङ्गप्रभाभिश्चतुर्दिक्षु प्रकाशः परिव्याप्नोति। कतिपयक्षणानन्तरं सोवाच—'इयं माता समायाता!' इत्युक्त्वा कालीचरणाभिलाषिणी राणी रासमणिः शांतिपुरस्सरं कालीचरणयोर्व्यलीयत।

श्रीरामकृष्णस्य सर्वधर्मसमन्वयस्य साधनाया मन्दिरं निर्माय राणी युगधर्मसंस्थापने साहाय्यमकरोत्। एतद्विशिष्टकार्यसम्पादनार्थमेव जगन्मात्रा सम्भवतः स्वकीयासु अष्टासु सहचरीषु एका राणीरासमणिरूपेण नियोजिता। यदा च राणी शिव-काली-विष्णुमन्दिराणि स्थान एकस्मिन्नेव निर्माय स्थापितवती तदानीं तादृशाभिन्नभावसंयुक्तं तद्भिन्नमेकमपि देवायतनं न विलोक्यते स्म। ईश्वरीयशक्तेरहस्यसंकेतेन तस्या हृदये प्रेरणैतादृशी समभवत्। एतदस्माभिरेतावत् कालानन्तरं युगधर्मस्य प्रयोजनं प्रभावं च विलोक्य अनायासेनैवावधारयितुं शक्यते।

राणी रासमणौ स्वर्गं गतायां किंचिद्दिनानन्तरं दक्षिणेश्वरे काचनैका योगेश्वरी भैरवी ब्राह्मणी समायाता। तयैव सर्वप्रथमं श्रीरामकृष्णाभ्यन्तरे भावं, महाभावम्, ईश्वरावेशं प्रकाशं चावलोक्य तमवतारपुरुषमुद्घोषयत्। ततश्चानया विख्यातपण्डितसभायां शास्त्रवाक्यानि समुद्धृत्य तत्प्रमाणितं च।

श्रीरामकृष्ण एकस्मिन् दिवसे गंगातटोद्यानतः पुष्पाण्यवाचिनोत्, मालां संग्रथ्य मातरं भूषयितुम्। तदैव तेन बकुलवृक्षघट्टे संलग्ना नौकैका विलोकिता। एका भैरवी तन्नौकातः समवतीर्य मन्दिराभिमुखमाययौ। केयं भैरवी, कथमत्र समागतेति तां दृष्ट्वैव श्रीरामकृष्णोऽवागच्छत्। त्वरितमेव स्वगृहमागत्य तामानेतुं हृदयरामः प्रोक्तः। आश्चर्यचकितो हृदयरामः प्रोक्तवान्—"भैरवीयमपरिचिता कथमाहूता समागमिष्यति?" श्रीरामकृष्णो बालभावेन व्याजहार—"मम नामग्रहणपूर्वकमाहूता समागमिष्यति।" एतदेव संवृत्तम्। हृदयरामस्तत्समीपं गत्वा मातुलस्य नामोच्चारणं कृतवान्। भैरवी किंचित् अकथित्वैव हृदयरामेण साकं श्रीरामकृष्णस्य गृहमायाता। तं विलोक्यैव आनन्दविस्मयान्विता सजलनयना निजगाद—"त्वमत्रासि पुत्र, गंगातीरे निवससीति ज्ञात्वा त्वामन्वेषयन्ती अभवम्। श्रीरामकृष्णेनोक्तं—"मां कथं जानासि मातः!" भैरवी सोल्लासमुक्तवती—"जगदम्बिकायाः कृपया मया सर्वं परिज्ञातम्।"

बहोः कालस्य दर्शनानंतरं निजजननीसमीपे बालकवत् आनंदप्रफुल्लितः श्रीरामकृष्णो भैरवीसमीपमुपविश्य स्वीयमलौकिकं दर्शनं भगवत्प्रसंगतो बाह्यज्ञानराहित्यम्, असह्यस्वशरीरज्वलनं चेत्यादिकं स्वकीयमांतरिकं भावं सर्वं भैरव्यै न्यवेदयत्। भैरवी च शांता सविस्मयं सर्वमश्रृणोत्। श्रीरामकृष्णो व्याकुलो भवन् पप्रच्छ—"मातः! मम किं जातम्? किमहं सत्यमुन्मत्तोऽस्मि? जीवनपर्यंतमन्तःकरणेन जगन्मातरमाराधयतो मम कश्चन कठिनो व्याधिरुत्पन्नः?" ब्राह्मणी

सांत्वयन्ती प्रत्युवाच—"त्वां क उन्मत्तं कथयति भोः, तव महाभावः समुदपद्यत। अत एवेमां दशां गतोऽसि। अयं भावो न केनाप्यवधारयितुं शक्यते। श्रीमत्या राधया दशेयमधिगता, श्रीचैतन्यदेवेनापि महाभावोऽयं लब्धोऽभवत्। भक्तिशास्त्रे सर्वमपीदं सुनिर्णीतिम्।"....

हृदयरामो मौनमाश्रयन् सर्वमिदं शुश्राव, उभयोरपरिचितयोरेतादृशोऽन्तरङ्गमित्रवद् व्यवहारः! दिवसो वर्धमान आसीत्। श्रीरामकृष्णेन फलं, मिष्टान्नं, नवनीतं, सितोपलं, प्रसादः इत्यादि भक्षणाय भैरव्यै प्रदत्तम्। किन्तु सुतमभोजयित्वा माता किं भक्षयिष्यति? अतस्तस्या आग्रहेण श्रीरामकृष्णेनापि किञ्चिद् भक्षितम्।

देव्या दर्शनं जलपानं च समनुष्ठाय ब्राह्मणी स्वेष्टदेवभोगकृते आमान्नमादाय पञ्चवटीवनाभिमुखं प्रास्थता।

रसवती (रसोई) सम्पन्ना। भैरवी ब्राह्मणी स्वकण्ठाद् रघुवीरशिलामवतार्य, तदर्थं भोगं विनिवेद्य ध्यानस्थाऽभवत्। स्वेष्टदेवदर्शनमवाप्य क्रमशः सा समाधेरतलतले निमग्ना।

उभयोः कपोलयोरानन्दाश्रूणि प्रावहन्। ततश्च भावाविष्टः श्रीरामकृष्णः पंचवट्यामागत्य रघुवीरनिवेदितभोगमभक्षयत्। ततः क्षणानन्तरं सहजावस्थां प्राप्य ब्राह्मणी दृश्यमेतद् विलोक्य प्रमोदविह्वला बभूव। ध्याने यदेव विलोकितं, चक्षुषी उन्मील्यापि तदेव दृष्टम्। तदीय इष्टदेवा भगवान् श्रीरघुवीरो रामकृष्णस्वरूपमासाद्य पूजामगृह्णात्। इतो भावावस्थातोऽवतीर्य श्रीरामकृष्णः स्वकृतकर्मणा क्षुब्धः सन्निव प्रत्यवदत्—"मया आत्मविस्मरणपूर्वकं कथमेवं क्रियत इति न ज्ञायते।"

इष्टदेवदर्शनपुलकितांगी भैरवी न्यगादीत्—"साधु समनुष्ठितम्, इदं तु त्वया न सम्पादितम्, तवाभ्यन्तरे यो विराजते तेनैव कृतमिदम्। ध्याने मया यद् दृष्टं तदेव चक्षुषोरुन्मीलनेऽपि विलोकितम्, मम

पूजा सार्थकत्वमाप्ता । नास्ति बहिः पूजायाः सम्प्रति प्रयोजनम् ।” इत्युक्त्वा महता भक्तिभावेन ब्राह्मणी प्रसादं खादितुं प्रवृत्ता ।

ब्राह्मणी सा जीवन्तं रघुवीरमध्यगच्छत् । इष्टदेवप्रत्यक्षदर्शनेन पूजाध्यानयोर्विलयो जातः । प्रेम्णा रोमांचिता ब्राह्मणी दीर्घकालसमर्चितां स्वीयां रघुवीरशिलां गंगागर्भे विससर्ज । ··

प्रथमदिनेऽपि रामकृष्णाभ्यन्तरे दर्शनं रामचन्द्रस्यासाद्य भैरव्या निश्चितधारणाऽभवत् यदयं साधारणः साधकः सिद्धपुरुषो वा नास्ति ! स्वयं भगवानेवायम् । श्रीरामकृष्णस्य दिव्यमलौकिकं दर्शनमनुभूतिं च शास्त्रेभ्यो मेलयित्वा श्रीरामकृष्णोऽयमवतारविशेष इति तया निर्णीतम् । वार्तामिमामुच्चैः सर्वानप्यश्रावयत् । मथुरमहोदयः, अन्ये च बहवो मानवाः साश्चर्यं श्रुतवन्तः । कालीमन्दिरे कोलाहलो जातः ।

अनेन क्रमेण षट् सप्त वा दिनानि व्यतीतानि । ब्राह्मणी पंचवटीवने तस्थौ । दूरदर्शी श्रीरामकृष्णो न्यश्चिनोत्—ब्राह्मण्या अत्रावस्थानं न शोभनम्, सांसारिका मनुतनुजनुषः स्वकीयान्तःकरणेषु विचित्रमेवावधारयन्ति । तस्या घनिष्ठतामेतां लौकिका कया दृशा द्रक्ष्यन्तीति को जानीयात् ? विज्ञापितैव ब्राह्मणी सर्वमवबुध्य कालीमन्दिरं त्यक्त्वा तस्यैव दक्षिणेश्वरग्रामस्य निकटवर्त्तिनि गंगातटदेवमण्डलघट्टे गता ।

ब्राह्मणी दूरं जगाम, किन्तु तदीयं मनः प्रतिक्षणं 'श्रीराकृष्णोपरि संलग्नमासीत् । तं ब्रह्मगोपालं रामकृष्णं द्रष्टुं किमपि भोजयितुं च प्रतिदिनमसौ कालीमन्दिरमायाति । भिक्षाचर्यायां यत् किमपि लभ्यते तद् गोपालं भक्षयितुमियमागच्छति । अनेके ईश्वरीयप्रसङ्गा अभूवन्, बहुशो भावावेशाः श्रीरामकृष्णस्य समपद्यन्त । आनन्देन कंचित्कालं यापयित्वा ब्राह्मणी पुनः स्वस्थानं परावर्त्तते ।

एकस्मिन् दिवसे मथुरमहोदयेन सह पंचवट्यामुपविष्टो वार्तालापं च कुर्वन् श्रीरामकृष्णः सहसा प्रोवाच—भैरवी कथयति यदवतारस्य सर्वाणि लक्षणानि मम शरीरे सन्ति, सा बहूनां शास्त्राणां मर्मज्ञा ।

अभिमानशून्यतायाः, सरलतायाश्च प्रतिमूर्त्तेरस्य वचनमाकर्ण्य मथुर-महोदयेन भणितम्—"सा किमपि कथयेत्, परमवतारा दशैव न ततोऽधिकाः। अतस्तत्कथनं कथं सत्यं भवेत्। आम्, भवदुपरि कालीमातुः कृपा वर्त्तते, इति वार्ता नासत्या।"

एतादृशे वार्तालापे प्रचलित एव ब्राह्मणी नन्दपत्न्याः (यशोदायाः) आवेशतस्तन्मयी भूता एकस्यां स्थाल्यां मिष्टान्नमादाय पंचवटीमुपतस्थौ। समागतैव सा विपरीतभावं मनुष्यमेकमवलोक्य नैजमात्मानं निरुन्धाना मिष्टान्नस्थालीं हृदयरामाय प्रादात्। विलोकितैव ब्राह्मणी श्रीरामकृष्णेन प्रोक्ता—"मातः! त्वमत्रत्यं वृत्तं यत् किमपि कथयसि, तत् सर्वमेव मया एतस्मै प्रोक्तम्, अयं वदति अवतारा दशैव, न ततोऽधिकाः।"

मथुरमहोदयस्याभिमुखं निरीक्षमाणा भैरवी जगाद—"कथम्? श्रीमद्भागवते चतुर्विंशतेरवताराणां चर्चां कुर्वता भगवता वेदव्यासेन विष्णोरसंख्येया अवतारा निर्णीताः (अवतारा ह्यसंख्येया हरेः सत्त्व-निधेर्यथा—भागवते)। वैष्णवशास्त्रे च महाप्रभोः पुनरागमनवृत्तान्तस्य सुस्पष्टं समुल्लेखः।" ब्राह्मणीवचनस्योत्तरं दातुमसमर्थो मथुरानाथ-महाशयस्तूष्णीं तस्थौ।

कतिभ्यश्चन मासेभ्यः श्रीरामकृष्णस्य गात्रे पुनरप्यसहनीयो दाहः समुदभूत्। बहुहोरापर्यन्तं गंगाजले शरीरे पातितेऽपि, आर्द्रीकृतेन वस्त्रखण्डेन शिरसि वेष्टितेऽपि शरीरज्वाला कथमपि न शान्तिमायाति, वैद्यकचिकित्सयापि न शान्तिरधिगता। समाकर्ण्यैतत्सर्वं ब्राह्मणी प्रत्युवाच—"अयमामयो नास्ति, भगवद्दर्शनजन्यतीव्रव्याकुलता शरीरे वर्तते। श्रीकृष्णस्य विरहे श्रीमत्या राधिकाया अप्येषैव दशा संबभूव। महाप्रभुचैतन्यदेवस्यापि जीवने एतादृशी अवस्था समागता। इमां ज्वालां शमयितुमपूर्वमौषधं वर्तते। सर्वाङ्गेषु सुगन्धितचन्दनस्य लेपं कृत्वा, सुरभितानां कुसुमानां मालाधारणेन दाहोऽयं शान्तिमेष्यति।"

विधानमिदमाकर्ण्य मथुरमहोदयप्रभृतयः सर्वेऽपि जहसुर्येन विधानं तत्र कार्यरूपेण पर्यणमत्। ततश्च ब्राह्मण्या विशेषाग्रहेण श्रीरामकृष्णस्य शरीरं चन्दनचर्चितं पुष्पमालाविभूषितं च सम्पादितम्। दिनत्रयं कृतेनामुनोपचारेण असहनीया ज्वाला पूर्णतया शान्तिं प्रापत्। सर्वेऽपि विस्मयं ययुः। एतेन भैरवीविश्वासो दार्ढ्यमुपगतः। श्रीरामकृष्णशरीरे को निवसतीति सा स्वमनस्यवधारयति। सा बलपूर्वकमुक्तवती यदयं मानवशरीरे साक्षात् भगवानेव।

ततश्च किंचिद्दिनानन्तरं श्रीरामकृष्णस्य शरीर एको नूतन उत्कट उपसोर्गो दृष्टिगोचरीबभूव। भीमवत् तस्यापि सर्वग्रासिनी बुभुक्षा समवर्धत। अयमपि रोगो भैरव्या चिकित्सितः। 'योगजेयं क्षुधा' इति शास्त्रे विलोक्य तदुपशमश्च तया विहितः। श्रीरामकृष्णः कदाचित् प्रोवाच—"तदानीमेकप्रकारविकटक्षुधाया उद्रेकोऽभूत्। बहुना कृतेन भोजनेनापि उदरं न पूर्यते स्म। भोजनं कृत्वा यदैवोत्तिष्ठामि, तदैव पुनर्भोजनं कर्त्तुं समीहा जागर्ति। अहोरात्रं भोजनस्यैव समीहाऽभवत्। 'मम विचित्रोऽयं रोग' इति ब्राह्मणीमभ्यधाम्। तयोत्तरितम्—'भयस्य वार्ता नास्ति। भगवतः पथि प्रवृत्तस्य यदा कदा दर्शयमायाति, एतद्-वस्थावर्णनं शास्त्रेषूपलभ्यते। अहमधुनैव रोगमिममुपशमयामि।' मथुर-महाशयद्वारा गृहाभ्यन्तरे भर्जनमारभ्य शष्कुली-रसगुल्ला-सन्देशप्रभृतीनि सर्वाण्यपि खाद्यवतूनि संस्थाप्य ब्राह्मण्या श्रीरामकृष्णः प्रोक्तः—'भगवन्, गृहेऽत्र त्वया रात्रिन्दिनं स्थित्वा यथेच्छं वस्तु भोक्तव्यम्।' गृहेऽहं प्रेषितो भ्राम्यन् खाद्यवस्तूनि पश्यन्, ताभ्यश्च खाद्यसामग्रीभ्यः किंचिदादाय अखादम्। एवमेव दिनत्रये व्यतीते सा विकटक्षुधा शान्ति-मुपगता, अहं च सुरक्षितोऽभवम्।"

आग्रहग्रहिला ब्राह्मणी अघोषयत्—"अवतारोऽयं श्रीरामकृष्णः। नेयं मम केवलं मौखिकी वाणी, शास्त्रेऽपि तस्य प्रमाणमुपलभ्यते। मया प्रमाणान्युपस्थापयिष्यन्ते। अधिकारिणं पुमान्समतिरिच्य महाभावोऽयं

न कस्यचिदन्यपुरुषस्य भवति, भवितुमर्हति वा। यदि कस्मिंश्चन शक्ति-रस्ति तर्हि मम वचनं खण्डनीयम्।"

मथुरमहोदयमनस्यसामञ्जस्यभावः समुत्पन्नः, तेन विचारितम्, एतावद्दिनेभ्यो भैरवी यद् वक्ति, तस्य नूनं समाधानेन भवितव्यम्। वैष्णवचरणनामक एको महापण्डित उच्चकोटिसाधक आसीत्। स च मथुरमहोदयेनामन्त्रितः। अन्ये चानेकभक्तसाधकपण्डिताः समाजग्मुः। कालीमन्दिरे सम्मेलनमभूत्। श्रीरामकृष्णस्य सम्बन्धे साम्प्रतं यावद् यत् किंचिदपि ब्राह्मण्या समाकर्णितमवलोकितं च तत्सर्वं शास्त्रप्रमाणानि समुद्धृत्य तया प्रमाणितम्। विषयमिममाश्रित्य विद्वद्भिः समालोचना चक्रे। परन्तु यस्य विषये काण्डमिदमुत्थितम्, स किल भावाविष्टो निर्विकारचेता निर्लिप्तो बालक इवोपविष्ट आसीत्। आत्मदर्शनस्य रमणीयकान्त्या तदीयं मुखमण्डलं देदीप्यते स्म, पण्डितानां विचारस्यांते वैष्णवचरणेन प्रोक्तम्—"एतस्य शरीरे महाभावस्य लक्षणं सुस्पष्टं दरीदृश्यते। महाभावोऽयं साधरणे जने नोत्पद्यते। इदानीं यावदयं भावः भावमय्यां श्रीराधायां श्रीचैतन्यदेवे च समुदपद्यत।" तदीयं वचनमाकर्ण्य निखिला अवाचो बभूवुः। परं श्रीरामकृष्णेन तु मथुर-महोदयः प्रोक्तः—"अये! किमेते जल्पन्ति, रोगोऽयं न विद्यते।" श्रुत्वैतत् प्रसन्नता जाता।

कियद्दिनानन्तरं पुनरप्येका विराट् परिषदायोजिता। वैष्णवचरणः, विख्याततान्त्रिकसाधको गौरीपण्डितः, अनेके चापरे विद्वांसः समुपतस्थुः। बहुविधशास्त्रीयालोचना-तर्क-वितर्कानन्तरं समाहितये गौरीपण्डितेन श्री-रामकृष्णं संबोध्य दृप्तकण्ठेन प्रोक्तम्—'वैष्णवचरणो भवन्तमवतारं कथयति। वचनमिदमतीव साधारणम्। मन्मते तु प्रत्येकस्मिन् युगे ये ये परमेश्वरस्यांशैरवतीर्य महापुरुषा अवतारशब्देन सुप्रसिद्धा लोककल्याणाय समवतरन्ति, यस्य शक्त्या तेऽवताराः स्वकीयं कार्यं सम्पादयन्ति, भवान् साक्षात् स एव।" श्रीरामकृष्णः बाल इव विहस्य प्रोवाच—"भ्रातः! त्वं

तु ततोऽप्यग्रेऽगच्छः ! अस्मिन् किं त्वया दृष्टम्, कथय ।" गौरीपण्डितो व्याजहार—"शास्त्रप्रमाणेन स्वानुभवेन चाहं वच्मि । यदि मम वचनं कोऽपि खण्डयितुमुत्सुकस्तदासौ मया सार्धं शास्त्रार्थं करोतु । अहं स्वपक्षसमर्थनं कर्तुमुद्यतः ।"

भावाविष्टेन श्रीरामकृष्णेन व्याहृतम्—"युष्माभिर्न जाने किं किमुच्यते ? परन्तु किमेतदिति को जानीयात् ? अहं तु किमपि न वेद्मि ।"···साम्प्रतिकं छद्मवेशेन भगवत आगमनम् !

—:-*-:—

जीवकोटिमनुष्याणां साधनं सिद्धिलाभाय। परम् ईश्वरकोटिर्नित्य-सिद्धा। ईश्वरकोटौ पूर्वं सिद्धिः, अनन्तरं साधनं सम्पाद्यते। लोक-शिक्षायैव तदनुष्ठीयते। तादृशीश्वरकोटिर्जन्मसिद्धा भवति। श्रीठाकुरः कथयति स्म—"कुत्रापि फलं पूर्वं, ततश्च पुष्पमुत्पद्यते।" श्रीरामकृष्णः समग्रामेव साधनां केवलं लोकसंग्रहदृष्ट्यैव कृतवान्।

एषु दिवसेषु स्वकीयेऽन्तःकरणेऽन्वेषणेनैव श्रीठाकुरेण सर्वमप्यधि-गतम्—सर्वत्रैवोतप्रोतभावेन जगन्मातुर्दर्शनम्, भावः, समाधिः, महा-भावः, ज्ञानं, विज्ञानं चेत्यादि। ब्रह्म-विष्णु-शिव-दुर्गा-प्रभृतीनां सर्वदेवदेवीनां दर्शनं च क्रियते। केवलं मनोरूपगुरुसाहाय्येनैव तेन चरमं लक्ष्यं समासादितम्। शास्त्रानुमोदितसनातनसाधनमार्गस्य सत्यतायाः प्रतिष्ठावशिष्टासीत्। सम्भवतः अस्मादेव कारणात् जग-न्मातुरिङ्गितेन बहुशास्त्रपारदर्शिनी प्रवीणा साधिका योगमायांश-समुत्पन्ना योगेश्वरी ब्राह्मणी गुरुरूपेण दक्षिणेश्वरमायाता।

ब्राह्मणी श्रीठाकुरमुवाच—"पुत्रक, त्वया यथाशास्त्रं तन्त्रमतस्य साधनां कारयिष्यामि।" मन्दिरे विराजमानाया मातुरनुमतिमन्तरेण जगज्जननीशिशुरयं न किमपि कार्यमनुतिष्ठति। देवीमातुरादेशमवाप्य ब्राह्मण्या निर्देशमनुसृत्यासौ तन्त्रसाधनायां व्यलीयत। साधनस्य सर्वानप्युपचारान् भैरवी स्वयं संगृह्णाति। पञ्चवटी-बिल्वमूले यथाविधि मुण्डासनं स्थापितमभूत्। साधनायामस्यां श्रीठाकुर एतावान् तन्मयोऽभूत्, यदस्य बहूनां मासानां दिवसरात्रिपरिज्ञानमेव न जातम्। दर्शनानन्तरं दर्शनानि, अनुभूत्यनन्तरमनुभूतयः, सिद्ध्य-

नन्तरं सिद्धयश्च याः प्राप्यन्ते स्म, न तद्गणना कर्त्तुं शक्यते। एवमेव विष्णुक्रान्ताप्रचलितचतुःषष्टिसंख्यकतन्त्राणां सर्वेष्वपि प्रयोगेषु तेन सिद्धिः समधिगता। सर्वमिदमवलोक्य भैरवी आश्चर्यचकिता बभूव। अधिकांशप्रयोगसाधनेषु केवलं दिनत्रयमेव प्रत्येकं श्रीठाकुरस्य व्यत्यगच्छत्, न ततोऽधिकम्। समस्ततान्त्रिकप्रयोगसाधनानन्तरं प्रमोदपुलकिताङ्गी भैरवी प्रावोचत्—"तात, इदानीं त्वं दिव्यभावे प्रतिष्ठितो जातः।"

एतावदवधिपर्यन्तसमये द्विभुजाप्रभृतितो दशभुजापर्यन्तं बहूनां देवीमूर्त्तिसमूहानां कियत्संख्याकानां तेन दर्शनं कृतमिति न निश्चेतुं शक्यते। सर्वासां देवीनां कान्तिरनुपमा आसीत्। आगामिन्यो बह्व्यो देवीमूर्त्तयस्तु तं विभिन्नभावानामुपदेशमप्यदुः। ठाकुरः कदाचित् प्रोक्तवान्—"षोडश्याः, त्रिपुरायाश्च श्रीविग्रहात् सौंदर्यं द्रुतं सत् चतुर्दिक्षु परिव्याप्तमिवाभवत्।"...तदानीं समये भैरवप्रभृतीनामनेकेषां देवविग्रहाणां दर्शनं तेनानुष्ठितम्। दिव्यशक्तिप्रभावतोऽसौ विज्ञातवानासीत् यत् किञ्चित्कालानन्तरं धर्मज्ञानमधिगन्तुं बहवो मनुष्यास्तत्सन्निधाने समागमिष्यन्ति इति।

तांत्रिकसाधनानंतरं बहूनि वर्षाणि यावत् श्रीठाकुरस्य शरीरकांतिर्दिनानुदिनं ज्योतिर्मयी सती ववृधे। येन तस्य देहो ज्योतिर्मयोऽभूत्। तस्मिन् यस्यैव दृष्टिः पतति, स एव विस्मयान्वितस्तदभिमुखं दरीदृश्यते स्म। साधारणे मानवदेहे नैतादृश्या द्युतेः सम्भावना। तदानीं तेन जगन्मातुरभ्यर्णे कातरस्वरेणाभ्यर्थना विहिता—"मातः! ममैतेन बाह्यरूपेण किं सेत्स्यति। स्वकीयं रूपं त्वं गृहाण, 'त्वदीयं वस्तु देवेशि! तुभ्यमेव समर्पये'। तन्त्रसाधनायां सिद्धौ समधिगतायां सर्वत्रैव प्राणिवर्गेऽसौ जगन्मातुर्दर्शनमकरोत्। सर्वत्र मातुरेव प्रकाशं रूपं चापश्यत्।...

* * *

"या देवी सर्वभूतेषु मातृरूपेण संस्थिता" इति दुर्गासप्तशत्या-मभिहितम्। सर्वप्राणिषु यच्चिन्मयरूपेण व्याप्नोति तदेव मातृरूपेणापि विराजते। श्रीठाकुरस्य तन्त्रसाधनायां समाप्तिं गतायां तज्जन्मदात्री माता चन्द्रमणिर्दक्षिणेश्वरं ( १८६५ ई० ) समागताऽऽसीत्। श्रीठाकुरः प्रतिदिनं प्रातरुत्थायादौ तस्याश्चरणौ स्पृशति स्म, ततो मन्दिरमगच्छत्। 'मातृदेवो भव' चन्द्रमणिरपि देवी एव। श्रीठाकुरस्य मातृभक्तिरपि न साधारणी। मातुर्मनस्याघातो न स्यादितिहेतोर्गुप्तरीत्या तेन संन्यासो गृहीतः। स वृन्दावने न तस्थौ, यतो मातरं रुदतीं द्रष्टुं स न शशाक। अत्र श्रीरामकृष्ण आदर्शमानवरूपेण अस्माभिः प्राप्यते। सांसारिक-दायित्वज्ञानेन सह स्नेहममत्वादीनां न तत्र स्वल्पाऽपि न्यूनताऽव-लोक्यते। मोहातीतविज्ञानावस्थायामवस्थितस्यापि तस्य मातु-र्मृत्युनाऽबाधरूपाऽश्रुधारा तत्कपोलौ प्लावयन्ती ददृशे। तेन शास्त्रानुसारं संन्यासो गृहीतः। अतः पितृकर्मणि तदधिकारो नास्ति। स किल गंगाजले प्रविष्टोऽश्रुजलमोचनरूपतर्पणेन पितृकार्यमपूरयत्। अत्र वयं श्रीरामकृष्णमादर्शपुत्ररूपेणावलोकयामः।

चन्द्रमणिरादर्शमहिलाऽविद्यत। जीवनपर्यन्तं देवद्विजातसेवा-परायणाऽन्तिमे समये गङ्गायाः पुत्रगदाधरस्य च निकटे समागत्य न्यवसत्। प्रायशो द्वादश वर्षाणि गङ्गातटमुषित्वा सा ( २७ फरवरी, १८७६ ई० ) देवीलोकं प्रतस्थे।

श्रीठाकुरस्य जननी सरलतायाः प्रतिमूर्त्तिरासीत्। विहाय श्री-भगवन्तं न तस्याः काचिच्चिन्ता, न वा सांसारिके वैभवे आकर्षणम्। मथुरमहोदयः श्रीठाकुरं 'बाबा'-पदेनावोचत्। श्रीठाकुरस्य जननीं दक्षिणेश्वरे समागतां 'ठाकुरमा' ( पितामही ) इत्यकथयत्। मथुर-महाशयः स्वबाबामहोदयाय ( श्रीरामकृष्णाय ) अद्यावधि न किमपि दातुमशक्नोत्। एकदाऽसौ सनियमं लिखित्वा तस्मै एकं जनपदभागं

प्रदातुमैच्छत् । परन्तु श्रीठाकुरो लगुडं गृहीत्वा तमताड़यत् । एतेन तन्मनसि खेदः संवृत्तः । एकदा ठाकुरमातृमहोदयामकथयत्—"यदि मां भवती परं न मन्यते तर्हि भवत्या किंचिद् यथेच्छं मत्तो याच्यताम् ।" बहुधा विचारानन्तरमपि वृद्धया कोऽप्यभावो नानुभूतः । सहसा स्मृतिरभूत्—तस्या दन्तमंजनं समाप्तमिति । विहस्य तया प्रोक्तम्—"इदानीं स्मृतम्, यदि किमपि प्रदातुमीहसे तर्हि एकाणकस्य दन्तमञ्जनमानय" । श्रुत्वेदं मथुरमहोदयस्य नयने सजले संवृत्ते । आवेगभरेण ठाकुरमातरं प्रणतवान्, अचिन्तयश्च "यद्येतादृशी माता न भवेत्, तदानीमेतादृशस्त्यागी पुत्रः कथमुत्पद्येत ?"

* * *

शक्तितन्त्रोक्तनिखिलप्रयोगसिद्धिलाभानन्तरं श्रीठाकुरेण वैष्णवतन्त्रोक्तपञ्चप्रयोगसाधनव्रतं जगृहे । सम्भवतः १२७० हायने (१८६३ ई०) जटाधरी नाम कश्चन रामानुजमतावलम्बी साधुर्दक्षिणेश्वरं समाजगाम । तस्मात्साधो राममन्त्रदीक्षां गृहीत्वा श्रीठाकुरो वात्सल्यभावसाधनायां प्रवृत्तः । जटाधारिणः पार्श्वे अष्टधातुनिर्मिता वात्सल्यस्वरूपश्रीरामचन्द्रस्यैका प्रतिमा आसीत् । तन्नाम 'रामलाल' इति प्रसिद्धम् । किन्तु लोकोत्तरप्रेमभक्त्या तद्विग्रहं स्वकीयेष्टदेवस्य भावमयमूर्त्तिं मत्वा जटाधारी स्वसमीपमरक्षीत् । अत एव विग्रहसमर्चासपर्यादौ तन्मयो भवन् असौ ईश्वरीयदिव्यानन्दमन्वभवत् । तेन दिव्यदर्शनमपि लभ्यते स्म, तस्य रामलालो रूपं चिन्मयं धृत्वा क्रीड़न् नानाभावैस्तस्मै दर्शनं ददत् चिरसंगी भूत्वा तेन सहैव निवसति स्म ।

वात्सल्यभावसाधने जटाधारिणा दीक्षितः श्रीठाकुरस्तत्साधनायामपि तन्मयो बभूव । स जटाधारिणः सन्निधौ शान्तिपूर्वकमुपविष्टस्तन्मयत्वमुपगतो 'श्रीरामलाल'स्य दिव्यां क्रीड़ां लीलां चापश्यत् । तदानीमेवैका विचित्रघटना घटिता । रामलालोऽधुना जटा-

धारिसमीपे स्थातुं नेहते। शनैः शनैरसौ श्रीरामकृष्णस्य नितरां प्रियोऽभवत्। यदैवासौ जटाधारिणः सान्निध्यात् प्रस्थातुमुद्यतो भवति तदैव रामलालोऽपि तेन साकं गन्तुं प्रस्तुतो जायते। निवारितोऽपि न शृणोति, नरीनृत्यमानः साकमेव समगच्छत। कदाचिदङ्कमारोढुं हठमकार्षीत्।

एकदा श्रीठाकुरोऽवदत्—"अहमेकस्मिन् दिवसे स्नातुमगच्छम्। रामलालोऽपि सहगमनाय हठमकरोत्। किं कुर्याम्, अहं नीतवान्। ततश्च जलमध्यान्निर्गन्तुमसौ नैच्छत्। कथनमपि न शृणोति, अन्ते क्रुद्धोऽहं तं जले मज्जयन् अवोचम्—"यावन्मज्जनमीहसे, तावन्निमज्ज।" मया दृष्टम्, जलमध्ये तेन श्वासकष्टमनुभूयते। तदीयकष्टं विलोक्य मया चिन्तितम्—"किमेतन्मया कृतम्। ततोऽहं तं जलान्निःसार्य निजाङ्के निधाय गृहमानयम्।

अन्या अपि बह्व्यो दिव्या लीला अभूवन्। शनैः शनैः रामलालो निरन्तरं श्रीठाकुरस्याभ्यर्णे न्यवात्सीत्। जटाधारिणः पार्श्वे गन्तुं नैच्छत्। एकस्मिन् दिवसे स वृद्धः साधू रसवतीं ( रसोई ) निर्माय भोगनिवेदनायोपविष्ट आसीत्। परन्तु रामलालः कुत्र? अन्विष्यन्नसौ ददर्श—रामलालः श्रीरामकृष्णस्य गृहे सानन्दं क्रीडति। प्रसह्यासौ रामलालमानिनाय। एवं बहूनि दिनानि रामलालस्य दीव्याः क्रीडाः प्राचलन्।

ततश्चैकस्मिन् दिवसे जटाधारिणा श्रीठाकुरसमीपमागत्य सजलनयनेन प्रोक्तम्—"रामलालेन कृपया मम हृदयस्य सर्वा आकाङ्क्षाः परिपूरिताः। येन भावेन मम दर्शनसमीहाऽऽसीत्, तेनैव भावेन मह्यं दर्शनमदात्, उक्तवांश्च—यद् भवन्तं विहाय नान्यत्रासौ गमिष्यति, भवत्समीपेऽसौ प्रसीदति, सुखमनुभवतीति विज्ञायाहं नितरां प्रसन्नोऽस्मि।" एवमुदीर्य रामलालं श्रीठाकुरहस्तयोः समर्प्य जटाधारी बाबा गमनानुज्ञां प्राप्तवान्। ततः प्रभृति रामलालः श्रीरामकृष्णसविधे तिष्ठति स्म ...

साधरणमानवदृष्ट्या रामलालो लघुधातुमयमूर्तिव्यतिरिक्तं न किञ्चिदन्यत्। किन्तु श्रीठाकुरस्य सन्निधानेऽसौ दिव्यलीलामयश्चिन्मयो

बालभगवत्स्वरूपोऽस्ति। भवतारिण्या मृण्मयी प्रतिमा यथा चिन्मयी लीलामयी च भूत्वा श्रीरामकृष्णेन सह दिव्यां क्रीडामकरोत्, तथैव रामचन्द्रस्य लब्धो प्रतिमापीयं चिन्मयं श्रीरामविग्रहं धृत्वा तस्मै दर्शनमदात्

दर्शनमिदं न स्थूलचक्षुषा सम्पद्यते। इदमसाधारणम्। भावमयेन दिव्येन वा चक्षुषा एतद्दर्शनं जायते। भावमयचक्षुर्विना चिन्मयरूप-दर्शनं न कर्त्तुं शक्यते श्रीकृष्णसखस्यार्जुनस्यापि भगवतो वास्तविक-स्वरूपदर्शनाय दिव्यचक्षुषः प्रयोजनीयताऽभवत्। 'भावः' एका साधरणी अनुभूतिः। ततोऽपि अलौकिकी असाधारणी अनुभूतिः 'महाभाव' इत्युच्यते। श्रीठाकुरो निजगाद—

"पूजया तु जपः श्रेष्ठो जपाद् वै ध्यानमुत्तमम्।
ध्यानतोऽपि महान् भावो महाभावस्ततोऽधिकः॥"

सुतरां महतो महीयानेव महाभावः, अत्रैव सर्वे भावाः समाविशन्ति, अत्रैव सर्वभावानां परिपूर्णता। प्रेमस्वरूपः परमेश्वरो महाभावमयः। प्रेमापि महाभावस्यैवापरं नाम। अत एव "स ईशोऽनिर्वचनीयप्रेम-स्वरूप" इत्युक्तम्।

* * *

वात्सल्यभावसाधनावसरे श्रीठाकुर आत्मानं मातरं कौशल्या-ममन्यत आत्मनि तेन मनसा वचसा कर्मणा च मातृभावस्यारोपो विहितः। वात्सल्यभावे प्रतिष्ठानन्तरं श्रीठाकुरस्यान्तःकरणे मधुर-भावसाधनायास्तीव्रतरा समीहा समुदपद्यत।

वैष्णवशास्त्रे मधुरभावोऽयं शान्तादिभावपञ्चकसारनाम्ना परि-पूर्त्तिसंज्ञयाऽपि वर्णितः। तन्मते किलैकमात्रमधुरभाव एव शान्त्यादयः सर्वे भावाः समाविशन्ति। मधुरभावसाधनावसरे तेन नारीवेशोऽगृह्यत। श्रीठाकुरस्याभिज्ञातसेवको मथुरमहोदयस्तदर्थं वाराणसेयीं शाटिकाम्, घाघराम्, अच्छादनीम् ( ओढ़नी ) चुनरीप्रभृतीनि नारीधारणवस्त्राणि,

मूल्यवतः सुवर्णालङ्कारांश्च क्रीत्वा प्रददौ। एतादृशवेशधारिणं श्रीठाकुरं तन्निकटसम्बन्धी हृदयरामो विभ्रमात् नारीमेवाबुध्यत।

श्रीरामकृष्णजीवने जन्मतो मृत्युपर्यन्तं प्रत्येकघटना धर्मप्रतिष्ठार्थ-मेव विलोक्यते। अत एवासौ प्रत्येकभावसाधनासमये शास्त्रानुसार-मेव तस्य भावस्य चिह्नान्यधारयत्। तन्त्रसाधनाकाले रक्तवस्त्रम्, सिन्दूरं, रुद्राक्षादीनि, वैष्णव-तन्त्रसाधनावसरे च वैष्णवावश्यकी वेशभूषा, यथा श्वेतचन्दनं श्वेतवस्त्राणि, तुलसीमालां च बिभर्ति स्मेति श्रूयते। पुनः अद्वैतभावसाधनाकालेऽपि शिखासूत्रे परित्यज्य संन्यासचिह्नकाषाय-वस्त्रादि धारयामास। सर्वेष्वपि व्यवहारेषु स दीर्घकालविस्मृतां शास्त्रमर्यादामेवापालयत्।

एतर्हि श्रीठाकुरस्य श्रीकृष्णदर्शनोत्कण्ठा दिनानुदिनं ववृधे। तस्य प्रार्थनया करुणक्रंदनेन च दिशः पर्यपूर्यन्त। मनसि प्राणेषु च पार-व्याप्तेन श्रीकृष्णविरहेण निद्राया आहारस्य च परित्यागात् दिनानि, पक्षाः, मासाश्च व्यत्यगुः। अस्थिरप्राणोऽयं सर्वं विहाय केवलं विललाप। प्राणानां दारुणेन दहनेन पुनर्गात्रदाह उदपद्यत। तात्का-लिकविरहप्रसङ्गे तेनोक्तमासीत्—"तदानीं श्रीकृष्णविरह एतावान् प्रबलो बभूव, येन शरीरस्य प्रत्येकरोमकूपात् यथावसरं रक्तबिन्दवो निरगच्छन्। देहग्रंथयः शिथिलीभूताः"। हार्दिक्या तीव्रयन्त्रणया स मृतवत् संज्ञाशून्यतां प्रपेदे।

श्रीराधाराणीकृपामन्तरेण श्रीकृष्णदर्शनमसम्भवमिति वैष्णव-शास्त्रे प्रतिपादितम्। अतः श्रीठाकुरो मनसैकाग्रेण श्रीराधाराणी-ध्यान एव न्यमाङ्क्षीत्। परिणामतः स्वल्पैरेवाहोभिः श्रीराधिकाया दर्शनमभूत्। केवलं दर्शनमेव न हि, सर्वमाधुर्यमयी सा तच्छरीरेऽनु-प्रविष्टा। अनन्तरं तद्दर्शनसम्बन्धे श्रीठाकुरो भक्तानेकदा प्रोक्तवान्—"तस्याः श्रीकृष्णप्रेममत्ताया निरुपमपवित्रोज्ज्वलमूर्त्तेर्महत्त्वमाधुर्य-वर्णनमसम्भवमेव। श्रीराधिकाया अङ्गच्छविर्नागकेशरकुसुमकेशरवद् गौरवर्णोऽदृश्यत"।

तदीयाङ्के श्रीराधिकायाः प्रवेशात् श्रीराधिकामेवात्मानं मन्यमानस्य तस्याभ्यन्तरे मधुरभावपराकाष्ठाप्रसूतमहाभावप्राबल्यमवलोक्यते स्म। तदंगेषु श्रीराधिकाया निरवद्यं सौन्दर्यं विकासमापत्। तदीयं सम्पूर्णं शरीरमेव स्त्रीभावपरिपूर्णतया श्रीराधिकारूपेण पर्यमणत्। भावे, महाभावे, श्रीकृष्णप्रेम्णि, देहस्य रूपे, गुणेषु च श्रीराधिकास्वरूपमगृह्णात्। तदनन्तरमेवासौ श्रीकृष्णदर्शनाधिगमे साफल्यं लेभे। श्रीकृष्णभगवतो दिव्यमूर्त्तिः तदंगे प्रविवेश। एतद्दर्शनानन्देन बहूनि दिनान्यसौ विमुग्ध इव समतिष्ठत। आब्रह्मक्षुद्रकीटपर्यन्तेषु सर्वत्रैव श्रीकृष्ण एव दृश्यते स्म। स कदाचिदात्मानं श्रीकृष्णस्वरूपमेवान्वभवत्। तदानीमात्मानुभूतिसमस्तवैभवसंयुक्तश्रीठाकुरस्य प्रशान्तमानन्दमयजीवनं महाभावपरिपूर्णमभूत्। तत्रैव भावावेशे सदा न्यमज्जत्। तदभ्यन्तर एव श्रीकृष्णश्रीराधिकामिलनमयो रासोत्सवः प्रचचाल। एकरसानिर्वचनीयानन्दानुभूतिस्तेनाक्रियत।

बहूनां वर्षाणामनन्तरं कदाचिद् दक्षिणेश्वरे समागतेषु भक्तवृन्देषु श्रीठाकुर उद्यानत एकं नीलं कुसुमं त्रोटयित्वा प्रदर्शयन् सहर्षं सर्वानुवाच—"मधुरभावसाधनकाले यस्याः श्रीकृष्णमूर्त्तेर्मया दर्शनं लब्धम्, तदङ्ग-वर्ण एतत्कुसुमसमान आसीत्।"

तस्मिन् एव काले दर्शनानतरं वार्त्तामपि निजभक्तानश्रावयत्—"एकदा विष्णुमन्दिरस्याभिमुखोपप्रकोष्ठे समुपविष्टोऽहं श्रीमद्भागवतपाठमश्रौषम्। शृण्वता मया भावावेशे श्रीकृष्णस्य ज्योतिर्मयं स्वरूपमवलोकितम्। ततश्च मया दृष्टम्—तन्मूर्त्तिपादपद्मतो रज्जुरिवैकं ज्योतिर्निर्गत्य आदौ श्रीमद्भागवतं स्पृष्ट्वा (स्वीयं वक्षःस्थलं प्रदर्श्य) मम हृदये व्यलीयत"। भगवान्, भागवतं, भक्तश्च त्रीण्यप्येकरूपतां प्रपद्य श्रीठाकुरस्याभ्यन्तरे प्रविविशुः। एतत् त्रयमप्येकमेव।

—:*०*:—

## ११

सर्वविधद्वैतभावसाधानानां चरमसिद्धिप्राप्तेः समनन्तरं भावातीताद्वैतभावस्य साधनेच्छा तस्य प्रादुरभूत्। तस्य चिरविशुद्धे मनसि यः कोऽप्यभिलाष उदीयते, तमविलम्बेनैव जगन्माता प्रापूरयत्। वेदान्तसाधनसमीहासमकालमेवात्यद्भुतो जटाजूटधारणपरायणो ब्रह्मदर्शी परिव्राजकाचार्यो नागा श्रीमत्तोतापुरीमहाराजोऽचिन्तनीयोपायस्वरूपं दक्षिणेश्वरमागमत्। नर्मदातीरे विविधेषु बहुष्वन्यस्थानेषु च चत्वारिंशद्वर्षपर्यन्तकठोरदीर्घसाधनफलस्वरूपनिर्विकल्पसमाधियोगेन ब्राह्मोपलब्धिस्तेनाक्रियत। नानातीर्थेषु विचरन् ब्रह्मज्ञो महात्माऽसौ दक्षिणेश्वरमुपाढौकत। गङ्गातटवर्त्तिनः कालीमन्दिरस्य विस्तृतसौधतले तयोरुभयोः परस्परं प्रथमं मिलनमभूत्। अन्यमनस्कस्योपविष्टस्य श्रीठाकुरस्य तपसा समुज्ज्वलं मुखमवलोक्यैव तोतापुरी तं पर्यचिनोत्। तं दृष्ट्वैव स्तब्धीभवन् मनस्यसौ व्यचिन्तयत्— "असाधारणः पुरुषोऽयं वेदान्तसाधनस्य वास्तविकोऽधिकारी।" स्वयमेव श्रीतोतापुरीमहोदयेन श्रीठाकुरो जिज्ञासितः—"किं त्वं वेदान्तसाधनां करिष्यसि ?"

प्रश्नमिममाकर्ण्य श्रीठाकुरस्य शान्तिर्विच्छेदमापन्ना। स च समागतमहानुभावमेकवारं सम्यग् दृष्टवान्, अवोचच्च—"अहं किमपि न जानामि, मम मातैव जानाति, यदादेक्ष्यति तत्करिष्यामि।"

"बाढम्, गच्छ, निजजननीं पृष्ट्वा आगच्छ" तोतापुरी व्याहरत्। श्रीठाकुरः शनैः शनैर्मन्दिरमगच्छन्मातरमपृच्छच्च। भावावेशेन

देव्या मातुः कण्ठस्वरस्तेनाकर्णितः—"गच्छ, वेदान्तसाधनामनुतिष्ठ, त्वदर्थमेवायं संन्यासी समायातः।" मातुरादेशमधिगत्यायं महान् प्रसन्नस्तोतापुरीसमीपमागत्य प्रोवाच—"मातुराज्ञा जाता"। तोतापुरी अद्वैतज्ञानी। तस्य दृष्टया देवीपूजा, त्रिगुणमयब्रह्मशक्तेरुपासना चेत्यादि सर्वं मायाविलसितमेव, तदेतदखिलमेवाविद्याया विजृम्भणम्। मन्दिरस्य मातुरनुज्ञामादायायान्तं तं विलोक्य तोतापुरी "पुरुषोऽयं शक्तिसाधक" इत्यवधारयामास। अस्तु, तोतापुरी प्रत्युवाच—"वेदान्तसाधनप्रवृत्तेः पूर्वं त्वया स्वकीयश्राद्धादि समाप्य विरजाहोमाग्नौ शिखां सूत्रं च हुत्वा शास्त्रविधिना संन्यासो ग्राह्यः"। श्रीठाकुरो मनसि किंचिद्विचार्य जगाद—"सर्वमिदं गुप्तरीत्या समनुष्ठाय संन्यासग्रहणे नास्ति मम काचिदप्यापत्तिः। एकवर्षतो मम जन्मदात्री माता अत्र समागता वर्त्तते। मां संन्यासिनमवधार्य तन्मनसि महानाघातो भविष्यति। तन्मानसं क्लेशयितुमहं नाभिलषामि"।

तोतापुरी सहमतोऽभवत्। गुप्तरीत्या रामकृष्णाय संन्यासं दातुं शुभदिनस्य प्रतीक्षायां पंचवटीनिम्नतले निजमासनं पर्यकल्पयत्।

शुभावसरे समायाते पुण्यमयब्राह्ममुहूर्त्ते तोतापुरी स्वशिष्येण साकं पंचवटीसमीपस्थपर्णशालायां प्राविशत्। होमस्य संपूर्णा सामग्री तत्र प्रस्तुताऽऽसीत्। यथाविधि होमाग्निः प्रजज्वाल। तोतापुरी महोदयेन मन्त्रपाठपूर्वकं शिष्यद्वारा होमानले तत्र आहुतीर्दापयित्वा विरजाहोमः समापितः। शिष्यश्च शिखासूत्रे हुत्वा गुरुप्रदत्तदण्डं कौपीनं बहिर्वस्त्रं चाधारयत्।

ततो ब्रह्मोपदेशः प्रारब्धः। ब्रह्मोपलब्धेः फलश्रुतिरुपनिषत्सु—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः, क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति वर्णिता। ब्रह्मज्ञानी तोतापुरीमहोदयो महावाक्यमुपदिश्य नित्यशुद्धबुद्धमुक्तस्वरूपं निर्गुणं ब्रह्म ध्यातुं स्वशिष्यं

प्रैरयत्। ब्रह्मनिष्ठस्तोतापुरी स्वशिष्यं द्रुतमवाद्वैतभावचरमानुभूति-निर्विकल्पसमाधिमधिरोहयितुं बद्धपरिकरो बभूव। श्रीठाकुर एकदा प्रोवाच—"संन्यासदीक्षाप्रदानानन्तरम् नागासंन्यासिना बहुविधं सिद्धांतवाक्यमुपदिशता मम मानसं निर्विकल्पमनुष्ठाय आत्मध्यान-निमग्नतासम्पादनेऽहमादिष्टः। परन्तु ध्याने समुपविष्टोऽप्यहं बहुभिः प्रयत्नैरपि नामरूपेभ्यः परं मानसं कर्त्तुं नापारयम्। अन्यविषयेभ्यो मनस्तु सहजमेवोपरतमभवत्। किन्तु यदा जगदम्बायाश्चिरपरिचिता जीवन्तीव चिद्घनमूर्त्तिर्मम पुरत आयाता तदानीमहं नामरूप-परित्यागवृत्तान्तं व्यस्मरम्। समस्तान्यपि सिद्धांतवाक्यानि श्रुत्वा ध्यानायोपवेशनेऽपि वारं वारमेतदेव यदा प्रतियते स्म, तदानीं निर्वि-कल्पसमाधिसम्बन्धे मम निराशा समुद्भूत्। चक्षुषी समुन्मील्य तोतापुरीमहमुक्तवान्—'नाभवत्, मनः सर्वतोभावेन निर्विकल्पं कृत्वा नाहमात्मध्याने विलीनो जातः', एतच्छ्रुत्वा नागासाधुरुत्तेजितो-ऽवदत्—'कथं न भविष्यति' इत्युदीर्य कुट्या अभ्यन्तरं प्रविश्य चतुर्दिक्षु समन्विष्य, काचस्यैकं लघुखण्डमानयत्। तत्खण्डस्य सूचिका-सममग्रभागं प्रसह्य मम भ्रूमध्ये निवेश्य प्रोक्तवान्—"अत्रैव विन्दौ-मानसमेकाग्रं कुरु।' ततोऽहं पुनर्दृढसंकल्पपूर्वकं ध्यानार्थमुपविष्टः। जगदम्बिकाया मूर्तिः पूर्ववत् पुनर्ममनसि समुद्भूत्। तदा मम मनसि ज्ञानासिना सा द्विधा विभज्य प्राक्षिप्यत। तदानीं मनसि कोऽपि विकल्पो नोद्गतः। समस्तमपि नामरूपराज्यं परित्यज्य मनो मे द्रुतमेव समाधिमग्नं संवृत्ताम्।"

श्रीठाकुरो निर्विकल्पसमाधेरन्तस्तले न्यमज्जत्। तोतापुरी बहु-कालपर्यन्तं शिष्यं पश्यन् निःशब्दं बहिरागत्य कुटीद्वारं पिधाय पंचवट्या आसने प्रतीक्षमाण उपाविशद् यद् अभ्यन्तराच्छब्दमाकर्ण्यैव द्वारमुद्घाटयिष्यामि इति।

दिनं व्यतीतं रात्रिरपि। आगामिदिनं रात्रिश्च व्यत्यगच्छत्।

एवं दिवसत्रयं निशात्रयं च व्यतीतम्। तदाऽपि कुट्या अभ्यन्तरतो द्वारोद्घाटनार्थं न कोऽपि शब्दः समाकर्णितः। नागासंन्यासी विचलितो जातः। स्वस्यासनं परित्यज्य शिष्यदशां द्रष्टुं द्वारमुद्घाटितम्। सविस्मयं तेनावलोकितं यत् शिष्यो यथोपवेशितस्तथैवोपविष्टो विद्यते। देहे नास्ति प्राणप्रकाशः, हृदयगतिरपि रुद्धा। किंतु मुखमण्डलं प्रशांतं गम्भीरं तेजःपरिपूर्णं विलोक्यते। शिष्यस्तेजस्विपाषाणप्रतिमावत् स्थिरो वर्त्तते। विज्ञातं यत् शिष्यचेतः सम्प्रति सच्चिदानन्दे निमज्जति। मुंडकोपनिषदि "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥" इत्यादिना या ब्रह्मोपलब्धेरवस्था वर्णिता सैव श्रीरामकृष्णदेवेनास्मिन् समयेऽधिगता।

तथापि तोतापुरी न पूर्णं व्यश्वसत्। किमेतदपि सम्भवम्? यस्य निर्विकल्पसमाधेः साधनायां चत्वारिंशद्वर्षपर्यन्तं कठोरं तपः साधितम्, स हि शिष्येण एतावता स्वल्पसमयेन समधिगतः। नागासंन्यासिना शिष्यः परीक्षितः। सर्वप्रकारेण सर्वाणि लक्षणानि सुपरीक्षितानि। विलोकितं—श्वासप्रश्वासयोर्गतिर्हृदयस्पन्दनं च नैव जायते। शिष्यस्य शरीरं बहुवारं स्पृशन्नपश्यद् यत् चैतन्यस्य किमपि लक्षणं न प्रतीयते। केवलं मुखमण्डले दिव्यानन्दप्रकाशसद्भावात् सम्पूर्णमप्यंगं प्रकाशमयमास्ते। आनंदविस्मयान्वितस्तोतापुरी चीच्चकार—"किमियं दैवी माया?" अयं तु सत्यमेव निर्विकल्पः समाधिरासीत्।

ततः तोतापुरी शिष्यं समाधितो व्युत्थितं विधातुं प्रक्रियामाचरत्। गम्भीरस्वरेण तेन "हरिः ओम्" इति मन्त्रः समुच्चारितः। बहुकालं यावदेवं कृते सति क्रमशः श्रीठाकुरस्य सहजावस्था पुनः समागता। तेन नयने समुन्मीलिते। अनन्तरं श्रीरामकृष्णजीवने वयं द्रक्ष्यामः यत् स "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो

विद्वान्न बिभेति कुतश्चन" इत्युपनिषदि वर्णितायामनिर्वचनीयायां भूमानन्दावस्थायां प्रतिष्ठितः ।

तोतापुरी स्तम्भितोऽभवत्, अवाधारयच्च यदयं शिष्योऽलौकिकः पुरुष इति । तोतापुरी परिव्राजकः संन्यासी दिनत्रयादधिकमेकत्र स्थातुं नार्हति । परमेकेन दिव्याकर्षणेन वशीभूतोऽसौ एकादशमासान् दक्षिणेश्वरेऽतिष्ठत् । एतावता कालेन शिष्यमखण्डब्रह्मानन्दरूपनिर्विकल्पे समाधौ दृढप्रतिष्ठितं विधातुं सर्वदैवाचेष्टत । एकस्य साधनस्यानन्तरं नूतनं साधनं प्रचलति । अनुभूतेरनन्तरमनुभूतिर्जायते । वेदान्तस्यैव विचारस्तस्यैव च साधना बोभूयते स्म ।

श्रीठाकुरस्य संसर्गतस्तोतापुरी महत्यानन्दे निमग्नो गमनवार्त्तां विस्मृतवानिव । एतावद्दीर्घकालं यावत् एकत्र निवासेन तोतापुरीमहोदयस्य वेदान्तमयजीवने श्रीरामकृष्णस्योदारभावप्रभावः प्रचुरमात्रया पपात । परमर्मज्ञस्तोतापुरीदमवधारयामास यत् शिष्यस्याद्वैतभावसिद्धौ स केवलं निमित्तमात्रमासीत् । एकस्य दिनस्यैकया साधारणघटनया नागासंन्यासिनो मनो नितरां प्रभावान्वितं जातम् ।

श्रीठाकुरेणैकस्मिन् दिने जिज्ञासितोऽसौ यत्—"भवता ब्रह्म लब्धम् । सिद्धयोऽधिगताः । कथं नित्यमेव ध्यानमभ्यस्यते ?" नागासंन्यासिना अतिगम्भीरभावेन तदीयस्वच्छजलपात्रं दर्शयित्वा प्रोक्तोऽसौ—"दृश्यतां, कीदृक् स्वच्छमिदं जलपात्रम्, यदि नित्यमेव परिमार्जितं न स्यात् तदा मलिनं भविष्यति, मनोऽप्येतादृगवधेयम् । ध्यानाभ्यासेन यदि मनसः परिष्कारो न क्रियेत तदा तन्मनो मलिनं भविष्यति ।" गुरुमुखमवलोक्य सस्मितकोमलस्वरेण श्रीठाकुरः प्रत्यवदत्—"यदि सुवर्णमयं तद् भवेत् ?" तोतापुरीमहोदयः स्वीचकार यत् यदि सुवर्णमयं जलपात्रं स्यात्तर्हि प्रतिदिनं तस्य मार्जनप्रयोजनं नास्ति, तेन शिष्यकथनसंकेतोऽप्यवधारितः । न चासीद् रामकृष्णः

साधारणः साधकः। केनापि साधनेन भजनेन वा नाऽसौ सिद्धी-रधिगतवान् स तु चिरशुद्धो नित्यसिद्धश्च आसीत्।

श्रीठाकुरस्य चिरशुद्धपरिपूर्णजीवनमवलोक्य तोतापुरी महोदयेनान्यदपि बहु शिक्षितम्। निर्विकल्पस्य समाधेरनन्तरमपि तस्य जीवने यत् न्यूनत्वमासीत्, तदपि श्रीरामकृष्णदेवदिव्यसंगेन परिपूर्णमभवत्।

तोतापुरी बाल्यादेवाद्वैतवादी। एकान्तनिष्ठया तेन शुद्धस्याद्वैतभावस्य साधना विहिता। ब्रह्मातिरिक्तं सर्वमिदं मायाविलासमयमेव स मन्यते स्म। तस्य विचारे द्वैतभावस्य किमपि स्थानं नाविद्यत। देवदेवीनां नास्ति सत्ता, सगुणस्येश्वरस्यास्तित्वमपि नाङ्गीक्रियते। तस्य दृष्ट्या "सर्वं खल्विदं ब्रह्म, नेह नानास्ति किञ्चन"। एतस्यैव साधना तेनानुष्ठिता। किन्तु सर्वभावमयस्य श्रीरामकृष्णस्य जीवनं पूर्णरूपेण स्वतन्त्रं विद्यते। तस्य जीवने सर्वेषामपि भावनां समन्वय आसीत्। अद्वैतभावे निर्विकल्पसमाधौ सुप्रतिष्ठोप्यसौ अनेकशो द्वैतभावापन्नो भूत्वा भक्तिभावेऽपि लीनतां प्रपेदे। बाल्यकालादभ्यस्ततया तदानीमप्यसौ करतालिकां दत्वा हरिनाम, मातृनाम, अन्यान्यदेवदेवीनां च नामानि कीर्तयति, गायति चापि। एकदा श्रीठाकुरः पञ्चवट्यां नागासंन्यासिनः समीप उपविष्ट आसीत्। अनेकाध्यात्मिकप्रसङ्गा वार्तालापाश्च बोभूयन्ते स्म। तदानीम् सन्ध्यासमागममवलोक्य श्रीठाकुरः कथाप्रसंगं परित्यज्य करतालिकां वादयन् भगवन्नामगानमकरोत्। एतदवलोक्य नागासंन्यासी स्तब्धो भवन्नुवाच—"किमिदं करोषि?" परिहसन् पुनरुवाच "हस्ताभ्यां रोटिकां निर्मासि किम्?" श्रीठाकुरो भावस्थो भूत्वा बालकवद् विहसन् व्याहरत्—"करतालिकया भगवन्नामकीर्त्तनं किं भवान् रोटिकानिर्माणं जल्पति?" दृष्ट्वा श्रुत्वा चैतत् तोतापुरीस्वामिनः प्रज्ञाचक्षुरुन्मीलितमिवाभवत्। तेन सर्वमवगतम्।

तोतापुरी स्वामिनो दक्षिणेश्वरनिवासकालस्यान्तिमे भागे घटनैका घटिता। तेन शक्तेरस्तित्वं न स्वीक्रियते स्म। शक्तिकृपामन्तरेण ब्रह्माधिगतिरसम्भवेत्यपि नैवामन्यत। एतस्य स्वीकरणमेव तस्य प्रयोजनमासीत्। अथवा तोतापुरीमहोदयं निमित्तीकृत्य ब्रह्म-तच्छक्त्योरभेदरूपसत्यं सुप्रतिष्ठं बभूव।

तोतापुरी सहसा कठिनरक्तामाशयरोगसमाक्रांतोऽभवत्। सर्व-विधं चिकित्सितं, नानाविधमौषधं, पथ्यादिकं च निखिलं व्यर्थ-मभवत्। रोगः केनाप्युपायेन नोपशाम्यति। निस्तब्धरात्रौ स धूनी-सन्निधावुपविष्टोऽभूत्। उदरस्यासह्ययन्त्रणया व्याकुलतामनुभवन् अशोचत्– मनसि समाहिते शरीरकष्टं नानुभविष्यते। ध्याने समुप-विष्टोऽपि मनः समाहितं कर्त्तुं नाशक्नोत्। चित्तमुदरयन्त्रणया पृथग् भवितुं नार्हति। विविधप्रयत्नसम्पादनेऽपि यदा साफल्यं नाधिगतं, तदा तस्य मनसि महद् वैराग्यमुदियाय—"एतस्य पांचभौ-तिकदेहस्य कृते कथंकारं कष्टमनुभवामि? शरीरमिदं गङ्गाजले विसर्जयामि।" एतन्मनसि भावयन् तोतापुरी दृढ़संकल्पचेता गङ्गागर्भेऽवततार, शनैः शनैर्गङ्गाम्भस्यग्रेसरन्नपि गभीरं जलमप्राप्तो गङ्गाया द्वितीयतटे समागतः। सर्वत्रैवं गङ्गायां जानुदघ्नं जलमेव तेनासादितम्। तोतापुरी विस्मयान्वितः—"कथमियं दैवी माया" इत्यवागच्छत्। सहसैव तस्य हृदयं दिव्यप्रकाशालोकितमभूत्। स्तब्धीभवन्नसावपश्यत्—"जले स्थले सर्वत्रैव शक्तेर्विलासः परि-दृश्यते। तस्या महाशक्तेर्निःश्वासेनैव चराचरं निखिलमपि ब्रह्माण्डं प्राणमयं परिदृश्यते", यस्य ब्रह्मणो ध्यानं एतावन्तं कालं क्रियते स्म तत्तु निर्लिप्तमेव। सर्वमिदं महाशक्तेर्विलसितमेव, तस्या इङ्गितेनैव जन्ममृत्युबन्धमोक्षादयो भवन्ति।

"शिवस्तु निर्गुणं ब्रह्म, इकारः शक्तिरुच्यते।
इकाराभावतो नूनं शव एवावशिष्यते"।

"शववक्षसि राजन्ती नरमुंडस्रजाऽन्विता
खड्गहस्ता महाकाली जरीहर्त्ति जगत् त्रयम्" ।

एवमनुभवन्नेवासौ स्वाभाविकीमवस्थामधिगतं पूर्णस्वस्थमात्मानममन्यत । मनसि सुमहानानन्दो ववृधे । पञ्चवटीं पुनरागतोऽसौ "या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता" इति वचनोपरि सुदृढविश्वासवान् बभूव । देवीचरणे तदीयं मनो नरीनृत्यमानमभवत् । एकत्रैव शिवशक्तिमिलनदर्शनेनामन्दानन्दसन्दोहे न्यमज्जत् ।

आगामिनि दिवसे प्रत्यूषे श्रीठाकुरो गत्वाऽपश्यत् तोतापुरी व्यक्तिविशेषः संवृत्तः । सर्वाङ्गेष्वानन्दवीचयो जाग्रति । तदीयं शरीरं नीरोगं, मनोऽपि पुलकितमदृश्यत । श्रीठाकुरं समीपस्थमवलोक्य तेन विगतनिशायाः सर्वा घटना अनुभूतयश्च श्राविताः । सर्वमेतदाकर्ण्य श्रीठाकुरो विहस्य प्रोवाच—"पूर्वं तु भवान् मातरं न मन्यते स्म । शक्तिर्मिथ्येति ब्रुवन् मया साकं तर्कवितर्कमुपास्थापयत् । ननु साम्प्रतं ज्ञातम् ? मम माता तु पूर्वमेव प्रोक्तवती—

"अग्निस्तद्दाहिका शक्तिरन्योऽन्यं नैव भिद्यते ।
तथैव ब्रह्मतच्छक्त्योः परस्परमभिन्नता ॥" इति ॥

ततः किंचिद्दिनानन्तरं मन्दिरस्थां मातरं प्रणम्य तोतापुरी श्रीठाकुरतश्चिरकालकृते गमनानुज्ञामङ्गीचकार ।

* * *

श्रीरामकृष्णजीवने एकतो यथा परमेशितुः शक्तिर्विराजते तथैव महति तन्मनसि परदुःखकातर्यभावोऽपि नाल्पीयान् आसीत् । तदानीन्तनीयया एकया लघीयस्या घटनया तत्प्रमाणमस्माभिरवलोक्यते ।

मथुरामोहनस्य पत्नी जगदम्बादासी सहसा कठिनरोगेणाक्रान्ता । रोगोऽत्यन्तं प्रावर्धत । कलिकत्तास्थैः सर्वाभ्यर्हितैर्वैद्यैः द्राक्तरैश्च ( डाक्टर ) तच्चिकित्सने नैजमसामर्थ्यं प्रकटितम् । विवशो मथुर-

महोदयो दक्षिणेश्वरमाजगाम। तस्य दशा उन्मत्तवदासीत्। श्रीराम-कृष्णदेवचरणयोर्निपत्य रुदन् निजगाद—"मम भवितव्यता भवत्येव। भगवन्! भवत्सेवाधिकारतोऽपीदानीं वञ्चितो भविष्यामि। अतः परं भवत्सपर्यां न कर्त्तुं शक्ष्यामि"।

मथुरमहोदयक्लेशमवलोक्य करुणया श्रीठाकुरस्य प्राणा विचेलुः। भावाविष्टेन तेन मथुरमहोदयः प्रोक्तः—"मा भैषीः, तव पत्नी नीरोगा भविष्यति"। श्रीठाकुरमहोदयस्याभयवाणीमाकर्ण्य जान-बाजारे समागतो मथुरमहाशयः पत्नीदशां साधीयसीमपश्यत्।

श्रीठाकुरश्चैकदा प्रोक्तवान्—"ततः प्रभृति जगदम्बादासी शनैः शनैर्नैरुज्यमापत्। तदीयरोगभोगो मम देहे समागतः।"

—:❀:—

ब्राह्मणः समुपलब्धेः स्तरा विद्यन्ते। निर्विकल्पसमाधेः गाम्भीर्ये, तथा स्थितिविशेषे च आनन्दानुभूतेस्तारतम्यमासाद्यते। तद् विषये श्रीरामकृष्णदेव एकदा प्रोक्तवान्—"देवर्षिर्नारदस्तमेतं दूरतो ब्रह्म-समुद्रमवलोक्यैव पराववृते। शुकदेवस्तस्य स्पर्शमात्रमकरोत्। जगद्-गुरुः शिवश्च तस्य ब्रह्मसमुद्रस्य चुलुकत्रयं जलं पीत्वैव शवो भूत्वा न्यपतत्"।...

साधारणकोटिगो मानवः कठोरसाधनाबलेन निर्विकल्पसमाधि-मधिगन्तुं शक्नोति। परमसौ तत्र दीर्घकालं यावन्न स्थातुमर्हति। शास्त्रैराज्ञप्तम्—"आधिक्येन मानव एकविंशतिदिनपर्यन्तं तदवस्थायां स्थातुमर्हति, तदनन्तरमसौ तत्स्वरूपे विलीयते। शुष्कपत्रवत् तदीयं शरीरं पतिष्यति। ईश्वरकोटिगो मानवोऽवतारधारी व्यक्तिविशेषो वा दीर्घकालपर्यन्तं निर्विकल्पसमाधाववस्थातुमर्हति। तत ईश्वरे-च्छया व्युत्थितो भूत्वा लोककल्याणसमीहारूपैकमात्रशुद्धसंकल्प-मवलम्बमानो जगत्कल्याणे प्रवर्तते" किन्तु श्रीरामकृष्णजीवनेतिहा-सोऽभूतपूर्वोऽलौकिकश्च। स हि निरवच्छिन्नषण्मासपर्यन्तं निर्विकल्प-समाधाववातिष्ठत। ततश्च महाशक्तेर्विशिष्टसमीहया लोककल्याणाय भौतिकजीवनस्यान्तिमदिनं यावद् "भावमुखो"* भवन् संसारे

* "भावमुख"-शब्दस्यायमर्थो यत् क्षुद्रोऽहंभावो विलुप्यते। सर्वा-वस्थायां विराडहंभावो जागर्त्ति, अर्थादीश्वरेच्छया सह मानसमेकीकृत्य लोक-कल्याणसाधनानुष्ठानं क्रियते।



समाधिस्थ श्रीरामकृष्णदेवः ।

तस्थौ। तदानीमसौ सविकल्पनिर्विकल्पयोर्द्वैताद्वैतयोः परमभक्ति-विज्ञानयोश्च मार्गे विचचार।

* * *

दीर्घमासषट्कं यावद् निर्विकल्पसमाधौ ब्रह्मानन्दोपभोगं कुर्वन् भावमुखो भवितुमसौ आद्याशक्त्या समादिष्टः, पूर्वमेवैतन्मया विलिखितम्। ततश्च श्रीठाकुरस्य मनसि विविधधर्मसम्बन्धिनी जिज्ञासा प्रारब्धा। जगदम्बिकामसौ प्रोक्तवान्—"मातः! अन्यान्य-धर्मावलम्बिनस्त्वां केन भावेन भजन्तीति मामादिश।" कानिचिद्दिनानि व्यतीय दक्षिणेश्वरे एकः सूफीसम्प्रदायावलम्बी मोहम्मदः साधुः समागतः। गोविन्दराम इति तन्नाम। गोविन्दरामस्य सारल्यं प्रेमभावं चावलोक्य मुग्धो भवन् श्रीरामकृष्णस्तेन दीक्षितो भूत्वा इस्लामधर्म-साधने प्रवृत्तः। तदानीमसौ 'नमाज'मधीयानः अल्लाह्–नाम जपश्च विहाराहारादौ पूर्णतया मोहम्मदभावं जगृहे। भावे तत्र दिनत्रय-साधनानुष्ठानात् परं 'तेनैको लम्बायमानश्मश्रुधारी सुगम्भीरो ज्योतिर्मयः पुरुषविशेषो दृष्टः'। ततश्च सगुणस्य विराड्ब्रह्मणः समुप-लब्धेरनन्तरं तन्मनस्तुरीये निर्गुणब्रह्मणि व्यलीयत।

त्रयोदशशतवर्षपूर्वं श्रीमहम्मदेन सगुणस्यैकेश्वरवादस्य प्रचारो विहित आसीत्। तदानीं तेन स्वशिष्यमण्डली समादिष्टा—'ईश्वरो धर्मश्चैक एव। वेदान्तोपवर्णितस्य सगुणब्रह्मणो नामान्तरमेव 'ईश्वर' इति। धर्म एक एव, स च वेदान्तधर्मः बाह्यदृष्ट्या धर्मस्य विभिन्नत्व-मवलोक्यते, वस्तुतस्तु पारमार्थिकदृष्ट्या सर्वोऽपि धर्म एक एव।

ततः प्रायशः सार्धैकवर्षानन्तरस्येयं घटना। श्रीठाकुरस्य मनसि ईसामसीहप्रवर्त्तितधर्मगूढमर्मज्ञानवासना समुदियाय। दक्षिणेश्वर-कालीमन्दिरस्य दक्षिणे भागे यदुलालमल्लिकस्यैकं सुन्दरोद्यानयुक्तं भवनमस्ति। यदुमहोदयो धार्मिकी वृद्धा तन्माता च श्रीठाकुरोपरि-

देववत् श्रद्धामरक्षताम्। यदुमहोदयोद्यानस्थभवनस्य भित्तौ विविध-चित्राणां मध्ये मेरीक्रोड़े विराजमानस्य शिशोः ईसामहोदयस्यैकं कमनीयं चित्रं विलम्बितमासीत्। श्रीरामकृष्णदेवश्चैकदा तद्भवन-प्रकोष्ठे समुपविशन् तन्मयो भूत्वा तां मूर्त्तिं ददर्श। क्रमशः ईसा-महोदयस्यात्यद्भुतं चरित्रमालोचयन् असौ भावाविष्टो बभूव। तदानीमसावपश्यत् चित्रमिदं सजीवं ज्योतिर्मयमेव समभवत्। देवजनन्या देवशिशोश्चांगेभ्यो निःसृत्यैकं दिव्यं ज्योतिस्तस्य शरीरे प्रविवेश। स च गम्भीरे ध्याने निममज्ज। ध्यानेऽसौ ईसामहोदयस्य शान्तिमयीं दिव्यमूर्तिं तदीयप्रार्थनामन्दिरं चापश्यत्। ईसामसीह-पूजका धूपदीपादीनां सौरभं वितन्वन्तो नितान्तकातरभावतः समर्चां प्रकुर्वाणाः प्रार्थनामनुतिष्ठन्ति। एतादृशभावमग्न एव श्रीठाकुरो स्वनिवासस्थानं परावर्त्तत।

तदीया तन्मयता दिनत्रयं प्राचलत्। क्षमारूपा प्रेमस्वरूपा च जगन्माता श्रीरामकृष्णहृदयमन्दिरे समुद्बभासे। दिनत्रयमसौ श्रीकालीमन्दिरे न गतवान्। अन्तिमे दिवसे भावाविष्टः पंचवटी-तलेऽटन् आसीत्। तदानीमसौ ददर्श—एका गौरवर्णा देवमानवमूर्ति-र्दिव्यं ज्योतिः प्रसारयन्ती तमेव पश्यन्ती तदभिमुखमायाति। तस्या विशालनयनयोरपारकरुणा सम्भृता वर्त्तते, मुखमण्डले च देव-भावोऽङ्कितः। "कोऽयं महानुभाव" इति श्रीठाकुरो व्यचिन्तयत्। तस्य हृदयतो ध्वनिर्निःससार—अयमीसामसीह एव वर्तते, येन जीवकल्याणाय स्वकीयहृदयस्य रक्तं प्रदत्तम्! शान्तभावतः पादौ प्रक्षिपन् परमपुरुषोऽसौ अग्रेसरन् श्रीठाकुरमालिङ्ग्य तदीयदेहे प्राविशत्।

श्रीरामकृष्णस्य दिव्यशरीरे सहस्रद्वयवर्षाणामनिर्वातमम्लानं च धर्मज्योतिः प्रविष्टम्। श्रीठाकुरस्य मनो विराड्ब्रह्मसमुद्रे निमग्न-भूमत्। सुमहतः समयस्यानन्तरं दक्षिणेश्वरे चैकदा ईसामसीहस्र

समुद्भूतः। तदानीं तेन भक्ता जिज्ञासिताः—"युष्माभिर्बाइबिल-पुस्तकमधीतमेव। वदत, तत्र ईसामसीहरूपं कीदृग् वर्णितम्? अहन्तु अद्राक्षम्—तस्य नासिका किञ्चिन्निम्ना आसीत्।"

* * *

श्रीरामकृष्णदेवेन बौद्ध-जैन-सिक्ख-धर्माणामपि साधनमनुष्ठितमित्यस्य किमपि प्रमाणं नोपलभ्यते। किन्तु भगवतस्तथागतस्य सम्बन्धे स व्याजहार—"बुद्धदेवकथा मया बहुशः समाकर्णिता। सोऽपि दशावतारेष्वेकः। अचलं निष्क्रियं बोधस्वरूपं च ब्रह्म। बुद्धिर्यदास्मिन् बोधस्वरूपे विलीयते तदैव ब्रह्मज्ञानं सम्पाद्य मनुष्यो बुद्धो भवति।

जैनधर्मप्रवर्त्तकतीर्थङ्करेषु सिक्खानामादिगुरौ नानकदेवे च तस्यासाधारणी श्रद्धा आसीत्। श्रीनानकदेवो विदेहजनकस्यावतार आसीदिति श्रीठाकुरोऽवोचत्। तान् सर्वानपि धर्मानसौ भगवल्लाभाय सत्यमार्गानमन्यत। तस्य प्रकोष्ठे विविधदेवदेवीनां चित्रैः सह महावीरस्य तीर्थङ्करस्यैका पाषाणमयी मूर्तिर्व्यराजत।

"सर्वेऽपि धर्माः सत्याः। यावन्ति मतानि तावन्तः पन्थानः"। इयमेव सत्यवाणी सर्वधर्मसाधनेन तत्सिद्ध्या च श्रीठाकुरेण समधिगता। इयं वार्त्ता न केवलं बुद्धेर्विचारस्य वा कल्पनारूपा, परन्तु तस्यानुभवसम्भूता। श्रीठाकुरस्यान्तःकरणतः सर्वधर्मसमन्वयरूपो यो महान् धर्मो जगति प्रचचार, तस्यैव महतो धर्मस्य प्रतीकं श्रीरामकृष्णस्वरूपमपि।

अन्तिमेषु दिवसेषु काशीपुरस्योद्याने निवसता स्वीयं चित्रं विलोक्य भावस्थेन सता तेनोक्तम्—"अस्या मूर्त्तेर्गृहे गृहे पूजा भविष्यति।" तदीयाऽभयवाणीयमासीत्—"येषामिदमन्तिमं जन्म तैः सर्वैरत्र (मत्प्रचारितोदारमते) आगन्तव्यमेव"। अर्थात् एतदुदारधर्म-

भावभाविताः सन्तो ये श्रीरामकृष्णमाश्रयन्ति, तेषां मुक्तिरवश्य-म्भाविनी ।

* * *

उपनिषत्सूच्यते—"ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्" 'सर्वत्र सर्वभूतेष्वीश्वरानुभूतिः' इयं कीदृशी अवस्था एतत्साधारण-मानवगम्यं न भवितुमर्हति। परन्तु श्रीरामकृष्णजीवने एतस्योपनिष-द्वाक्यस्य सार्थकं रूपायणं दृश्यते ।

ब्रह्मविषयकनिर्विकल्पसमाधिप्रसूतं सार्वत्रिकं ब्रह्मदर्शनं—सर्वा-त्मकतानुभूतिं च ब्रह्मज्ञपुरुषः समाधिभृत् वेदस्वरूपो जागतिकभूमा-वस्थानकाले व्यावहारिकक्षेत्रे वा कीदृग्भावेनानुभवति एतस्य वर्णनं शास्त्रेषु सर्वत्र उपलभ्यते—'ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति" । यः ब्रह्मज्ञपुरुषः सर्वव्यापिब्रह्मणश्चैतन्य-स्वरूपस्य सर्वभूतेषु विद्यमानतां दृष्ट्वा जीवरूपेणावभासितस्य, एकांशेनात्मानं जीवजगद्रूपेण विवर्तितं कुर्वाणस्य भगवतः यदा तादात्म्यमेकत्वं वानुभवति तदा तस्य कीदृशी अवस्था भवति—एतच्छ्री-रामकृष्णजीवनेऽनेकघटनामाध्यमेनांशतः परिबुध्यते ।

( १ ) दक्षिणेश्वरस्य कालीमन्दिरोद्यानं नवदूर्वादलसमाच्छन्न-मासीत् । अपूर्वा सा शोभा ! श्रीरामकृष्णदेवः एकदा तत्रैव स्थित-स्तस्य दृश्यस्य सौन्दर्यमनुभवन्नासीत् । तस्मिन्समयेऽकस्मात्कश्चित्पुरुष-स्तान्येव कमनीयदूर्वाकुराणि चरणतलाभ्यां मथ्नन्निवागच्छत् । श्रीठाकुर एतदवलोक्य कामप्यसह्ययन्त्रणामन्वभवत् । परवर्तिकाले तामेव घटनामुल्लिख्य स बालभक्तान्प्रत्यवोचत्—"वक्षस उपरि कस्यचित्पादप्रक्षेपणैर्यादृशी यन्त्रणा भवति, तादृशी एव यन्त्रणा तस्मिन्समये मयानुभूता" इति ।

( २ ) दक्षिणेश्वरे कालीमन्दिरस्य पुरतः चांदनीसमाच्छादिते बृहद्घट्टे स्थितः सन् एकदा भावाविष्टः श्रीठाकुरः गंगादर्शनं कुर्वन्नासीत् ।

अस्मिन् समये द्वे नावौ घट्टे संलग्ने। केनापि कारणेन नाविकयोर्मध्ये विवादः समुद्भूत्। क्रमशः स विवादो हस्ताहस्तियुद्धे परिणतः। एको नाविकोऽन्यस्य पृष्ठोपरि अतितीव्रमाघातमकरोत्। एतेन श्रीठाकुर उच्चैश्चीत्कारं कृत्वा अरोदीत्। तस्य तत्कातरक्रंदनं श्रुत्वा हृदयरामः कालीमन्दिरतः द्रुतमेव तत्रागत्य अपश्यत् यच्छ्रीठाकुरस्य पृष्ठदेशः शोथपूर्णो रक्तवर्णश्च जातः। तदवलोक्य हृदयरामः अधीरीभूयासकृत् पृष्टवान् 'मातुल! केन त्वं ताडितः? दर्शय, अहं तस्य समुचितदण्डव्यवस्थां करिष्यामि" इति'।

श्रीरामकृष्णस्तस्मिन्क्षणेऽपि भावस्थ एवासीत्। अनन्तरं कथंचित् प्रकृतिस्थो भूत्वा उक्तवान्—"न केनाप्यहं ताडितः। कश्चिन्नाविकोऽन्यस्य पृष्ठोपरि तीव्राघातं कृतवान्, एतेनैवाहं वेदनानुभवमकरवम्। तस्यैवाघातस्य चिह्नं मम पृष्ठोपर्यजायत"। इति

एतच्छ्रुत्वा हृदयरामः स्तम्भितः सन् विचारयामास—किमेतत् सम्भवम्? परं श्रीरामकृष्णपरमहंसपृष्ठ आघातचिह्नमवलोक्य तस्य निरवधिविस्मयो व्यजायत।

(३) अन्यस्मिन् दिने—श्रीठाकुरो भवतारिण्याः पूजार्थं कालीमन्दिरस्योद्याने बिल्वपत्रचयनासक्त आसीत्। द्वित्राणि बिल्वपत्राणि त्रोटयित्वा सोऽन्वभवत् यत् सर्वमेव चैतन्यमयमिति। बिल्वपत्रचयनपरः सोऽवलोकितवान् यत् वृक्षोऽपि बिल्वपत्रत्रोटनफलस्वरूपं तीव्रवेदनामनुभवति। अतोऽधिकपत्रत्रोटनात्स विरतोऽभूत्।

श्रीरामकृष्णजीवने आब्रह्मस्तम्बपर्यन्ता सर्वखण्डब्रह्मानुभूतिविषयका अनेका घटना दृश्यन्ते। "यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते।" इति श्रुतिवाक्यं श्रीरामकृष्णजीवने मूर्तमिवाभवत्।

ऋग्वेदे दृश्यते—"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशांगुलम्"। स विराट् पुरुषो न केवलं

विश्वब्रह्मांडं परिव्याप्यावतिष्ठते, अपि तु तद्बहिरपि अतितिष्ठति। मायावशेन भ्रमदृष्टियुक्तो मानवो नामरूपाभ्यां विशेषितं कृत्वा जगदिदं यद्भावेन पश्यति, वस्तुतः तत् जगतो वास्तविकं स्वरूपं न भवति।

"सर्वं ब्रह्ममयं जगत्" मेघनिर्मुक्ताकाशे प्रकाशमानः सहस्र-रश्मिरिव मायायुक्तमानवस्य हृदयाकाशे स्वाभिन्नं ब्रह्म "एकमेवा-द्वितीयं, नेह नानास्ति किंचन" रूपेण प्रतिभातं भवति। एषा समाध्यव-स्थानुभूतिः। व्युत्थानावस्थायां स ब्रह्मदर्शी यत्र कुत्रापि दृष्टिक्षेपं करोति, तत्र सर्वं कृष्णमयम् इत्यवस्थायाम् निवासं करोति। तदा "सर्वं खल्विदं ब्रह्म" इति श्रुतिवाक्यस्य सार्थकानुभूतिर्जायते, तस्मिन् क्षणे तद्दर्शने ब्रह्मातिरिक्तं न किमप्यन्यद्वर्तते। तद्ब्रह्मैव जीवजगच्चतुर्दश-भुवनेषु ओतप्रोतं परिव्याप्तम्।

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" एतादृशोऽनु-भवो जायते।

श्रीरामकृष्णजीवने विश्वात्मकताविकासानुभूतिर्निरुपमा। वस्तुतः समाध्युत्थानानन्तरं सहजावस्थायामपि सर्वभूतेष्वात्मानमेव तादा-त्म्यरूपेण पश्यतः तस्य हृदये जीवमात्रे सार्वत्रिकप्रेम्णः तथा सहानु-भूतेरुदयोऽजायत। एतच्च प्रेम केवलं मनुष्यमात्रे सीमाबद्धं नासीत्।

—०-०—

## १३

श्रीठाकुरस्य मासषट्कं यावत् निर्विकल्पावस्थायां स्थितेरनन्तरं 'भावमुख'-दशायां मनसो व्युत्थानतासम्पादनेन महाशक्तिसमीहयाऽसौ कठिनैरुदररोगैराक्रान्तः। तत्परिणामेन तदीयं शरीरं कङ्कालमात्रावशिष्टमभवत्। बाबामहाशयस्य शीर्णं शरीरमवलोक्य मथुरमहोदयो विशिष्टां चिन्तामापेदे। वर्षाकालः सन्निधत्ते। वर्षाकालिकगंगाजलसेवनेन तदीय उदररोगो वर्धिष्यते, इत्यवधार्य मथुरमहोदयस्तं किञ्चित्कालकृते कामारपुकुरपुरे प्रेषयितुं निश्चयमकार्षीत्। तत्र "शिवपरिवारोऽयम्" इत्यवगत्य मथुरमहोदयपत्नी जगदम्बादासी स्वयमेव वर्त्तिकां यावत् सर्वाणि वस्तूनि संगृहीतवती।

श्रीरामकृष्णदेवः कामारपुकुरं जगाम। हृदयरामो भैरवी च सार्धमेव जग्मतुः। प्रायः सप्तहायनेभ्यः समनन्तरं श्रीठाकुरं स्वमध्यस्थमालोक्य आत्मीयस्वजनानां ग्रामवासिनां च मनांसि महत्यानन्दसागरे निमग्नानि। नववधूमानेतुं जयरामवाटीस्थाने कश्चित्सन्देशवाहकः प्रहितः। श्रीसारदादेवी सानन्दं कामारपुकुरे समाययौ। वस्तुतस्तस्या इदमेव प्रथमं स्वामिदर्शनमासीत्।

इतो बहुवर्षेभ्यो देवी सारदा स्वामिनं न व्यलोकयत्। सप्तवार्षिक्यामवस्थायां तस्या द्विरागमनमभूत्, तदानीं श्रीरामकृष्णदेवो जयरामवाटीग्रामे गतवानासीत्। तदानीन्तनीययाऽस्फुटस्मृत्या तस्या मनसि एतावानेव भावो जागर्त्ति स्म यदियं गृहस्यैककोणे निलीना बभूव। तामन्विष्य भागिनेयो हृदयरामो बहुभिः कमलपुष्पैस्तस्याश्चरणयोः समर्चामकार्षीत्। ततस्तया श्रीठाकुरस्य चरणौ धावयित्वा

स्वकीयैः शिरोरुहैः संप्रोञ्छ्य व्यजनवातञ्चक्रे। इदमवलोक्य सर्वा अपि प्रतिवेशिन्यो जहसुः। 'श्रीसारदादेवी श्रीरामकृष्णदेवस्य पार्श्वे दण्डायमाना स्वकीयाभ्यां लघुभ्यां हस्ताभ्यां व्यजनं चालयति' एतत् दृश्यं भावुकहृदयेषु महदनुप्रेरणा-हिल्लोलमुत्पादयामास।

जयरामवाट्यां निवसन्ती श्रीसारदादेवी एतावद्भिर्वर्षैः श्रीरामकृष्णसम्बन्धे बहुविधं वृत्तान्तमश्रृणोत्। किन्तु कामारपुकुरमागतायास्तस्या मानसिका निखिला अपि सन्देहमेघाः क्षणात् व्यलुम्पन्, तत्कर्णचक्षुर्द्वन्द्वोऽपि निरस्तोऽभूत्। स तु सर्वभावेन स्नेहमयो ममतामयश्च वर्त्तते। स्वल्पैरहोभिरेव श्रीसारदादेव्या सम्पूर्णोऽपि तदीयसेवाभारः स्वकरयोर्गृहीतः। श्रीठाकुरोऽपि स्नेहेन ममतया च समीपमुपस्थाय पत्नीमधिकमाचकर्ष। सस्नेहं सर्वमपि कार्यं तामशिक्षयत्। दीपवर्त्तिका कथं स्थापनीयेत्यपि शिक्षयामास। तस्य प्रेममयेन व्यवहारेण प्रबलयाऽऽत्मीयतया च सा वशंवदा बभूव। समयव्यवधानं च तयोः सामीप्यं न व्यनाशयत्। चिरकालतः सम्मिलितप्राणावुभौ, एकस्यैव पदार्थस्य द्वौ भागौ इव अदृश्येताम्। श्रीठाकुरो नानाविधमीश्वरीयप्रसङ्गमश्रावयत्। श्रीसारदादेवी च तन्मयभावेन सर्वं शुश्राव। भावावेशकाले सा सविस्मयं तं व्यलोकयत्।

तयोः पारस्परिकीम् एतां घनिष्ठतां भैरवी ब्राह्मणी नैव साधुदृशाऽपश्यत्। तस्या भयमभवद् यत् तदीयः शिष्य आदर्शच्युतः सम्भवेत्। सा श्रीठाकुरं पत्नीतः पृथक् स्थापयितुमनेकविधं प्रयत्नमकरोत्। किन्तु श्रीठाकुरः स्वकर्त्तव्यसाधनेऽटलतां भेजे। एतेन ब्राह्मणी मनस्येव प्रतिहता बभूव। यदा श्रीठाकुरोऽद्वैतसाधनायां प्रवृत्त आसीत् तदापीयं तत्साधनातस्तं न्यषेधीत्। देवादिष्टः श्रीठाकुरो ब्राह्मण्या आदेशं नाङ्गीचकार। भैरव्या निर्णीतमासीद् यत् श्रीठाकुरे दिव्यचेतनाया दिव्यशक्तेश्च कारणभूता ममैव कृपा वर्त्तत इति। साऽकथयत्—"मयैव तुभ्यं दिव्यदृष्टिः प्रदत्ता"। श्रीठाकुरो मन्दं मन्दं विहस्य

सर्वमशृणोत्, ब्राह्मण्याः समधिकसेवार्थं स्वपत्नीमादिशच्च, तां प्रसाद-यितुं स्वयमपि बहुविधमचेष्टत।

ब्राह्मण्याः प्रवर्धमानदृप्तव्यवहारेण गृहस्थिताः सर्वा अपि स्त्रियः क्षुब्धा अभूवन्। प्रतिवेशिन्यो भैरवीसमीपमागन्तुं नेच्छन्ति। तस्याः क्रोधोऽहङ्कारश्चैतावान् ववृधे यदेकदा कामप्येकां साधारणीं घटना-माश्रित्य हृदयरामेण साकं महान् विवादः समुपस्थितः। एतेन सर्वैर्दुःखमन्वभूयत। प्रशांतक्रोधा ब्राह्मणी स्वाभ्यन्तरं पश्यन्ती विवादे तत्र स्वदोषमेवान्वभवत्। सन्तप्तमानसा सा श्रीठाकुरतः क्षमां याचमाना काशीधामनि समागच्छत्।

सर्वप्रथमं ब्राह्मण्येव श्रीरामकृष्णदेवाभ्यन्तरे परमात्मशक्तिविकास-मवलोक्य तमवतारविशेषं घोषयन्ती बहुवर्षपर्यन्तं तेनैव साकं तस्थौ। परमन्ते गुरुत्वाऽभिमानस्तस्या निर्मलां दृष्टिमाच्छादयत्।

* * *

कामारपुकुरस्य स्वास्थ्यप्रदजलवायुना ग्राम्यवातावरणेन च कति-भिश्चन मासैरेव श्रीठाकुरः स्वस्थोऽभवत्। तस्यांगेषु स्वास्थ्यप्रकाशो दृष्टिगोचरतामापद्यत। तस्य मुखादीश्वरीयकथामाकर्णयितुं ग्राम-वासिनां संमर्दः समुपतिष्ठते स्म। तदीयमीश्वरीयभावावेशमवलोक्य भयभीता भूत्वा ते ग्रामवासिनोऽवाधारयन् यत् मृतोऽयमिति। बाल्य-सङ्गिभिः सह सरसानालापान् कुर्वन् स एतादृशीः कथाः श्रावयति, याः समाकर्ण्य विहसतां स्त्रीपुरुषाणामुदरे व्यथा समुदपद्यत। तदानीं तमवलोक्य सर्वैरेवं प्रतीयते यत् साधारणोऽयं मानवः।

मातुलं स्वग्रामे शिवहरे समानेतुं हृदयरामस्य बलीयसी वासना-ऽऽसीत्। श्रीठाकुरः शिविकामारुह्य हृदयरामेण सह शिवहर-मगच्छत। बहुदूरं यावद् विस्तीर्णे भुवो भागे विचरतस्तस्य मनसि विराट् चैतन्यस्य स्फूर्त्तिरभवत्। परिसरे वर्षाकालिकं सलिलमवलोक्य

स भावस्थो बभूव। स व्याहरत्—"वर्षासलिलेन यथा धरित्री संपृक्ता, तथैव जीवजगत् चैतन्याप्लुतं वर्त्तते।" इति।

श्रीरामकृष्णदेवमानसं स्वभावत एवोर्ध्वगामि। अत "इदं भोक्तव्य-मिदं खादितव्यम्" इति मनः शमयन् सहजदशायां नीचैरानयति स्म। कामारपुकुरे समागत्य प्रातरेव समादिशत्—"अद्येदं वस्तु पाचनीयम्।" एकस्मिन् दिने पंचफोडननामधेयं सुगन्धिकरणद्रव्यं नासीत्। लक्ष्मीमाता श्रीठाकुरभ्रातू रामेश्वरस्य पत्नी व्याजहार—"नास्ति चेत् न भवतु, तद्द्रव्यं विनैव कार्यं चलिष्यति"। श्रुत्वेदं श्रीठाकुरो जगाद—"कथमेतत्, यदि तन्नास्ति, तदैकेन पणेन तदानय। यस्मिन् यस्य वस्तुन आवश्यकत्वं तद्विना कथं कार्यं सेत्स्यति? तव सुस्वाद्यवस्तुसंयुक्तं शाकं भोक्तुमेवाहं दक्षिणेश्वरादत्र समायातः, तदेव त्वं परित्यक्तुमिच्छसि।" लक्ष्मीमाता व्रीडयाऽभिभूता। त्वरित-मेव द्रव्यं तदानाययामास। इत्थं विविधैः प्रकारैस्तेन ब्रह्मावगाहि स्वकीयं मनः सांसारिकभावेषु बलादानीतम्।

सम्भवतः सप्तमासान् नानाभावैः कामारपुकुरे यापयित्वा श्री-ठाकुरः पुनर्दक्षिणेश्वरमाययौ। १२७४ वंगीयहायनस्य (१८६७ ई०) अग्रहायणमासस्येयं वार्ता।

* * *

इतो मथुरमहोदयः सपत्नीको मध्यभारतपुण्यतीर्थेषु यात्राया आयोजनमनुष्ठितवान्। दक्षिणेश्वरं समागतं श्रीठाकुरमपि तीर्थयात्रायां नेतुं महान्तमाग्रहं सपत्नीकोऽसौ व्यधात्। सोऽपि सहमतो बभूव। परन्तु हृदयरामेणापि गन्तव्यमिति निर्णीतम्।

ततः शुभमुहूर्तमवलोक्य ईसवीय १८६८ हायनस्य जनवरीमासीय-सप्तविंश्यां तारिकायाम् (वंगीयस्य १२७४ वर्षीयस्य माघमासीय-मध्यभागे) शताधिकमानवैः साकं श्रीठाकुरं गृहीत्वा मथुरमहोदय-

स्तीर्थाटनाय प्रतस्थे। यात्रिभिः प्रथमगन्तव्यस्थानं देवगृहं ( देवघर ) निर्णीतम्।... सर्वे ग्रामस्यैकस्य मार्गमाश्रयन्तो जग्मुः। निर्धनग्रामवासिनां दुर्दशां दृष्ट्वा श्रीठाकुरस्य हृदयं करुणार्द्रमभूत्। तेन मथुरमहोदयः प्रोक्तः—"त्वमपि मातुर्देव्याः कार्यवाहकः, एतेभ्यो निर्धनग्रामीणेभ्यः शिरस्सु दानाय तैलम्, एकमेकं धौतवस्त्रम्, दिनस्यैकस्य कृते पर्याप्तं भोजनं च प्रदीयताम्।" पूर्वं तु मथुरमहोदय एकं विघ्नमिममवाधारयत् पुनः प्रोवाच—"भगवन्! तीर्थेष्वनेकप्रकारा व्ययाः क्रियन्ते। इमे च बहवः सन्ति। सर्वेषां भोजनादिदानेन धनराहित्यं स्यात्।"

दरिद्रनारायणदुःखैः श्रीठाकुरस्य नयने सजले संवृत्ते। तदीयं हृदयमपूर्वया करुणया समाक्रांतम्। स चोवाच—"गच्छ त्वम्। त्वया सह नाहं काशीं गमिष्यामि, साम्प्रतमहमेतेषां पार्श्वे निवत्स्यामि। एतेषां रक्षकः कोऽपि नास्ति, एतान् विहाय नाहं कुत्रापि गमिष्यामि।" इदमुक्त्वा मथुरमहोदयं हित्वा निर्धनेषु गत्वा समुपविवेश। विवशो भूत्वा मथुरमहोदयस्तदिच्छामनुसृत्यैव सर्वां व्यवस्थामकरोत्। बुभुक्षितानामाननेषु प्रसन्नतामवलोक्यासावग्रेऽसरत्।

श्रीकाशीपुरीमागत्य भावाविष्टः श्रीठाकुरः सुवर्णमण्डितां ज्योतिर्मयीं काशीमपश्यत्। बहुभिर्युगैः साधुभक्तानां हार्दिको भक्तिभावो घनीभूतो हेममयभावप्रवाहेण शिवनगर्यामत्र ओतप्रोतरूपेण सर्वत्रैव परिव्याप्तोऽवलोकितः। श्रीठाकुरस्य मनसि शिवपुर्या एतावान् गम्भीरः प्रभावो न्यपतद् येन शौचादिद्वारा स्थानमिदमपवित्रीकर्त्तुं नास्य प्रवृत्तिरभूत्। अतः शिविकामारुह्य असिनद्याः परं पारमासाद्य शौचादिभ्यो निवर्त्तते स्म।

मथुरमहोदयः केदारघट्टस्य सन्निधाने भवनद्वयं भाटकेन गृहीतवानासीत्। पूजादानादौ स हि मुक्तहस्तोऽभवत्। तस्य बहिर्गमनकाले

अनेके रक्षापुरुषा अग्रतः पृष्ठतश्च राजतच्छत्रदण्डादिकमादाय चलन्तोऽदृश्यन्त। कश्चिद् राजेवासौ शोभते स्म।

काश्यां निवसता श्रीरामकृष्णदेवेन प्रतिदिनं श्रीविश्वनाथदर्शनार्थं गम्यते स्म। तत्र गत्वैवासौ भावस्थो भूत्वा स्वस्याभ्यन्तरे श्रीविश्वनाथस्य ज्योतिर्मयं प्रकाशमपश्यत्। श्रीकेदारमन्दिरे तस्यायं भावो नितरां ववृधे।

काशीप्रसंगे श्रीठाकुरेण प्रोक्तम्—"मणिकर्णिकाघट्टसामीप्यमासाद्यास्माकं नौकाऽतिष्ठत्। सहसैव तत्र शिवदर्शनं जातम्। नौकास्थित एवाहं समाधिस्थोऽभवम्। नाविकैर्हृदयरामो बोधितो—"गृहाण-गृहाण, अन्यथाऽयं पतिष्यति'। मया दृष्टम्—सम्पूर्णमेव जगत् स्वान्तरस्थं विधाय शिवोऽस्मिन्नेव मणिकर्णिकाघट्टे स्थितः। ततः क्रमशः स धावन्मत्समीपमागच्छति। पूर्वं तु दूरादेवावलोकितः। ततोऽसौ समीपमागत्य ममाभ्यन्तरे समाविवेश"।

वाराणस्यां तदीयान्यदर्शनानां विवृतिः "लीलाप्रसङ्ग"–पुस्तके प्राप्यते—"दृष्टम्, पिङ्गलवर्णजटाजूटधारी स एव श्वेतदीर्घकायपुरुषो गम्भीरं पादविक्षेपं कुर्वन् श्मशानस्थितां प्रत्येकचितामुपढौकमानः सर्वानेव देहिनो यत्नपूर्वकमुत्थाप्य तेषां कर्णेषु तारकब्रह्ममन्त्रमुपदिशति, सर्वशक्तिमयी स्वयं जगदम्बा महाकालिकास्वरूपं बिभ्राणा प्राणिपार्श्वे चितोपरि समुपविश्य स्थूलसूक्ष्मकारणादिसर्वप्रकारजीवसंस्कारबन्धनानि स्वहस्तेन विनाश्य निर्वाणद्वारमुद्घाट्य च स्वीयपरमधामाभिमुखं प्रस्थापयति।*

काश्यां सहसा श्रीठाकुरेण भैरवी ब्राह्मणी दृष्टा। सा चतुःषष्टि-

---

* काशीखण्डे लिखितं यत्—काश्यां मृत्युं गताय जीवाय श्रीविश्वनाथो मुक्तिं प्रयच्छति, परन्तु केन रूपेणेति तस्य कोऽपि विस्तृत उल्लेखो नोपलभ्यते। श्रीठाकुरदर्शनेन वार्त्तेयं सुस्पष्टा।

योगिनीस्थाने मोक्षदानामधारिण्या एकस्या भक्तिमत्याः स्त्रियः सन्निधाने निवसति स्म । श्रीठाकुरो बहुवारं तस्या निवासस्थानेऽगमत् । ततश्च ब्राह्मणी तेनैव साकं वृन्दावनमगच्छत् ।

श्रीठाकुरस्तैलङ्गस्वामिनं विलोक्य नितरां प्रासीदत् । तेनोक्तम्—"साक्षाद् विश्वनाथस्तस्य शरीरे प्रविष्टः प्रकाशते । तस्यावासेन काशी नितरां शुशुभे । ज्ञानस्योच्चदशामसौ समधिगतवान् । श्रीठाकुरस्तैलङ्गस्वामिनं भोजयितुं पायसं निर्माय नीतवान् । तं दर्शयित्वा हृदयरामः प्रोक्तः—"इयमेव सत्या परमहंसावस्था" ।

पञ्च सप्त वा दिनानि यावत् काश्यां स्थितेरनन्तरं श्रीठाकुरो मथुरमहोदयेन साकं प्रयागं प्रस्थितवान् । प्रयागे तदीयदर्शनादीनां घटनाविशेषस्योल्लेखो नावाप्यते । पुनरेकपक्षं यावत् काशीनिवासस्यानन्तरं सर्वे वृन्दावनं प्रतस्थिरे । तत्रत्यदर्शनादिसम्बन्धे श्रीठाकुरेण प्रोक्तम्—"मथुराया ध्रुवघट्टे समुपस्थितेन मयाऽदृश्यत यद् वसुदेवः श्रीकृष्णं क्रोडे गृहीत्वैव यमुनायाः पारं प्रयाति ।...गोवर्धनदर्शनकाले राधाकुण्डमार्गे श्यामकुण्डमायाति । गोवर्धनदर्शनसमकालमेवाहं विह्वलोऽभवम् । धावन् गोवर्धनोपरि गत्वा स्थितः । व्रजवासिनो मामवातारयन् । बाँकेविहारिणमवलोक्यैव भावाविष्टोऽहं तं ग्रहीतुमधावम् ।...वृन्दावने मया भिक्षुकव्रतमङ्गीकृतम् । तन्मया पक्षमेकं पालितम् । कालीयदमनघट्टमवलोक्यैवाहं विह्वलतामुपेतः ..."

श्रीठाकुरस्य वृंदावनस्थानादिदर्शनसम्बन्धे हृदयरामेण यत् किंचिन्निर्दिष्टम् तत् किल आलमबाजारमठस्थितस्य श्रीरामकृष्णानन्दमहाराजस्य २६।१२।९५ तारिकायां बाबूराममहाराजनाम्ना लिखितं पत्रमनुसृत्यैवंविधमास्ते—"श्रीश्रीगुरुदेवेन मथुरामवतीर्य सर्वप्रथमं ध्रुवघट्टप्रभृतेर्दर्शनमनुष्ठितम् । ततश्च स वृन्दावनधामनि समागत्य श्रीगोविन्दमन्दिरनिकटवर्त्तिनि भवने चैकत्र समतिष्ठत । संगे तस्य मथुरमहोदयहृदयरामप्रभृतय आसन् । वृन्दावने तस्य

प्रायशो नित्यमेव भावावेशोऽभवत्। पदमेकमपि गन्तुं न शशाक। शिविकायामेवासौ नीयते स्म। तस्याः शिविकायाः द्वारमपिहित-मभवत्। दर्शनं कुर्वन्नगच्छत्। यदैव भावेऽधीरो भूत्वा शिविकातः पतन्निव भवति, तदैव झटिति हृदयरामस्तं निरुणद्धि। हृदयरामः शिविकायाः पार्श्वं गृहीत्वा प्रचचाल। एवं हृदयरामेण साकं गत्वा राधाकुण्डस्य श्यामकुण्डस्य च तेन दर्शनं कृतम्। एतद्दर्शनकाले मथुरमहोदयः संगे नासीत्।···मथुरमहोदयेन प्रायः सार्धशतमुद्राणां चतुराणक्यो द्व्याणक्यश्च वितरणार्थं हृदयरामस्य हस्ते समर्पिता अभूवन्। श्रीठाकुरेण वैष्णवसाधुभ्यो दानं प्रदातुं हृदयरामः समादिष्ट आसीत्। ततश्चायं गोवर्धनदर्शनार्थं जगाम। तत्र गत्वा नग्नो भूत्वाऽसौ गिरिशिखरमारूढवान्। तीर्थपुरोहितैः सयत्नमसौ नीचै-रवतारितः।

"गङ्गामाता तमवलोक्य पर्यचिनोत्। श्रीठाकुरस्तस्याः सन्निधौ षट् सप्त वा दिनानि न्यवसत्···। हृदयरामो मथुरमहोदयस्यानुरोधेन श्रीठाकुरमनिच्छन्त्यामपि गंगामातरि निधुवनात् सामनिनाय।··· वृन्दावने तेन भिक्षुकव्रतं जगृहे। अनन्तरमेतद्विषये लिखिष्यते"।*

---

* अनन्तरमेकस्मिन् पत्रे शशी महाराजः प्रेमानन्दस्वामिनमलिखत्— "भ्रातः बाबूराम! श्रीठाकुरो राधाकुण्डसमीपवर्त्तिनः चतुरानाम्नस्तीर्थपुरोहितात् भिक्षुकव्रतं गृहीतवान्। वृन्दावनदर्शनकाले तस्य हस्तयोरेकाऽपरिपक्ववंशस्य यष्टिका सदा तिष्ठति स्म। यदा हृदयेन साऽपाह्रियत तदासौ अतीवकातरो-ऽभवत्। यावदसौ तां पुनर्नासादयत्, तावत् न शान्तिमध्यगच्छत्। वृन्दावने स एकं पदमपि गन्तुं न प्रबभूव। शिविकायां स्थित एव यमुनायां न्यमज्जत्।" श्रीवृन्दावननिवाससमये श्रीरामकृष्णः श्रीकृष्णस्य विचारे ध्याने चैतावान् निमग्न आसीत् यत्स्वात्मानं स श्रीकृष्णमेवामन्यत। अत एव बालगोपाल इव स निरन्तरं हस्तेऽपक्ववंशदण्डं धारयितुमैच्छत्।

वृन्दावने श्रीठाकुरस्य गङ्गामातुश्च मिलनमेकमभूतपूर्वमासीत्। गङ्गामाता निधुवने तिष्ठति, उच्चकोटिसाधिका चासीत्। यदा कदा तस्या भावावेशोऽपि जायते स्म। तस्या भावं द्रष्टुं जनानां संमर्द उपस्थितोऽभवत्। भावाविष्टैव सा श्रीठाकुरमवलोक्य पर्यचिनोत्। साऽवदत्—"इयं साक्षात् श्रीराधिकैव देहं धारयन्ती समागता"। सा किल तं दुलारीनाम्ना समाह्वयति। कस्याप्यपरिचितपुरुषस्य दुलारीनामत अह्वानम्! गंगामाता भावनेत्राभ्यां पश्यति स्म। मधुरभावसाधनकाले श्रीराधिका ठाकुरस्यांगेषु समागता बभूव। ततः प्रभृत्येव सा श्रीठाकुराभ्यन्तरे न्यवसत्। अत एव गंगामाता श्रीठाकुरं राधिकारूपेण ददर्श। श्रीठाकुरोऽपि गंगामातरमासाद्य भावाविष्ट एव तस्थौ। अत्यधिकस्यानन्दस्यावेशतोऽसौ दक्षिणेश्वरमपि व्यस्मरत्। तदानीमेव मथुरमहोदयस्य काशीप्रत्यावर्त्तनसमयः समायातः। गंगामाता कथमपि स्वीयां दुलारीं प्रस्थापयितुं परित्यक्तुं वा न शक्नोति। श्रीठाकुरस्यैकं हस्तं गृहीत्वा हृदयराम आकर्षति, अपरं च गंगामाता। तदानीमेव काले श्रीठाकुरस्य मनस्यायातं यत्—"दक्षिणेश्वरस्य मन्दिरे मम जन्मदात्री माता एकाकिनी तिष्ठति। इदमवधार्यासौ वृन्दावने न समधिकं तस्थौ।

पक्षमेकं वृन्दावन उषित्वा पुनः सर्वे काशीमागतवन्तः। श्रीठाकुरस्याज्ञया मथुरमहोदयः काश्यां 'कल्पतरु'रभवत्। ब्राह्मणेभ्यो दरिद्रेभ्यश्च मुक्तहस्तेन तेन बहुदानं प्रदत्तम्। कश्चिदपि याचको विमुखो नाभूत्। किञ्चिद् ग्रहीतुमनुरुद्धः श्रीठाकुरः प्रत्युवाच—'यदि प्रेम्णा किमपि दातुमिच्छसि, तदैकं कमण्डलुं देहि।" श्रुत्वैतत् मथुरमहोदयस्य नेत्रे सजले संवृत्ते।

'एकमेवाद्वितीयम्' इति भावे प्रतिष्ठितस्य श्रीरामकृष्णदेवस्य तीर्थान्तरगमनेन किं प्रयोजनम्? स्वयमेवासौ सर्वतीर्थस्वरूपो वर्तते।

सर्वे देवा देव्यश्च तेनैव साकं तिष्ठन्ति। एतस्मिन्विषये श्रीमन्महाभारते दृश्यते :—

—"तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः, प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः।" तथा च— "भवाद्विधा भागवतास्तीर्थभूताः स्वयं विभो, तीर्थीकुर्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता॥" इति शास्त्रसिद्धान्तो याथातथ्येन प्रमाणितो भवति। श्रीरामकृष्णदेवस्य जीवनमवलोक्य तीर्थस्य वास्तविकं महात्म्यमवगन्तुं प्रमाणान्तरावश्यकत्वं नास्ति।

श्रीठाकुरो गयाधाम्नि गन्तुं नैच्छदतो मथुरमहोदयो गयागमनं विनैव कलिकत्तां परावृते। मासचतुष्टयं तीर्थभ्रमणानन्तरं १२७५ बंगाब्दस्य (८६८ ई०) ज्येष्ठमासस्य मध्यभागे पुनर्दक्षिणेश्वरमाजगाम। श्रीठाकुरः पंचवट्याश्चतुर्दिक्षु वृन्दावनस्य रजांसि न्यपातयत्। किंचिद् रजस्तेन निजसाधनकुटीरस्य मध्यभागे निखातम्। "अद्यप्रभृति स्थानमिदं वृन्दावनमिव देवभूमित्वं प्रपन्नम्" इति सानन्दं तेन प्रतिपादितम्। तदानीमेव काले मथुरमहोदयेन बहून् वैष्णवगोस्वामिभक्तानामन्त्र्य पंचवट्यां विराट् महोत्सव आयोजितः। विपुलां दक्षिणां भोजनं च समधिगच्छन्तस्ते सर्वे मथुरमहोदयाय तीर्थयात्रासुफलमशीर्वादांश्च प्रयच्छन्तो जग्मुः।

* * *

१२७५ बंगाब्दीये (१८६८ ई०) शारदीयनवरात्रे श्रीठाकुरं गृहमानीय दुर्गोत्सवं सम्भावयितुं हृदयरामस्य मनसि महती समीहा समुदपद्यत। तदैव मथुरमहोदयस्य जानबाजारस्थितनिवासस्थाने दुर्गोत्सवः सम्पादनीय आसीत्। मथुरमहोदयः स्वबाबामहाशयं कथमपि परित्यक्तुं नैच्छत् श्रीठाकुरस्य स्वगृहानयनेऽसामर्थ्यात् हृदयरामस्य मनसि सुमहानाघातो जातः। तं दुःखितमवलोक्य श्रीठाकुरः

प्रोवाच—"त्वं कथं खिद्यसे? अहं सूक्ष्मशरीरेण नित्यमेव तव पूजायां सम्मिलितो भविष्यामि। अन्यः कश्चित्तु मां न द्रक्ष्यति, परन्तु त्वमवश्यमेवालोकयिष्यसि। एतदेव संवृत्तम्। सप्तमीविहित-पूजां समाप्य नीराजनसमये हृदयरामेण विलोकितं यत् श्रीठाकुरो ज्योतिर्मयदेहधारी भावस्थो भवन् प्रतिमायाः पार्श्वे तिष्ठतीति। अनन्तरं हृदयरामेण कथितम्—"प्रतिदिनं सम्प्रति सन्ध्याकालिक-पूजावसरे च देवीप्रतिमासन्निधौ दिव्यदेहधारिणं मातुलमपश्यम्।" दक्षिणेश्वरमागत्य हृदयरामेण यदा प्रतिदिनं श्रीठाकुरस्य दर्शनवृत्तान्तो निवेदितस्तदा तेन प्रोक्तम्—"नीराजनसमये सन्ध्याकालिकपूजावसरे च मयैतदनुभूतं यदहं ज्योतिर्मयदिव्यशरीरेण तव चण्डीमण्डपे समुपस्थितोऽस्मीति"।

श्रीरामकृष्णस्य जीवने देवत्वमानवत्वयोः सम्मिश्रणं वस्तुतोऽलौकिकं सर्वमाधुर्यमयं च। एकतस्तत्रात्युच्चब्रह्मानुभूतिर्ब्रह्मदृष्टिश्चाविद्यत, तथैव परतः साधारणमनुष्यवदसौ सुखदुःखाभ्यामप्यभिभूयते स्म। अन्य-दीयसुखदुःखाभ्यां तस्याविच्छिन्नभावसम्बन्ध इवासीत्। दशाद्वये-ऽप्यसौ सहजभावतो विचचार। एकत्र क्षणे स जीवजगत उपरि स्थिते परमतत्त्वेऽवस्थितो दृश्यते, परमपरत्र क्षणे च पुत्रशोकसन्तप्तमनुष्यकृते समवेदनापूर्णो भूत्वा अश्रूणि विमुञ्चन् परिलक्ष्यते।...

श्रीठाकुराग्रजरामकुमारस्यात्मजः सूतिकागृह एव मातृहीनो जातः। रामाक्षय इति तदीयमभिधानम्। वयस्थो भूत्वाऽसौ हि दक्षि-णेश्वरे विष्णुमन्दिरस्य पूजकोऽभवत्। तदीयां भक्तिं तन्मयतां च विलोक्य सर्वे मुग्धा आसन्। अतः श्रीठाकुरोऽपि तस्मिन् नितरां प्रासीदत्। रामाक्षयं वर्षत्रयावस्थां यावदसौ स्वक्रोडे एवाक्रीडयत्। स एव खुदिरामकुलस्य गौरवचिह्नमासीत्। तस्य निष्ठा, भावुकता भक्तिश्चानुपमा अभूवन्। एकविंशतिवर्षदेशीयोऽसौ विवाहानन्तरं श्वसुर-

पुरे भयावहरोगेण समाक्रान्तो बभूव। किञ्चित्स्वस्थो भूत्वा दक्षिणेश्वरं प्रत्यगच्छत्। सम्प्रति किंचित् स्वास्थ्यं सबलत्वमधिगत एवासौ पुनर्ज्वरेण समाक्रान्तः। डाक्टरः प्रोवाच—"साधारणोऽयं ज्वरस्त्वं त्वरितमेव नैरुज्यमवाप्स्यसि।" दिनचतुष्टयं यावद् ज्वरो न न्यवर्त्तत। श्रीठाकुरो दृष्ट्वेदं हृदयमेकान्ते नीत्वा प्रोवाच—"डाक्टरेण न परिचीयते। अक्षयो विकाराक्रान्तः। कमपि साधीयांसं चिकित्सकमानीय चिकित्सां कारय, परन्तु निराशो भव। बालकोऽयं न जीविष्यति।"

श्रुत्वेदं हृदयरामोऽवादीत् "हन्त मातुल! किमेवं ब्रवीषि?" श्रीठाकुर उदतरत्—"किमहं स्वेच्छया कथयामि? जगन्माता यदेव मां व्याहारयति, समीहामन्तरेणापि तदेवाहं वच्मि। किमवधारयसि, अक्षयमृत्युर्ममाऽभिप्रेतः?"

अक्षयस्यान्तिमसमयः सन्निधत्ते। श्रीठाकुरस्तस्य शय्यायाः सविधे गत्वा प्रोक्तवान्—"अक्षय! उच्चारय—'गंगा, नारायण, ओम्. राम' इति।" वारत्रयमुच्चारणेनैव अक्षयस्यात्मा अक्षयधाम प्रतस्थे। हृदयरामो रुदन् विह्वलो जातः। किन्तु श्रीठाकुरो भावावेशे स्थितः सर्वं पश्यन् व्यहसत्। तेनावलोक्यते स्म यदात्मा कथं निस्सरति, कुत्र गच्छति च? मृत्युः किलावस्थान्तरप्राप्तेरपरं नाम।

द्वितीयदिवसस्येयं घटना। श्रीठाकुरः शान्तः स्वगृहस्योपप्रकोष्ठे स्थितः सहसाऽक्षयस्य शोकेनाभिभूतोऽभवत्। तेन प्रोक्तम्—यथा वस्त्रनिष्पीडनं क्रियते, तथैव ममाभ्यन्तरभागमपि कोऽपि निष्पीड़यतीति मयाऽज्ञायत। द्वितीये क्षणे पुनर्भावस्थो भूत्वा न्यगादीत्—"मातः! अत्र तु स्ववस्त्रस्यैव बोधो नास्ति, भ्रातृजेन कः सम्बन्धः? साधोर्ममैतावान् शोकस्तदा सांसारिकाणां का गतिः। इदमेव मां दर्शयसि मातः!"

* * *

मथुरमहोदयः श्रीठाकुरं दिवानिशं यावता परीक्ष्य पश्यति तावतैव तदुपरि तस्य श्रद्धाऽऽकर्षणं च प्रवर्धते स्म, एतादृशस्त्याग-संयम-

ज्ञानभक्ति-भगवत्परिपूर्णता-विगलितकरुणा-प्रभृतयो भावा नान्यत्रावलोक्यन्ते। परन्तु एतैः सार्धमहंकारत्यागोऽपि तथैव।

श्रीठाकुरं स्वतः स पृथक्कर्तुं कर्त्तुं नापारयत्। आहारे विहारे, किमधिकं—शयनकालेऽपि तं स्वपार्श्वे रक्षितुमैच्छत्। बहुविधैर्भावैः श्रीठाकुरं सेवमानस्यापि तस्य मनस्तृप्तिं नासादयति। सुवर्णपात्रेषु भोजयित्वा सहस्रमुद्रामूल्यात्मकैः कौशेयपट्टाम्बरैस्तं छादयित्वाऽपि न तस्य वासना परिसमाप्तिमेति। बहुमूल्यवस्त्राणि पद्भ्यां मर्दयित्वा स्वर्णपात्राणि च थूत्कृत्य प्रक्षिपति, यतोऽयं 'समलोष्टाश्मकांचन' दशामधिगतो बभूव। विकारातीतस्य श्रीठाकुरस्य कस्मिंश्चिदपि वस्तुनि आसक्तिर्नासीत्।

श्रीठाकुरं सन्तर्पयितुं मथुरमहोदयेन अन्नमेरुयज्ञस्यानुष्ठानं विहितम्। महान्तः साधवो महात्मानः पण्डिताश्चामन्त्रिताः समभूवन्। श्रीठाकुरं कीर्त्तनं श्रावयितुं विश्रुताः कीर्त्तनकारिणः समाहूताः। गायकगायिकानां योग्यतापरिमाणज्ञानमिदमेवासीद् यत् तदीयगानकीर्त्तनं शृण्वन् श्रीठाकुरः समाधिस्थो भवेत्। यस्य कीर्तनश्रवणेन तस्याधिकः समाधिर्भवेत् स एव सर्वाभ्यर्हितः कोर्त्तनकर्त्ता ज्ञास्यते। तस्मै एव अधिकः पुरस्कारो दातव्य इति। श्रीठाकुरमुद्दिश्यानन्दमहोत्सवः प्राचलत्।

तदानीं मथुरमहोदयः केषुचिद्दिवसेष्वनन्तरितेष्वेव श्रीरामकृष्णं जानबाजारस्थिते स्वगेहे समानयत्। बाबामहाशयं प्रति मथुरमहोदयस्यासाधारणमाकर्षणमवलोक्य कालीघट्टस्वामिनो हालदारपरिवारस्य पुरोहितो मनसि नितरां प्रजज्वाल। तेनालोचितम्—"आपदियं कुतः समायाता? ज्ञायते एष मथुरमहोदयं प्रति इन्द्रजालमपातयदन्यथाऽसौ एतस्यैतावद्वशे कथमागतः। अयं किल पाखण्डिनां प्रथमस्तत्रापि निरीहतायाः प्रदर्शनं करोति। हन्त! केनापि प्रकारेणैतस्येन्द्रजालं मम हस्ते समागच्छेत्।"

एकदा सन्ध्याकाले श्रीठाकुरो जानबाजारस्थे गृहे अर्धचेतनावस्था-

यामुपविष्टोऽभवत्। शनैः शनैस्तस्य सहजा दशा प्रत्यागच्छति। तदानीमेवासौ पुरोधाः कुतश्चिदागतः श्रीठाकुरं चैकाकिनमुपविष्टं व्यलोकयत्। अयमेवानुकूलः समय इति मनसि विमृश्य, समीपमागत्य च इतस्ततो निरीक्षमाणः श्रीठाकुरस्य शरीरे ईषदाघातं कुर्वन् उवाच—"अये ब्राह्मण! वद त्वया बाबू केन विधिना वशमानीतः? कथय, कथं मायां विरच्य शान्तस्तिष्ठसि? किं न ब्रवीषि?" बहुवारं कृतेऽपि प्रश्ने, यदोत्तरं न लब्धं तदा क्रुद्धेन तेनोक्तम्—"अयं श्यालको न कथयिष्यति" इति जल्पन् स्वोपानद्गूढपादेन श्रीठाकुरं प्रहृत्य प्रत्यगच्छत्। क्षमामूर्त्तिः श्रीठाकुर एतद्घटनाविषये किमपि कस्मैचनापि न प्रकाशयामास। तेन ज्ञायते स्म यन्मथुरमहोदयकर्णगोचरीभूतायामस्यां वार्त्तायां पुरोहितस्य का दशा भविष्यतीति। परन्तु किञ्चिद्दिनानन्तरं केनापि कारणान्तरेण पुरोहितोऽसौ मथुरमहोदयेन स्वगृहान्निष्कासितः। अनन्तरं कदाचित् प्रसङ्गवशात् श्रीठाकुरो मथुरमहोदयं घटनामिमां श्रावितवान्। श्रुत्वैव क्रोधान्मथुरमहोदयस्य चक्षुषी रक्ताभे संवृत्ते। साक्षेपं तेनोक्तम्—"बाबा, घटनामिमां यद्यहं तदानीमेवाश्रोष्यम्, तर्हि पुरोधसं जीवन्तं न कदापि पर्यत्यक्ष्यम्।"

अनन्तरं देहत्यागात्किंचिद्दिनपूर्वं कदाचिन्मथुरमहोदयः प्रोक्तवान्—"बाबा, तवाभ्यन्तरे केवलं स एवेश्वरो विराजते, नान्यत् किमपि। शरीरं तु केवलं कञ्चुकमात्रम्।" रात्रौ दिने वा यदापि मथुरमहोदयः श्रीठाकुरं पश्यति, तदानीमेव तच्चरणयोर्मस्तकं नमयति।

ततः किंचिद्दिनानन्तरं मथुरमहोदयः श्रीरामकृष्णं सहैव नीत्वा स्वीयभूस्वामितावृत्तान्तमवलोकयितुमगच्छत्। राणाघट्टाभ्यर्णे कलाईघट्टमागतस्य श्रीठाकुरस्य नयने दरिद्रतापेपीड्यमानग्रामीणस्त्रीपुरुषदुरवस्थायामपतताम्। तेषां शीर्णवस्त्राणि शुष्कामाकृतिमवलोक्यैव तदीयं मानसं चीत्कृतिमातनोत्। मातुरानन्दमय्या राज्ये एतावन्ति दुःखकष्टानि! तेन मथुरमहोदयः प्रोक्तः—"एतान् उदरपूरणं भोजय, परिधानार्थं-

मेकमेकं वस्त्रं देहि, शिरसि प्रदातुं तैलं च।" पूर्वं तु मथुरमहोदयेनापत्तिः कृता। किन्तु श्रीठाकुरस्य हठेनान्ते तदिच्छानुसारं सर्वानतर्पयत्। ततश्च श्रीठाकुरस्यादेशेन निर्धनप्रजानां वार्षिककरोऽपि मथुरमहोदयेन परित्यक्तः।

श्रीठाकुरो मासषट्कं निर्विकल्पसमाधावतिष्ठत्। जन्मग्रहणानन्तरमेव श्रीमद्भगवता सहाखण्डं विलसति भ्राम्यति च। तथाप्ययं साधारणान् मानवान् न विसस्मार। विस्मर्तुं कथं शक्नुयात्? मनुष्या अपि भगवत्स्वरूपा भगवदंशा एव। मानवपरित्यागेन भगवत्प्राप्तिरसम्भवैव। श्रीरामकृष्णजीवने अकिंचनान् दुःखदारिद्र्यप्रपीडितान् जनान् प्रति गभीरानुकम्पा तथा हार्दिकी सहानुभूतिः अस्मान् विमुग्धमानसान् व्यधत्त।

मथुरमहोदयस्य देवादिष्टं कर्म समाप्तिमगात्। तदीयो महायात्राकालः सन्निधत्ते। सप्ताष्टौ दिनानि ज्वरस्य भोगानन्तरं तदीय आत्मा देवीलोकमगच्छत्। अन्तिमसमये मथुरमहोदये रुग्णे सति श्रीठाकुरोऽवगतवान् यदिमं जगन्माता स्वधाम नूनं नेष्यति। प्रतिदिनं स मथुरमहोदयवृत्तान्तमवगन्तुं हृदयरामं प्रेषयति। किन्तु स्वयमेकवारमपि नागच्छत्। १२७८ वंगाब्दश्रावणस्य प्रथमतिथौ (१८७१ ई०) तृतीयप्रहरे श्रीठाकुरो गम्भीरभावस्थो ज्योतिर्मयदेहेनान्तकाले स्वसेवकस्य शय्यासमीपमाययौ। पंचवादने भावसमाधिर्व्यपगतः। स च हृदयं स्वसमीपमाहूय प्रोक्तवान्—"जगन्मातुः सहचारिण्यो मथुरं सम्मानपूर्वकमेकस्मिन् दिव्यरथे स्थापयित्वा निन्युः। तदीयं ज्योतिर्देवीलोकं प्रापत्।" समधिकरात्रौ व्यतीतायां समाचारो लब्धो यत्—'मथुरमहोदयः सायं पंचवादने स्वर्गतः।'

बहोः कालस्यानन्तरं "मथुरमहोदयस्य किमभूत्" इति जिज्ञासितः श्रीठाकुरो भक्तान् प्रोवाच—"कुत्रापि गत्वा कश्चिद् राजा महाराजो वा भूत्वा जन्म ग्रहीष्यति। यतस्तस्य भोगवासना प्रबलाऽऽसीत्।"

पूर्वमेवैतल्लिखितं यत् १२७४ वंगीयाब्दे श्रीरामकृष्णदेवेन सारदादेव्या च कामारपुकुरे सहैव कतिचिन्मासा व्यतियापिताः। एतस्मिन्नवधौ श्रीठाकुरस्य दिव्यसहवासेन श्रीसारदादेव्या यो ह्यानन्दः समुपलब्धः स हि श्रीसारदादेव्याः कथनेनैव ज्ञायते—"हृदये आनन्दपरिपूर्णो घटः स्थापित इव संवृत्तः। तदा प्रभृति निरन्तरं मया स एवापूर्व आनन्दोऽनुभूयते। धीरस्थिरदिव्योल्लासे हृदयं कथं सम्भृतमासीदिति कथयितुं न कदापि शक्यते।"...

ततः श्रीसारदादेवी चत्वारि वर्षाणि पुनरपि जयरामवाट्यां व्यतीयाय। इदानीमियमष्टादशवार्षिकी पूर्णा युवती संवृत्ता। हृदये स्वामिनो ध्यानं कुर्वती आनन्दस्मृतिपरिपूर्णमानसा तत्र ससुखमुवास। किन्तु जयरामवाट्यामेतर्हि विचित्रा चर्चा प्रचरति—'जामाता उन्मत्तः संवृत्तोऽस्ति'। इयमपि ग्राममहिलासमाजे एकोन्मत्तपत्नी अवधार्यते। पतिनिन्दाश्रवणतो नैजमात्मानं विमोक्तुमियं गृहान्न निःसरति। किन्तु एतावतैव समस्या न ससाधीयते। श्रीसारदादेव्या मनः किंचित् शङ्कितं जातम्। 'पंचमुखे परमेश्वरो वसतीति' लोकोक्तिरेव कदाचित् सत्या भवेत्, साम्प्रतं ममात्राधिकनिवासो न समीचीनः। तदीये नेत्रे मन्दायेते। श्रीसारदादेव्याः प्रतिवेशिन्यः काश्चन कस्यचिद् व्रतस्योपलक्ष्ये गंगां स्नातुं गन्तुमुद्यता बभूवुः। 'अयमेव शुभोऽवसर' इति श्रीसारदादेव्या मनसि विचारितम्। तया च प्रतिवेशिनीनां समीपे स्वीयगङ्गास्नानसमीहा प्रकाशिता। तस्याः पिता रामचन्द्रो यदा तदीयामिमामिच्छामशृणोत् तदा पिताऽवधारितवान् यदस्याः स्नानेच्छा कथं भवति। स च तां स्वेनैव साकं नेतुं सन्नद्धोऽभवत्।

शुभदिने यात्रा प्रारब्धा। सुदीर्घसंकीर्णग्राम्यमार्गेण गम्यते स्म। तथापि श्रीसारदादेवी प्रसन्नमानसा विस्तीर्णक्षेत्रात्क्षेत्रमाक्रमद्भिस्तैः सर्वैः सहागमत्। रात्रौ सर्वे कुत्रापि विश्रामस्थाने विश्रम्य पुनर्दिने प्रचलन्ति। किन्तु दिनद्वये व्यतीते एकस्मिन् स्थाने श्रीसारदा-

देवी भीषणेन ज्वरेण समाक्रान्ता पितुर्विशेषचिन्ताहेतुतां प्रपेदे। परन्तु एकयाऽघटनीयघटनया सा विस्मिताऽक्रीयत। परवर्तिकाले कदाचिद् भक्तानां समीपे तया प्रोक्तम्—"ज्वरेण यदाऽहं विगत-बोधाऽभवम्, तदाऽपश्यम् यदेका स्त्री मम पार्श्वे समागत्योपविष्टा। सा कृष्णवर्णा, किन्तु सुन्दरी एतादृशी आसीत् यत् तादृशसुन्दरी स्त्री मया कदाचिदपि नावलोकिता। उपविष्टैव सा मम मस्तके शरीरे च स्वहस्तं भ्रामयितुं प्रावर्त्तत। स हस्तश्च कीदृश. शीतल कोमलश्च! शरीरज्वाला शान्तिमापत्। मया सा जिज्ञासिता—कुतस्त्वं समागता? अहं दक्षिणेश्वरादागता इति तयोत्तरितम्। श्रुत्वेदं स्तब्धीभूताऽहं प्रोक्तवती—दक्षिणेश्वरात्? ममापि मनो दक्षिणेश्वरं गन्तुं, तमवलोक-यितुं, तत्सपर्यामनुष्ठातुं च मां समादिशति। किन्तु सम्प्रति मार्गे ज्वराक्रान्ततया ज्ञायते यत् तत्सर्वं मम भाग्ये नास्ति। तया प्रोक्तम्—कथमेतत्, त्वं तु दक्षिणेश्वरं गच्छसि। नीरोगा भूत्वा तत्र गच्छ, दर्शनं चानुतिष्ठ। त्वदर्थमेव मया स दक्षिणेश्वरे निरुद्धः'। मया पृष्टम्—'त्वं मम काऽसि'? तयोत्तरितम्—'अहं तव भगिनी'। अह-मुक्तवती—'सत्यम्, एतदर्थमागताऽसि ?'। एतद्वार्त्तालापानन्तर-महं पार्श्वं परिवर्त्तयन्ती निद्रां प्रपन्ना'। दक्षिणेश्वराच्छ्रीमहाकाली स्वभगिनीं श्रीसारदां निरोगां विधातुं तथा तस्या मानसं चिन्तारहितं शान्तं च कर्तुं तत्र विजनस्थाने रात्रावागता।

आगामिदिने प्रात. श्रीरामचन्द्रेण दृष्टं यत् कन्याया ज्वरो व्यपागमत्। ततोऽसौ शनै शनै पुनः प्रस्थानमकार्षीत्। ईषद्दूरगम-नानन्तरमप्रत्याशितरूपेणैका शिविका लब्धा। क्रमशो मार्गोऽपि समाप्तप्राय एव। निशि समागतायां सर्वे दक्षिणेरमाययुः।

पत्नी मार्गे ज्वराक्रान्ता—इति श्रुत्वा श्रीठाकुरो विशेषरूपेणोद्-विग्नोऽभवत्। त्वरितमेव पत्नीकृते स्वगृहे स पृथक् शय्याया व्यवस्थां सम्पाद्य स्वयं तस्याः सेवायां संलग्नः। तेन स्वभावत एव दु खं प्रका-

शयता कथितम्—"त्वमेतावद्दिनानन्तरमागता ? इदानीं मम सेजोबाबू ( मथुरामोहनः ) नास्ति यस्तव सेवायां यत्नमनुतिष्ठेत् ।" त्रिचतुर्दिनानि स्वगृहे स्थापयित्वा औषधपथ्यादिनाऽसौ स्वपत्नीं स्वस्थामकरोत् । ततश्च स्वमातुर्निकटे नौबतस्थले श्रीसारदादेव्या निवासव्यवस्थामकार्षीत् ।

श्रीठाकुरेण कतिपयमात्रदिनसंगता श्रीसारदादेवी पत्युः प्रीत्याऽजस्रान्तरिकतया चाप्यायिता बभूव । तयावगतं यत् जनैर्यत्किमपि भणितं तत्सर्वमसत्यम् । यथाऽयं पूर्वमासीत् तथैव साम्प्रतमपि । तां प्रति श्रीठाकुरस्याकर्षणं किंचिदपि न्यूनं नास्ति । स्वास्थ्यलाभानन्तरं सा नौबतस्थलस्थिता सोल्लासं मनसा वचसा कर्मणा शरीरेण च स्वश्वश्रूस्वामिनोः परिचर्यायां संलग्नाऽभवत् ।...

श्रीरामकृष्णदेवेन पत्नी समाहूता नासीत् । सा स्वयमेवागतवती । सा आगताऽऽसीत् स्वामिना साकं स्वघनिष्ठतावर्धनद्वारा तेन सह परिचयदृढीकरणाय तस्य च मनोभावेन सेवां निर्वर्तयितुम् । स्वेच्छया सारदादेव्या दक्षिणेश्वरे समागमं श्रीठाकुरो जगन्मातुः संकेतमवाधारयत् । तेन विचारितं—यत् तया साकं मम सम्बन्धस्तां मत्तः दूरे स्थापयितुं कदापि न जातः । एतया विना तु मम जीवनमेवापूर्णम् । तेन स्वीयं कर्त्तव्यं सम्यक् स्थिरीकृतम् । एतेन तस्य जीवनस्यैकदिव्यभावः प्रकाशमागतः ।

प्रागेवेदमुल्लिखितं यत् श्रीरामकृष्णदेवेन विवाहात्पूर्वमेव भावाविष्टेनैकवारं स्वयमेव स्वकीयाया भाविन्याः पत्न्याः संकेतस्थानं सूचितमासीत् । सर्वं ज्ञात्वैव तेन कथितमभूत् । कासौ कन्या, तेन सह पत्न्याः, पत्न्या च साकं तस्य कः सम्बन्धः, विवाहस्य च किं प्रयोजनम् इति सर्वमवगत्यैव तेन विवाहो विहित आसीत् । तर्हि कथमेतत्सम्भवं यद् विवाहानन्तरं सर्वमसौ विस्मरिष्यति । अस्माभिरिदं विज्ञायते यदयं केवलं जगन्मातुरादेशं प्रतीक्षते स्म ।

इतः पूर्वमेव तन्त्रसाधनायां प्रतिष्ठितस्य श्रीठाकुरस्य चेतसि नारीमात्रोपरि मातृभावः समुत्पन्नो बभूव।…ततस्तेन वेदान्त-साधनायामद्वैतसिद्धिरधिगता। मासषट्कं निरन्तरमसौ निर्विकल्प-समाधौ स्थितोऽभवत्। प्राणिमात्रे च ब्रह्मदर्शनमकरोत्। ततस्तस्य का भीतिरस्ति यदसौ भार्यां दूरे स्थापयितुं प्रयत्नवान् भवेत्।

* * *

श्रीरामकृष्णदेवो मनोवाक्कायैः पुत्र-वित्त-लोकैषणां सांसारिकीं निखिलामपि वासनां परित्यज्यैव संन्यासी बभूव। सोऽनुपमं त्यागोज्ज्वलं जीवनं व्यत्ययापयत्। कस्यचिद्धातुद्रव्यविशेषस्य स्पर्शमात्रेणैव तस्य शरीरे कम्प इव जायते स्म। तेन स्वयमेव श्रावितम्—"एकदा मथुरमहोदयस्य, मारवारदेशनिवासिनो लक्ष्मीनारायणस्य च सम्पत्तिः सलेखं मह्यं दीयते इति वृत्तान्तमाकर्ण्य मम शिरसि शूलमिव प्रविवेश, महती यन्त्रणा बोभूयते स्म।"

हावभावसम्पन्नानां सुन्दरीणां मध्येऽप्यसौ समानीयत, किन्तु तत्र गत्वैव समाधिस्थोऽभवत्। अन्या अपि बह्वयो घटनावल्यः सन्ति, यास्तदीयजीवने त्यागस्यादर्शमत्युन्नमयन्ति।

* * *

केवलं विभिन्नधर्माणां साधनार्थं, संन्यासग्रहणार्थमेवासौ न समागतः, स हि सर्वदेशसर्वस्तरीयजनमङ्गलसाधनार्थं, प्राणिमात्र-कल्याणार्थं च समायातोऽभूत्। तस्य जीवने सर्वविधा परिपूर्णता प्राप्यते। संसारे कोटिशः स्त्रियः पुरुषाश्च गृहस्थजीवनं यापयन्ति। तेषां कृते नवीन आदर्शो रामकृष्णजीवने प्राप्यते। एतदादर्श-परिपूरणार्थमेव तेन विवाहः कृतः। श्रीसारदादेवो तदर्थमेव दक्षिणेश्वर-माययौ।

"त्यागेनैके अमृतत्वमानशुः" इत्युपनिषच्छ्रुतिवाक्यं मानव-

मात्रहिताधायकम् ,अत्र संन्यासिनां गृहस्थानां वा प्रश्नो नोदेति । अयमेवा-मृतत्वाधिगममार्गः । भारते वर्षेऽसावप्येकः समय आसीद् यत्र गृहस्थाश्रमोऽपि त्यागादर्शोपरि प्रतिष्ठितो बभूव । सामयिकप्रभावेण साम्प्रतिकः समाजस्तस्मादादर्शतः सर्वथा पराङ्मुखोऽस्ति । भूमानन्द-प्राप्तेरेकः सोपानभूतः पन्थाश्च गृहस्थाश्रमो मन्यते स्म । किन्तु साम्प्रतं स बहुदूरमतीते गुञ्जायमानं तस्यैकं प्रतिध्वनिमात्रमवशिष्यते । गृहस्थाश्रमवासिभिरप्यमृतत्वमधिगम्यताम्, तैरपि सत्पथमाश्रीयताम् , इत्युद्देशसिद्धय एव श्रीरामकृष्णेन गृहस्थजीवनमूरीकृतम् । गृहस्थाश्रमस्य सर्वोच्चादर्शानां प्रदर्शनमेव तस्य लक्ष्यमासीत् । "स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ।" श्रीरामकृष्णजीवने ध्यानतः परिदृश्यमाने सर्वथेदं स्पष्टीभवति यदात्मानन्दे प्रतिष्ठालाभार्थं भौतिकतात उपरि उत्थानं मानवानां कृतेऽत्यावश्यकं भवति । यावत् सांसारिकविषयविषभोग-जन्यानन्दात् मनो न निरुध्यते न तावत् कदापि भूमानन्दोपलब्धेः सम्भावना ।

बहूनां मनसि प्रश्नोऽयं जागर्त्ति यत् श्रीठाकुरस्य जीवने गृहस्थाश्रमस्य परिपूर्णता आसीन्न वा ? श्रीरामकृष्णः एकरूपतयैव गृहस्थानां संन्या-सिनां चादर्शभूतो बभूव । अतः पत्न्या साकं तस्य कोऽपि भौतिक-सम्बन्धो नाभवत् ।

संन्यासाश्रमस्याखण्डं ब्रह्मचर्यमेवैकमात्रभित्तिः । श्रीरामकृष्णजीवने-नैतन्निर्णीतं यत् केवलं विषयभोग एव नास्ति सर्वस्वम् । पत्न्या सहा-ध्यात्मिकसम्मेलनेन, प्रकारान्तरविषयजन्यसम्बन्धमन्तरेणापि गम्भीरस्य प्रेम्णः सम्भावना । श्रीराकृष्णदेवजीवने संसारेणैतत्प्रत्यक्षी-कृतम् । इदमेव रजोगुणविरहितं परिपूर्णं विशुद्धं च प्रेमाभिधीयते । अस्मिन् प्रेम्णि उच्छलतायाः, अवसन्नतायाः, अतृप्तेश्च नास्ति सम्भावना । एतादृशमेव प्रेम मानवं देवत्वे, देवित्वे, पूर्णानन्दे, आत्मानन्दे च प्रतिष्ठापयति ।

प्रेमेदं दैहिकस्पर्शशून्यं द्वयोरन्तरात्मनोर्विशुद्धमिलनमासीत् । किं तयोः परस्परं गम्भीरं प्रेम नाभवत् ? नैवम् । स्वस्वप्रेममयव्यवहारेण तौ संसारेऽत्र कस्यापि प्रेमिणः प्रेमिकायाश्च मनसि ईर्ष्यामुत्पादयितुं शक्नुतः । अनन्तरं श्रीसारदादेवी वार्तालापप्रसङ्गेन भक्तिमतीः प्रोवाच—अहो ! कीदृशं सुमधुरव्यवहारमसौ करोति स्म मया सह । एकस्मिन्नपि दिने नाभूत् काप्येतादृशी घटना, यया मनसि व्यथायाः समुत्पत्तिर्भवेत् ! कदापि भ्रमादपि तेन मम मनस्याघातो न कृतः । दक्षिणेश्वरे निवाससमयस्येयं वार्ता—"एकस्मिन् दिनेऽहं तस्य गृहे भोजनं स्थापयितुमगच्छम् । तेनावधारितं यत् लक्ष्मी ( श्रीरामकृष्णभ्रातृकन्या ) भोजनं स्थापयित्वा गच्छति । एतदेवावधार्य तेन कथितम् 'द्वारं पिधाय गन्तव्यम्' । मयोक्त'मतिसुन्दरम् ।' मम कण्ठस्वरं ज्ञात्वाऽसौ सविस्मयमुवाच-"केयम्, त्वमसि ? मया न परिज्ञातं यत् त्वमागताऽसि । मयाऽवधारितं लक्ष्मी अस्ति । मनसि न किमप्यन्यथा मन्तव्यम् ।" ततोऽहं प्रावोचम् 'तेन किमभवत् ?' कदापि तेन मह्यं निरादरशब्दो न प्रोक्तः ! सदैवासौ मां प्रसन्नां स्थापयितुं प्रयत्नमकरोत् ।"

श्रीठाकुरः प्रोक्तवान्—"इयं सारदा स्वयं सरस्वती वर्तते । सा विभूषिता स्थातुमिच्छति ।" स्वयं तु तेन सुवर्णं न स्पृश्यते स्म, परन्तु पत्नीकृते प्रयत्नपूर्वकं स्वर्णाभूषणानि निर्मापितानि । चित्रिते पादभूषणे, हारः, समीचीनो नासालङ्कारः, कङ्कणे, कुण्डले, किम्बहुना, तत्कालप्रचलिता बहुविधा अलङ्कारास्तदर्थं तेन निर्मापिताः । मनोनुकूलाः शाटिकाश्चानायिताः । न कस्यापि वस्तुनो न्यूनता । प्रयत्ने नाणीयस्यपि त्रुटिरभूत् । सदैवासौ सावधानोऽभवत् । कस्मिंश्चित् दिने यदि पत्न्याः शिरो व्यथते स्म, तदानीमसौ चिन्तितोऽभवत् ।

श्रीरामकृष्णदेवस्य वैवाहिकजीवनयापनमालोक्य देवा अपि विस्मयान्विता अभूवन् । आदितः मानवानामितिहासे एतादृशजीवनयापनस्योदाहरणं दुर्लभम् । श्रीशुकदेवस्य, आचार्यशङ्करस्य, महात्मन

ईसामसीहस्य च जीवनमन्यादृशमासीत्। एतेषां वैवाहिकजीवने प्रवेशो नासीत्। किन्तु वैवाहिकजीवनमङ्गीकृत्य तेषां श्रेणौ गणनीय एकः श्रीरामकृष्णदेव एव। गृहस्थाश्रमाणां सम्मुखे त्यागस्यादर्शं प्रदर्शयता तेन मध्यमार्गो व्यवस्थापितः—"एकस्य द्वयोर्वा सन्तानयोरुत्पत्तेरनन्तरं परमेश्वरचिन्तनपूर्वकं पतिपत्नीभ्यां भ्रातृभगिनीवत् जीवनं यापनीयम्।" गृहस्थाश्रमाणां कृतेऽयमेव तस्य निर्देशः।

श्रीरामकृष्णदेवेन स्वीया पत्नी पूजिता। पूजेयं नारीं प्रति तथाविधं सम्मानप्रदर्शनमात्रमेव नासीत्, यथाविधं पाश्चात्त्यदेशेषु प्रचरति। इयमस्ति मातृत्वस्य, देवीत्वस्य पूजनं नारीं नारीं दिव्यसिंहासने संस्थाप्य तस्याः स्वे महिम्नि प्रतिष्ठापनम्।...

जाज्वल्यमानशिखाप्राकारपरिवेष्टिते साधनपथेऽत्र स्निग्धदेहे-नाक्षतमनसा सिद्धेरमृतसरोवरं यावत् गमनात् परमसौ श्रीरामकृष्णः 'परमहंसपद'मलञ्चकार। जागतिके इतिहासेऽयं श्रेष्ठो मानवस्तथा-ऽऽध्यात्मिकेतिवृत्ते तदीया श्रेणी महामानवस्य वर्त्तते स्म।

❀ * *

श्रीरामकृष्णदेवेन श्रीसारदादेव्या निवासव्यवस्था तु स्वमातुर्वेश्मनि नौबते विहिता, किन्तु रात्रौ तस्याः शयनप्रबन्धः स्वगृह एव कृतः। एकं दिनं, दिनद्वयमेव न हि, अष्टौ मासान् रात्रिन्दिनमसौ तया सहैवासीत्। स्वस्थः, सबलः, पूर्णयुवकश्च श्रीठाकुरः, नवयौवनसम्पन्ना श्रीसारदादेवी च। उभयोः सम्बन्धोऽपि घनिष्ठोऽन्तरङ्गश्च।...कदाचिदयं तया सहैतादृशीं सरसां वार्त्तामकार्षीत्, यामाकर्ण्य श्रीसारदादेवी विहसन्ती लुलुण्ठ। दिनं रात्रिश्च एकसमानदिव्यानन्देन व्यत्यगच्छताम्। श्रीसारदादेवी सानन्दं स्वामिसेवापरायणा शयनगृहं स्वच्छं करोति, स्वामिनः शिरसि शरीरे च तैलं मर्दयति, स्वयं भोजनं निर्माय भोजयति, पादौ संवाहयति च। सर्वमिदं स्वाभाविकरीत्या प्रचलति स्म। परमेत्वेषामधिकांशो भागो लोकचक्षूंषि विहाय बोभूयते स्म।....

प्रारम्भे एकस्यां रात्रौ श्रीठाकुरः स्वपत्नीमेकान्तेऽपृच्छत—"किं त्वं सांसारिकविषयभोगेषु मामाकष्टुं समागताऽसि ?" एतदाकर्ण्य स्वच्छन्द-सरलकण्ठतः श्रीसारदादेव्या प्रोक्तम्—"न हि, कथमहं भवन्तमस्यां दिशि समाकृष्टं करिष्यामि ? स्वाभीष्टपथे भवतः साहाय्यं कर्त्तुमहमागतास्मि।"

श्रीठाकुरस्य गृहस्थजीवनमतीव मधुरम्। कदा कदाचिच्चोभावपि भगवच्चर्चायां तन्मयौ भवतः कदापि च श्रीठाकुरो विभिन्न भावैस्तां गृकार्यजातमशिक्षयत्। संसारे मानवैः विभिन्नैश्च साकं कथं व्यवहर्त्तव्यम्। कया रीत्या च स्वजीवनं परिचालनीयम्, इत्यादिको लघुतरोऽपि विषयो न तेन परित्यज्यते स्म। परन्तु रात्रौ समागतायामसौ स्वात्मन्येव तिष्ठति। यथा यथा रात्रिः प्रवर्धते, तथा तथा तस्य समाधौ भावे च गाम्भीर्यमायाति। कदा कदाचिच्च समस्तामपि रात्रिं समाधावेव व्यत्ययति।

प्रथमं तु श्रीसारदादेवी श्रीठाकुरस्य तामवस्थामवलोक्य भय-व्याकुला बभूव। परमनन्तरमेकवारं तया भक्तिमत्यः प्रोक्ता—"कस्मिन् अपूर्वभावेऽसौ तिष्ठति स्मेति न परेभ्यो विदितं कर्त्तुं शक्यते। कदाचिदसौ भावाविष्टो बहुविधं वक्ति, कदापि विहसति, कदापि रोदिति, कदापि च केवलगम्भीरसमाधावतिष्ठते। समस्ताऽपि निशा तथैव व्यतियाति। कीदृशोऽसौ दिव्यावेशोऽभवत्। सर्वमिदमवलोक्य मम शरीरं कम्पते स्म। मयाऽचिन्त्यत् यत् कथमियं रात्रिर्गमिष्यति ? तदानीं भावसमाधिविषये न किमप्यहमवागच्छम्। कदा कदापि तदीय-समाधिभङ्गमदृष्ट्वा रुदत्या मया हृदयरामः समाहूयतः। समागत्य तेन तदीयकर्णयोर्नामोच्चारणे विहिते कथं कथमपि तस्य समाधि-र्व्यनश्यत्। ततश्च भयव्याकुला तेन दृष्टाऽहं स्वयमेव बोधिता यत् एतादृशभावदर्शने एतन्नामोच्चारणीयम्, ईदृग्भावदर्शने एष बीजमन्त्रः श्रावणीयः। ततश्च मम भयं व्यपगतम्। आवश्यकतायां समागतायां यथोपदिष्टोच्चारणे कृते तदीया चेतना पुनः प्रत्यागच्छत्। केचिद्दिवसा

एवं व्यतीताः। 'न जाने, कदा कस्य भावस्य तस्मिन् समावेशो भविष्यतीति' चिन्तया रात्रौ निद्रां नाधिगच्छामीति परिज्ञाय तेनान्यत्र गेहे नौबते शयनायाहमादिष्टा।"

इदमस्ति तदीयदिव्यगार्हस्थ्यजीवनस्य, चांचल्यविरहितप्रशांत-प्रेम्णश्चैकं दर्शनम्।

वैष्णवग्रंथेषु सहजाऽभंगुरदशावर्णनप्रसंगे लिखितमस्ति—"अस्यामवस्थायामाविर्भूतायां मुखे समागतस्य मण्डुकस्यापि सर्पो हानिं नानुतिष्ठति।" एतत् किल तेषां महापुरुषाणामवस्थावर्णनमस्ति, ये शास्त्रोक्तरीत्या साधनसंग्रामे साफल्यमध्यगच्छन्। श्रीरामकृष्णस्य जीवने तस्य साधनासु च दृष्टिपातेन वैष्णवग्रंथवर्णितेयमवस्था साधारणीव प्रतिभाति। पत्नीं प्रति तदीया दृष्टिः सर्वथाऽन्यविधै-वासीत्। प्रत्येकस्त्रियां तस्य मातृबुद्धिरभूत्। अतस्तेन स्त्रीमात्रं जगन्मातृस्वरूपं दृश्यते।…असाववोचत्—"आवां द्वावपि जगन्मातुः सङ्गिन्यौ। अन्यथाऽहं पत्न्या सह अष्टौ मासान् कथमतिष्ठम्?" युग-धर्मस्थापने द्वावुभावपीमौ परस्परं पूरकावास्ताम्। सहवासतस्तयोः पारस्परिकः परिचयोऽतीव प्रगाढोऽभवत्।

एकदिनस्यैषा वार्त्ता। श्रीठाकुरस्य पत्नी तस्यैव पार्श्वे सुप्ताऽभवत्। सा निश्चिन्ता शेते स्म। श्रीठाकुरः स्वगतमुक्तवान्—"मानस! एतदेव स्त्रीशरीरम्। लोका इदं हि परमभोग्यं वस्त्ववगत्यैतदेव भोक्तुं सदैव लालायिता भवन्ति। किन्तु एकवारमपि ग्रहणेन अत्रैव तैर्बद्धै-र्भूयते। तदानीं सच्चिदानन्दघनस्य परमेश्वरस्य प्राप्तिर्न भवति,—"सत्यं ब्रूहि, एतदेव ग्रहीतुमिच्छसि, भगवन्तं वा? यदि स्त्रीशरीरं जिघृक्षसि, तर्हि तदेतत्तव सम्मुखे तिष्ठति, गृहाण।" एतद् विचारयता तेन तदङ्गस्पर्शनार्थं हस्तौ प्रसारिताविति सत्यम्, परन्तु तदानीमेव तन्मनः समाधिस्थं भूत्वा सच्चिदानन्दसागरे न्यमज्जत्। तां संपूर्णां

रात्रिं यावदपि तस्य समाधिर्नात्रुटयत्। द्वितीये दिवसे महता काठिन्येन तन्मनः सांसारिके धरातले आनयाञ्चक्रे।

एवं विभिन्नावस्थायां तयोरात्मिकं मिलनमभवत्। इदमेव तदीयं दाम्पत्यजीवनम्। द्वावपि तावेकरूपौ। अन्योन्यमनयोः शान्तं समर्पणमभूत्। पारस्परिकसुखदुःखेषूभावपि सदैव चिन्तितावभूताम्। स्वजीवनस्य श्रेष्ठतमवस्तूनामन्योन्यप्रदानेनापि न तृप्तिरधिगम्यते स्म। बहिरभ्यन्तरमन्योन्यं पूर्णतया परिव्याप्तावास्ताम्। इदानीं द्वौ न स्तः। किन्तु परस्परमभिन्नतया एकरूपौ बभूवतुः।

तदानीमेव श्रीरामकृष्णदेवस्य मनसि पत्नीं पूर्णोपचारैः षोडशी-रूपेण त्रिपुरसुन्दरीरूपेण वा समर्चितुमीहा समुत्पन्ना। एतदीयाभिलाषेऽत्र कस्यापि दिव्यदर्शनस्य प्रेरणा, किं वा देव्याः शक्तेरिङ्गित-मित्यस्य न कोऽपि समुल्लेखो लभ्यते।···षोडशाक्षरमन्त्रेण जग-दम्बिका-पूजनमेव षोडशीपूजाऽभिधीयते।

१२७६ वंगाब्दीय (१८७२ ई०) ज्येष्ठमासस्य फलाहारिण्याः पूजाया दिवसे श्रीठाकुरः पूर्वोक्तं षोडशीपूजनमकरोत्। तस्यां रात्रौ तस्य निर्देशेन तद्गृह एव गुप्तरूपेण देवीपूजायाः पूर्णमायोजनं कृत-मास्ते। कालीमन्दिरविशेषपूजा यथापूर्वमभूदेव।

पूर्वत एव पूजाकाले स्वगृहे समागमनाय श्रीठाकुरेण श्रीसारदा-देवी विज्ञापिताऽभूत्। यथाकालमियं श्रीठाकुरस्य वेश्मनि समायाता। रात्रौ नववादनानन्तरं श्रीठाकुरः पूजायामुपविष्टः। श्रीठाकुरस्येङ्गि-तेन श्रीसारदादेवी देव्या माङ्गलिकचित्रैश्चित्रिते पीठासने विराज-मानाऽभूत्। पूजनमारब्धम्। श्रीठाकुरः श्रीसारदादेवीं साक्षाद्देवी-मवधार्य पूजामकरोत्। अस्मिन्नवसरे सा पूर्णतया समाधिस्था बभूव। अर्धचेतनावस्थायां मन्त्रमुच्चारयन् श्रीठाकुरोऽपि गम्भीरसमाधौ व्यलीयत। 'पूज्यापूजकौ समाधिस्थौ भूत्वा आत्मस्वरूपे मिलित्वा एकतां परस्परमभिन्नतामधिगतवन्तौ।'

निशाया द्वितीयः प्रहरो व्यतीतः। तदानीं श्रीठाकुरस्य मनः शनैः शनैरर्धचेतनावस्थायामागच्छत्। तेन देवीचरणयोरात्मा निवेदितः। जपमालया सहैव सम्पूर्णं साधनाफलं देवीचरणकमलयोः समर्प्य प्रणतो बभूव।

पूजनसमाप्तमभवत्। श्रीसारदादेव्याश्चेतनाऽपि समागता। सा जगज्जननीस्वरूपतः प्रतिष्ठिताऽऽसीत्। विश्वमातृत्वस्याकुण्ठः प्रकाशस्तस्या अन्तस्तले समुद्भूत्।

षोडशीपूजायाः समनन्तरं प्रायः एकवर्षं यावत् श्रीसारदादेवी श्रीपरमहंसदेवस्य सन्निधावुवास। सा च प्राणमनोभिः श्रीठाकुरस्य तन्मातुश्च परिचर्यायां तत्परा बभूव। सेवायामेव तया परमा तृप्तिरासाद्यते स्म। यतः सा माता आसीत्, मातुः कृते सेवैव परमप्रिया।

—:*०*:—

सामान्यतया 'प्रचार'-शब्देन यत् किमपि ज्ञायते, तादृशः प्रचारः श्रीरामकृष्णदेवेन नानुष्ठितः। तत्कार्यविषयो भावराज्यमेव। स्वीयाध्यात्म-शक्तिबलेन जीवमात्रस्य कल्याणं तेन विहितम्।

सोऽवादीत्—"एकैकशो मया सर्वे धर्मा अङ्गीकृताः। हैन्दवं, मुस्लिमम्, ऐसवीयं, वैष्णवं, वैदान्तिकं मतं च। सर्वेष्वपि मार्गेषु प्रचलता मयाऽन्ते इदमेवानुभूतं यत् ईश्वर एक एव। विभिन्नैर्मार्गैः सर्वे तमेवैकमीश्वरमुपढौकन्ते।" श्रीरामकृष्णस्य साधनं सिद्धयश्चैकं नवीन-मादर्शं प्रतिष्ठापयितुमासन्।

आद्यायाः शक्तेः प्रेरणया 'भावमुख'–दशायामवस्थाय जीवकल्याणाय प्रवर्त्तितुं श्रीठाकुरेणादेशो लब्धः। तदानीं सर्वतः प्रथमं विविधैर्धर्म-सम्प्रदायैः सह सम्मिलित एव श्रीठाकुरो दृश्यते। गीतायामपि तदेव लिखितम्–"यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्।" इति।

अत एवासौ विभिन्नानां विभूतिमतामूर्जितसाधकानामभ्यन्तरे शक्तिं सञ्चारयन् तदुदारभावजागर्त्तये स्वप्रयत्नमन्वतिष्ठत्। अनेन क्रमेण कियन्तः साधकाः श्रीरामकृष्णस्य दिव्यसंगेनाध्यात्मिकीं चेतनामधिगत-वन्त इति न वक्तुं शक्यते। स च भावधारया शनैः शनैः सर्वान् परिप्लावयामास। जगति यस्या विशिष्टाया भावधारायाः प्रवाहाय श्रीरामकृष्णदेवेन शरीरमङ्गीकृतम्, तस्या अप्रतिहताऽग्रगतिः समारब्धा बभूव।

तात्कालिकोल्लेखनीयघटनासु तत्सामयिकब्राह्मधर्माचार्यश्रीकेशवचन्द्रसेनेन सह ब्राह्मसमाजेन च साकं श्रीरामकृष्णदेवस्य मेलनं वर्त्तते। १२८१ वंगाब्दे ( १८७५ ई० ) बेलघरियानामकस्थानस्योद्याने श्रीकेशवचन्द्रेण सह प्रथमसाक्षात्कारगमनात्पूर्वं श्रीठाकुरो भावावस्थायां सदलं केशवचन्द्रमपश्यत्।

जगन्मातुरिङ्गितेनैव श्रीरामकृष्णदेवः श्रीकेशवचन्द्रं साक्षात्कर्त्तुमगच्छत्। तदा प्रभृत्येव श्रीठाकुरस्य गम्भीराध्यात्मिकानुभूतय उदारभावश्च केशवचन्द्रजीवनेषु स्निग्धप्रभावनिपातनमारभन्त। केशवचन्द्र एतस्य देवमानवस्य संगममधिगत्यैतावान् मुग्धोऽभवत्, यत्प्रथममेलनदिनादेवासौ यथाज्ञानं 'श्रीरामकृष्णजीवनं' मुक्तकण्ठम् उपासनाकाले, व्याख्यानसमये स्वीयसञ्चालितसमाचारपत्रमाध्यमेन, अन्यान्यमानवैः सह पत्रव्यवहारादिषु च प्रचारयामास। तदीयैतादृशप्रचारपरिणामेन अल्पकालादेव वङ्गे सम्पूर्णभारते च आङ्गलभाषाशिक्षितसमाजेषु, ततो नु क्रमाद् विदेशीयविद्वत्सु च श्रीरामकृष्णदेवजीवनवेदः प्रचारितोऽभूत्।

१८७५ ऐसवीयमार्चमासस्य पञ्चदश्यास्तिथेरयं वृत्तान्तः। घोटकशकटेन श्रीठाकुरो बेलघरियास्थानस्योद्यानभवने केशवचन्द्रेण सह साक्षात्करणायागच्छत्। दिनस्य द्वौ प्रहरौ व्यत्यगच्छताम्। अतिसाधारणस्तस्य वेशः। परिधानीयं केवलमेकं धौतवस्त्रम्। शरीरमनावृतम्। धारितधौतवस्त्रस्य पुरतो वर्त्तमानोऽर्धांशः स्वकीयस्कन्धे संस्थापित आसीत्। शरीरं तु शीर्णमभूदेव, वदनमपि शुष्कं रूक्षमिव प्रत्यभासत। श्रीकेशवचन्द्रस्तदानीं स्वसहचरैः साकमुद्यानस्थपुष्करिण्यां स्नानोपक्रमं कुर्वन्नासीत्। श्रीठाकुरमवलोक्य पूर्वं तु सर्वे साधारणं कमपि मानवं तमवागच्छन्। किन्तु, स्वल्पकालेनैव तेषां धारणा अपारविस्मयरूपेण परिणता। ···विभिन्नपरमात्मप्रसङ्गानन्तरम्—

"न जानाति कश्चित्पुमानत्र लोके, यदेषा महाकालिका किंस्वरूपा।
न तद्दर्शनं कुर्त्तु मीशानि यानि, प्रसिद्धानि सर्वाणि षड्दर्शनानि॥"
इति गायन् श्रीठाकुरः समाधिस्थोऽभवत्। तदीयां भावावस्थां विलोक्य पूर्वं तु सर्वे तदीयं कपटताप्रदर्शनमेव मेनिरे। परन्तु यदाऽर्धचेतनावस्थामधिगत्य श्रीठाकुरस्तन्मयो भूत्वा गम्भीरस्याध्यात्मिकतत्त्वस्यातिसरलां व्याख्यामकरोत्, तदानीं सर्वे एतादृशीं मुग्धदशां प्राप्ताः, यतः स्नानभोजनादीन्यपि विस्मृतवन्तः। तदीयाममृतमयीं वाणीमाकर्ण्य तां तन्मयतां प्राप्तानां तेषां यदा सायंकालिक उपासनासमयः समभवत् तदानीं तैर्बोधो लब्धः।

एतत्प्रथममिलनानन्तरं १८८४ ईसवीयहायनस्य जनवरीमासस्य पूर्वार्धं केशवचन्द्रस्य शरीरत्यागात् पूर्वयावत्, प्रायशो दशवर्षाणां लम्बायमाने काले कियद्वारान् सशिष्यवर्गः केशवचन्द्रो दक्षिणेश्वरे श्रीरामकृष्णदेवेन सह मिलितुमगच्छत्, कियद्वारान् वा तं बेलघरे कमलकुटीरे ब्रह्मसमाजे चानयदित्यस्येयत्ता नास्ति। संख्यादृष्टितो यथाऽनेकवारान् मेलनं तेषामभूत्, तथैव प्रभावान्तरङ्गतादृष्ट्याऽपि तेषां मिलनमतीव गम्भीरमभवत्।

श्रीरामकृष्णसमनुष्ठितोदारधर्मभावप्रभावो ब्राह्मसमाजाभ्यन्तरतः समस्तकलिकत्तायास्तन्निकटवर्त्तिस्थानानां विभिन्नधर्मावलम्बिनां जीवनेऽभिनवमेकं विपर्ययमुदपादयत्। सर्व एव श्रीरामकृष्णजीवने एकस्य नूतनप्रकाशस्य त्यागजनितदीप्तेश्च दर्शनमकार्षुः। भगवत्प्राप्तये कियतीनां पवित्रतात्यागोदारतान्तरिकतानामावश्यकत्वं विद्यत इति सर्वैरवगतम्।

श्रीरामकृष्णः कस्यापि नवीनधर्मस्य, किं वा नूतनसम्प्रदायस्य प्रवर्त्तनार्थं जगति नागच्छत्। सर्वेषामपि धर्माणां पुनरुज्जीवनं नवीनदिव्यशक्ति-सञ्चारणमेव तदागमनप्रयोजनम्। तदीयं समन्वयस्वरूपं

जीवनं सर्वधर्माणां समागमस्थानमभूत्। एतदेव कारणमस्ति यत् तच्चरणयोरुपविश्य प्रत्येकस्य सम्प्रदायस्य मानवः पूर्णां स्वच्छन्दतामनुभवति स्म। मानवोऽसौ कस्यापि धर्मस्य सम्प्रदायस्य वाऽनुयायी कथं न स्यात्, किन्तु तेन श्रीठाकुरस्याभ्यन्तरतः स्वस्वभावस्य परिपूर्णता प्राप्यते स्म।

कलिकत्तायास्तन्निकटवर्त्तिस्थानानां च विभिन्नसाधकैः सम्मिलितेन श्रीरामकृष्णदेवेन कथमिव संकीर्णताया अवरोधं त्रोटयित्वा सर्वेषां मनस्युदारभावजागर्त्तिः कृतेत्यस्यैकं सुन्दरं विवरणं श्रीकेशवचन्द्रद्वारा तत्कालपरिचालितः "न्यू-डिस्पेन्सेशन"-नाम्नि पत्रे समासाद्यते। तस्यानुवादोऽत्र दीयते-"नवविधानम्" ८ जनवरी, १८८२ ई०। "आशायाः प्रकाशः—कलिकत्ताया नागरिकजीवनस्य आध्यात्मिकभावधारायाः सम्बन्धे सम्प्रति यैरवधानं प्रदत्तं, तैरिदमवधार्य सविस्मयैर्भवितव्यं यत् दक्षिणेश्वरस्य भक्तिभाजन-श्रीपरमहंसदेवो हिन्दूषु नवविधानब्राह्मसमाजिषु चैकस्यापूर्वसंयोगस्य स्थापनां कुर्वन्नास्ते। एतर्हि सम्मानितहिन्दुगृहेषु बहूनां धर्मपरिषदामायोजनानि सम्पाद्यन्ते। द्वयोः सम्प्रदाययोः प्रतिनिधयः कथमेकमनसो भूत्वा तत्रत्यसभासु सम्मिलन्तीति तत्रोपस्थाय द्रष्टुं शक्यते। तत्राध्यात्मिकभावधारायाः प्रेमभक्तेश्चैक्यभावमवलोक्य सर्वैः सहैव विस्मितैर्विमुग्धैर्भूत्वा च स्थीयते। परमेश्वरस्य स्तुतिः प्रार्थना, परमहंसदेवद्वारा धर्मालोचना, उन्मादनापूर्णं मुग्धकारिकीर्तनं चेत्यादिकास्तत्रत्यसभानां साधारण्येन प्रधानकार्यक्रमास्तिष्ठन्ति।... तत्त्वज्ञाः पण्डिताः, शिक्षिता युवानः, स्वपक्षप्रतिपादका वैष्णवाः, योगिनश्च सदलबलास्तत्रत्यसभासु सम्मिलन्ति।... तेषु स्थानेषु गमनेनानायासमेव मनसि जीवितप्रेमभक्तिप्रकाशो जागरूकतामापद्यते। समस्ताः स्त्रियः पुरुषाश्चैकस्यां स्वर्गीयानन्दधारायामिव प्रवहन्ते। इदमेकमपूर्वं दृश्यम्।

"अत्याश्चर्यजनकोऽस्य प्रभावः। न ज्ञायते यत् विभिन्नधर्माणां परस्परविरोधिमतानि प्रेमभक्तेरस्यां तीव्रधारायां कुत्रान्तर्हितानि जायन्ते।

नैतद् वक्तुं शक्यते यत् धर्मस्यैतदेकत्वं प्रेम्णश्चेदमपूर्वं मेलनमन्ते कुत्र प्रापयिष्यति ? भगवतः क्रियाकलापो मानवबुद्धिमतिशेते ।"

*         *         *

एकस्मिन् दिवसे श्रीरामकृष्णदेवो भावाविष्टो मथुरमहोदयं प्रोक्तवान्–"जगन्मात। मां सर्वमप्यदर्शयदवाबोधयच्च । अन्तरङ्गभूता ये सन्ति, ते सर्वेऽत्रागमिष्यन्ति । तेऽत्रावस्थाय परमात्मविषयकज्ञानस्याधिगमं, श्रवणं, प्रत्यक्षं, प्रेमभक्तेः प्राप्तिं च करिष्यन्ति । ( स्वीयशरीरं दर्शयित्वा ) अस्मिन् शरीरे जगन्माता महान्ति क्रीड़नानि करिष्यति । संसारस्य महत्कल्याणं विधास्यति । अत एव शरीरमेतद् रक्षितं विद्यते ।" ···इयं बहुदिवसेभ्यः पूर्वस्य वार्ता । अस्याभ्यन्तरे मानवलीलासमाप्तिविधानसमयोऽपि तेन ज्ञायते स्म । (एतत्सम्बन्धेऽस्माभिरनन्तरं विचारयिष्यते ) । परन्तु स्वीयानन्तरङ्गीभूतान् सन्देशवाहकान् समागतान् असौ यदा नापश्यत् तदा किञ्चिदस्थिरत्वमभजत् ।

तात्कालिकदशाया वर्णनं तेन तदनन्तरं बालभक्तान् प्रति समनुष्ठितम्—"युष्मान् द्रष्टुं मनो मे व्यग्रमभवत् । हृदयं केनापि निष्पीड़ितमिव प्रत्यभिज्ञातम् । तदानीं यन्त्रणयाऽहं विकलोऽभूवम् । उच्चैः रोदितुमिच्छा समुदेति स्म । 'लोका दृष्ट्वा किं कथयिष्यन्ति' इति विचारतो रोदितुं नाशक्नवन् । महत्या कठिनतया स्वकीय आत्मा संरक्षितः । यदा दिनस्यानन्तरं रात्रिः समागच्छति, मातुर्मन्दिरे विष्णुमन्दिरे च सान्ध्यनीराजनवाद्यान्यवदन् तदानीमवगम्यते स्म यदेकं दिनं रात्रिश्च पुनर्व्यत्यगच्छत् । तदाऽपि युष्माननागतानवलोक्य हृदयमतीवावासीदत् । तदानीं काले सौधस्य पृष्ठमारुह्य 'यूयं कुत्र स्थ, आगच्छत'—एवमुच्चैश्चीत्कुर्वन् अहं करुणक्रन्दनमकरवम् । विक्षिप्तो भविष्यामीति प्रतीयते स्म । ततः कियद्दिनानन्तरं यदा यूयमेकैकशः समागन्तुं प्रवृत्तास्तदानीमीषत् शान्तिरधिगता । पूर्वमेव मया यूयं दृष्टाः—अतो यदा भवन्त एकैकशः स्वागमनं प्रारब्धवन्तस्तदानीमहं भवतः सर्वान् पर्यचिनवम् ।"

विचित्रं तस्य दर्शनम्, अद्भुतं च तस्य साफल्यम्। अयं दैवशक्ति-सम्पन्न ऐन्द्रजालिकः सौधपृष्ठस्याध्यात्मिके वायुमण्डले एकमेतादृशमाश्चर्यमयं स्पन्दनमसृजत्, यस्यैकस्वरे सम्बद्धा अनेके आत्मानः सहैव स्पन्दमाना बभूवुः। तेनाप्येकमव्यक्तमाकर्षणमनुभूतम्, परन्तु तेन नैतत् ज्ञातं यत् कः आह्वयति, कुतोऽयं ध्वनिरायाति ?

इमाः सर्वाः घटनाः १८७५-७६ ईसवीये वर्षे संघटिताः समभूवन्, अन्तरङ्गभूतानाहूयैवासौ न विरतोऽभवत्। ब्रह्मसमाजे अन्योऽन्यधर्मप्रतिष्ठानेषु च गत्वा जगन्मातुरिङ्गितेन श्रीठाकुरो दिव्यं भावं प्राकाशत्, येन निर्दिष्टभक्तास्तदीयामवस्थितिमवगन्तुं शक्नुयुः।

तदभ्यन्तरे दिव्यप्रेरणैका प्रकाशमापद्यत, धर्मचेतनाया जागर्त्तये एकोऽनिवारणीय आग्रहश्च। यत्र कुत्रापि भगवन्नामगुणगानमभवत्, तत्रैवासावयाचितोऽपि समागच्छत्। ईश्वरस्य नाम ध्यानं वा यः समनुतिष्ठति, अनायासेनैव तदभ्यर्णं समुपातिष्ठत्। एषु सर्वविधक्रियाकलापेषु सकलधर्मावलम्बिसाधकजीवने प्रौढ़तासम्पादनमेव तस्य लक्ष्यमासीत्।

दैवेच्छया युगावतारभावप्रचारानुरूपरिवेशस्यापि सृष्टिरभूत्। एकदा श्रीठाकुरः प्रावोचत्—"इदं सर्वं हरिसभाप्रभृति यत् युष्माभिः दृश्यते (स्वशरीरं दर्शयित्वा) एतदर्थमेव परिज्ञातव्यम्। किं पूर्वमिदमासीत् किञ्चित्? कथमिदं सर्वं संघटितम्? एतस्य शरीरस्यागमनान्तरमेतत् सर्वं सम्पन्नम्। जगदभ्यन्तरमेव धर्मस्यैकं स्रोतः प्रवहति।"...

श्रीठाकुरस्य दैवमाह्वानं न व्यर्थतां गतम्। १८७५ ईसवीयवर्षतस्तस्यान्तरङ्गभक्ता एकैकतो दक्षिणेश्वरे नैजमागमं प्रारब्धवन्तः*। तस्य च

* दक्षिणेश्वरे श्रीरामकृष्णदेवस्य पार्षदान्तरङ्गभक्तानामागमक्रमस्याब्दस्य च विषये कथामृतस्य प्रथमभागे लिखितमेवविधं वर्त्तते—विश्वनाथोपाध्यायः १८७५ ईसवीये समागतः। ततः किञ्चिदनन्तरं सिंथिग्रामस्य गोपालः (अद्वैतानन्दः), महेन्द्रकविराजः, कृष्णनगरस्य किशोरीमहोदयः, महिमा-

दिव्यसङ्गेन नवचेतनामनुभवन्तस्ते नैजमात्मानं धन्यममन्यन्त। श्रीठाकुरः प्रथमदिनत एव तान् चिरपरिचितान् मन्यमानः सर्वेषां प्राणेषु आध्यात्मिकं भक्तिभावं सञ्चारयन् तेषां कृते परमानन्दप्राप्तिद्वारमुद्घाटयत्। सर्वे विस्मिता विमुग्धाश्च बभूवुः। एतादृशः स्नेहः, याचनामन्तरेण चैतादृशी दया! इदमपार्थिवं प्रेम, एतदभयम्, अयमानन्दश्च! अकिञ्चनान् प्रति एवंविधाया अहेतुकानुकम्पाया विधायकः कोऽयम्? अवाचो विस्मयान्विताश्च ते इदमेव चिन्तयन्तो बभूवुः। परिचितापरिचितेभ्यः सर्वेभ्य एवासौ 'शर्करापर्वतान्वेषणवार्तामश्रावयत्।' आत्मीयं परिजनवर्गमसौ शनैः शनैः दक्षिणेश्वरस्य पञ्चवट्याः शीतलच्छायायामानयत्।

* * *

आधिकारिकपुरुषाः शास्त्रे जातिस्मरशब्देन प्रोक्ताः। अर्थात् ते

---

चरणश्च क्रमशः श्रीठाकुरदर्शनार्थं समागताः।... रामः मनोमोहनश्च १८७९ ईसवीयस्योत्तरार्धे समागत्य मिलितौ। ततः केदारसुरेन्द्रो समागतौ। ततश्च चूणी, लाटू (अद्भुतानन्दः), नृत्यगोपालः, तारकः (शिवानन्दः) चापि समागत्य मिलिताः। १८८१ ईसवीयस्योत्तरार्धे १८८२ ईसवीयस्य पूर्वार्धे नरेन्द्रः (विवेकानन्दः), राखालः (ब्रह्मानन्दः), भवनाथः, बाबूरामः (प्रेमानन्दः), बलरामः, निरञ्जनः (निरञ्जनानन्दः), अध्यापको (मास्टरः), योगीन्द्रः (योगानन्दः), च एते श्रीठाकुरस्य सम्पर्के समागताः। १८८३-८४ ईसवीये किशोरी, अधरः, नित्यानन्दः लघुगोपालः, बेलघरे-स्थानस्य तारकः, शरत् (सारदानन्दः), शशी (रामकृष्णानन्दः) च समाजग्मुः। १८८४ ईसवीयस्य मध्यभागे सान्यालः, गंगाधरः (अखण्डानन्दः), कालो (अभेदानन्दः), गिरिशः, सारदा (त्रिगुणातीतानन्दः), कालीपदः, उपेन्द्रः, द्विजः, हरिः (तुरीयानन्दः) च समागमन्। १८८५ ईसाब्दमध्यभागे सुबोधः (सुबोधानन्दः), लघुनरेन्द्रः, पलटू, पूर्णः, नारायणः, तेजचन्द्रः हरिपदश्च समाययुः। एवमेव हरमोहनस्य, नवाईचैतन्यस्य, हरिप्रसन्नस्य (विज्ञानानन्दस्य), चाप्यागमनमभूत्।

'लीलाप्रसङ्ग'-'पोथी'-'भक्तमालिका'-प्रभृतिग्रंथेषु समुल्लिखितभक्तानां दक्षिणेश्वरे आगमनसमये कथामृतप्रदत्तसमये च कथञ्चिद् व्यतिक्रमोऽपि प्राप्यते।

पूर्वजन्मघटनावलीं स्मरन्ति। श्रीकृष्णबुद्धप्रभृतीनामवतारिपुरुषाणां जीवनेष्वेतस्य पर्याप्तं प्रमाणं लभ्यते। श्रीरामकृष्णदेवोऽपीदं जानाति स्म यद् यो हि रामरूपेण कृष्णरूपेण अन्यान्यावताररूपेण च शरीरं धृत्वा समागतः स एव 'रामकृष्ण'रूपेण विराजते। यथा श्रीरामकृष्णदेव-जीवने वर्तमानभविष्यदतीताध्यात्मिकभावराशीनां सम्मेलनं परिदृश्यते, तथैव तदीयसन्देशवाहकेष्वपि पूर्वावतारैः साकं निवसतां पार्षदानां लक्षणानि दृष्टिगोचरीभवन्ति। तेषु कश्चिदखण्डस्वरूपः, कस्यचिज्जन्म रामस्य विष्णोर्वांऽशेनाभूत्, कश्चिद् व्रजस्य गोपबालः, कस्यचिज्जनुः कृष्ण-सखस्यार्जुनस्य, श्रीराधिकाया वा अंशेन अभवत्, कश्चिन्महात्मन ईसा-मसीहस्य दूतः, कश्चिद् बुद्धपार्षदः, कश्चिच्चैतन्यस्य प्रतिनिधिः, कोऽपि चाद्वैतज्ञानी सबभूव। ब्रह्मशक्तिः, अतीता विभिन्ना अवताराश्च वर्त्तमान-लीलासम्पादनाय यथाभावज्योतीरूपतः श्रीरामकृष्णदेहे प्रविष्टाः, तथैव सर्वेऽवताराः स्वीयान् पार्षदानपि मानवजातिहितसाधनार्थं "यावन्ति मतानि, तावन्तः पन्थानः" इति सत्यधर्मप्रचाराय प्रेषयामासुः।

एकदा श्रीठाकुरेण प्रोक्तम्—"योऽस्याभ्यन्तरे वर्त्तते, स पूर्वत एव ज्ञापयति यत् कीदृग्भावसम्पन्नो भक्तः समागच्छति, यदि गौराङ्गरूपं पुरतः समागतं दृश्यते तदा मया ज्ञायते यद् गौरभक्तः समायाति, यदि शाक्तः समापतति, तदानीं निश्चीयते यत् शक्तिरूपस्य कालीरूपस्यैव दर्शनं भवति।"...

श्रीठाकुरस्य समीपे योऽपि पार्षदः समाययौ, तदागमनतः पूर्वमेव तत्स्वरूपसम्बन्धे भावाविष्टः श्रीठाकुरः सर्वं जानाति स्म। इयं महती विचित्रवार्ता! प्रत्येकपार्षदस्वरूपादिविषये श्रीठाकुरेण यत् किमपि निर्दिष्टं, सर्वं तत् स्थानाभावतो न लिखितुं शक्यते। द्वित्राणां पार्षदानां सम्बन्धे किञ्चिल्लिखित्वैवास्माभिस्तृप्तैर्भवितव्यम्।

राखालस्यागमनात् पूर्वं श्रीठाकुरेण यत् किमपि दृष्टम्, तत्सम्बन्धे तेन प्रतिपादितम्—"राखालागमतः किञ्चद्दिनपूर्वमेव दृष्टं यत् जगन्-

माता शिशुमेकमानीय सहसा ममाङ्के स्थापयित्वा प्रोक्तवती—"अयं तव पुत्रः।" श्रुत्वा आतङ्केन रोमाञ्चितोऽहमपृच्छम्—"किमेतत्? मम बालकः कुतः समागतः?" ततस्तया हसन्त्या प्रत्युक्तम्—"एष साधारणतया सांसारिकभावेनोत्पन्नो बालको नास्ति, प्रत्युत त्यागी मानसपुत्रोऽस्ति।" तदा मया ईषदाश्वासनं लब्धम्। तद्दर्शनानन्तरमेव राखाल आगत्योपतस्थौ। मया ज्ञातम्—"यद्यमेवासौ बालकः" इति।

राखालस्यागमनात्पूर्वं श्रीठाकुरो भावनेत्राभ्यां व्यलोकयत्—"गंगाया वक्षसि अकस्मात् शतदलं कमलं विकासमापन्नम्। कमलस्य प्रत्येकस्मिन् दलेऽपूर्वा शोभा! वंशीवादकराखालराजश्रीकृष्णस्य हस्तौ गृहीत्वा तदनुरूप एको बालको नूपुरौ धारयित्वा शतदले नृत्यति।"··· पश्यन्नेव श्रीरामकृष्णदेवो भावाविष्ट आनन्दमग्नोऽभवत्। तदानीमेव राखालचन्द्रः समायातः। तेनाश्चर्यचकितेन विलोकितम्—अयमेवासौ जगदम्बाप्रदर्शितो मानसपुत्रोऽस्ति कमलदलेषु नृत्यशीलः श्रीकृष्णस्य सखा। राखालचन्द्र स्वरूपपरिज्ञानमपि तेनैवासौ प्राप्तवान्।

सोऽकथयत्—"राखालो व्रजस्य गोपबालकः।··· स्वरूपसम्बन्धे यदैवासौ ज्ञास्यति तदैव शरीरं त्यक्ष्यति।"

नरेन्द्रनाथस्य दक्षिणेश्वरागमनात् पूर्वमपि श्रीठाकुरस्यैकमलौकिकं दर्शनमभवत्।* तेन दृष्टम्—"ज्योतिर्मण्डलस्यैको महर्षिः युगधर्मे साहाय्यं

---

* श्रीरामकृष्णदेवेन कथितम्—"दृष्टमेकदा—मम मनः समाधिमार्गतो ज्योतिर्मयमार्गेणोपरि गच्छदासीत्। चन्द्रसूर्यतारामण्डितस्थूलजगदतिक्रामत् क्रमशः सूक्ष्मे भावजगति प्राविशत्।·· देवदेवीनां भावघनानेकमूर्त्तयो मार्गस्योभयतो विराजमाना अदृश्यन्त।··· मनः क्रमेणाखण्डराज्ये प्रविवेश, सप्त प्राचीना महर्षयस्तत्र समाधिस्थाः समुपविष्टा आसन्। ज्ञान-पुण्य-त्याग-प्रेमसु मनुष्याणामेव न हि, देवदेवीनामपि परे प्राप्ता आसन्। विस्मितेन मयाऽवलोकितम्—पुरतोऽवस्थिताखण्डलोकस्य भेदरहितसमरसज्योतिर्मण्डलस्यैकांशो घनीभूयैकदिव्य-

प्रदातुं देहं धृत्वा समागच्छति।" तेनोक्तम्-"नरेन्द्रं दृष्ट्वाऽहमवगतवान् यदयमेवासौ महर्षिः।" आश्चर्यजनकस्यावतारस्य, अभिनवपार्षदस्य, अचिन्त्यमेलनस्य, अपूर्वसफलतायाश्च विचित्रोऽयं समन्वयः।

---

शिशुरूपेण परिणतोऽभवत्। अयमद्भुतो देवशिशुः स्वासीमानन्दं प्रकाशयन् महर्षिमेकं प्रोवाच—"अहं गच्छामि, त्वयापि मया सार्धं गन्तव्यं भविष्यति" (लीलाप्रसङ्गे)।

—:❀:—

श्रीरामकृष्णदेवस्य जीवनकालीनान्तिमषड्वर्षाणि पूर्णानि पड्युगानीव सन्ति। यस्या महाशक्तेरिङ्गितेन अत्युग्रसाधनयाऽसौ भूमानन्दे प्रतिष्ठितोऽभवत्, तस्याः शक्तेः समीहयैवामृतसरो भवन् समस्तेभ्योऽपि तृषार्त्तेभ्यस्तस्यैव भूमानन्दस्य वितरणे संलग्नोऽभवत्। माधुर्यपर्वतं चूर्णयित्वा सर्वेभ्यो लघुभ्यो महद्भ्यश्च व्यतरत्। आनन्दस्य लुण्ठनमबोभूयत। येन यावल्लब्धं, तावल्लुण्ठितम्। किन्तु येऽसमर्था अक्षमा आगन्तुमसमर्थास्तेषां द्वारेषु समुपस्थायाऽनुकम्पामूर्त्तिः श्रीरामकृष्णोऽमृतरसं तं प्रापयत्।

यथा माता बालकं स्तन्यं पाययितुं व्याकुलीभवति, तथैव श्रीरामकृष्णोऽपि ब्रह्मकृपारूपजलेन सर्वानभिषेचयितुं व्याकुलत्वं प्रपेदे। विचारमन्तरेणैव प्रत्येकमपि प्राणिनमसौ अभिषिक्तमकरोत्। असाववोचत्–"यथा मलयसमीरप्रवाहतः सर्वाण्यपि काष्ठानि (घासवंशान् परित्यज्य) चन्दनानि भवन्ति, तथैव (इदानीमपि)।···"

एकदा श्रीठाकुरो भावाविष्टः प्रोवाच–"सम्प्रति मातरं वच्मि, 'अधिकं नैव शक्नोमि जल्पितुं, अपि च कथयामि मातः! 'यमेकवारं स्पृशामि, स चैतन्यवान् भवतु।···एतादृङ्महिमास्ति योगमायायाः, सा इन्द्रजालं कर्त्तुं शक्नोति।··· आद्या शक्तिर्योगमायाऽस्ति, तस्या अत्यद्भुताऽऽकर्षणशक्तिः। मया तस्यापूर्वाकर्षणशक्तेः प्रयोगो विहितः।"

विचित्रेणैकेनाज्ञाताकर्षणेनाकृष्टा राजमहाराजाः, दुःखितौदरिकाः, पण्डितमूर्खाः, भक्तज्ञानिनः, हिन्दूमोहम्मदाः, ब्राह्मखिस्ताः, साहित्यिकाः, कवयः, शिल्पिनः, विपणिकृतः, ब्राह्मणाः, श्वपाकाः, पतितापतिताः, वृद्ध-

वनितादयश्च सर्वे दक्षिणेश्वरमायान्ति, किं वस्तु तानाकर्षति ? किमर्थ-मेतेऽस्य दीनपूजकब्राह्मणस्य पार्श्वे धावन्तः समायान्ति ?

कश्चिदपि कथं न स्यात्, सर्वस्य कृते तस्य द्वारमुद्घाटितमासीत्, हस्तौ प्रसारितावभूताम्। श्रीरामकृष्णस्य वीरभक्तो गिरिशः स्वस्यान्तिम-जीवने वारमेकमुवाच—"पापस्वीकारार्थमेतावन्महत् स्थानं विद्यत इति यदि मया विदितमभविष्यत् तर्हि बहून्यन्यान्यपि पापानि अकरिष्यम्।..." असावद्भुत ऐन्द्रजालिकः प्रत्येकव्यक्तिजीवनेन सहेन्द्रजालक्रीडामेवा-करोत्। निरक्षरमषपालकस्य निरक्षरः पुत्रोऽपि तदीयस्पर्शमात्रेण महा-ज्ञानः सर्ववेदज्ञाता च समभूत्। ज्योतिर्मण्डलस्यैकम् ऋषिं निर्विकल्प-समाधितः समाकृष्य श्रीठाकुरो नरनारायणसपर्यायां, विश्वधर्मप्रचारे च न्ययोजयत्। तेन धर्महीनाय धर्मः प्रदत्तः, नास्तिक आस्तिकीकृतः, शुष्क-प्राणा अपि प्रेमधारया परिप्लाविताः।

भक्तानां साधनमार्गे प्रवर्त्तनात् प्राक् श्रीठाकुरस्तदन्तःकरणेष्वनु-प्रविश्य पश्यति स्म यत्ते कस्मिन् पथि गमनयोग्याः सन्ति। एतदनु-सृत्यैवासौ तदनुरूपसाधनमार्गेषु तान् पर्यचालयत्। कस्यापि भावा न कदापि तेन विनाशितः। कस्यापि धर्मस्य सम्प्रदायस्य वाऽनुयायिनः कथं न स्युस्सर्वानपि तदीयमार्गत एवानन्दधामाभिमुखं पर्यचालयत्। स चोवाच—"यथा काचनिर्मितकपाटयुक्तापिधान्या अभ्यन्तरे संस्थापितानि वस्तूनि सुस्पष्टं परिदृश्यन्ते, तथैवात्र समागतभक्ताभ्यन्तरमपि समा-लोक्यते मया।"

स्वीयकृपान्वितहस्तस्पर्शतः श्रीठाकुरो यत्नेन प्रत्येकहृदयस्य पापताप-ग्लानिमलिनताचिह्नान्यपि प्रोञ्छयाञ्चकार। स प्रेम्णा प्रोवाच—"यः सर्वदा आत्मानं पापिनं मन्यते स नूनमेव पापी भवति। आत्मनः पापस्वरूप-स्यावधारणस्य न हि, प्रत्युत परमेश्वरे दृढविश्वासस्यावश्यकत्वमास्ते। वयं निरन्तरं भगवन्नामानि गृह्णीमस्तर्हि पापमस्माकं कुत्रातिष्ठत् ?"

तदीया सत्यवाणी मन्त्रशक्तिरिव प्रभावं पर्यदर्शयत्, तस्य स्पर्शमात्रेणैव सर्वे आत्मानं सहजसुन्दरमन्वभवन् ।

श्रीठाकुरः करुणासागर आसीत् । तस्य मनसि सर्वान् प्रति समान एव दया-भावो बभूवः । समर्थासमर्थतायास्तस्य मनसि कोऽपि भावो नासीत् । सर्वेषामसौ त्राताऽभवत् अशरणशरणश्च । परन्तु तस्य समाजस्यासौ नासीत्, यस्य सर्वे जनाः "सर्वं माया, सर्वं मिथ्या" इति रुदन्ति । जीवस्य दुःखमवलोक्य स्वयमसौ रोदिति स्म । शोकातुरस्य तस्य वेदनया मनो नितरां पीड़ितमजायत ।

त्यागमार्गे गच्छन्तो ये भक्तबालकाः श्रीठाकुरस्य भाविनः सन्देश-वाहकाः समभवन्, तेषां शिक्षा, दीक्षा, साधनादीनि च भिन्नानि बभूवुः । तेषां जीवनमनाघ्रातकुसुमवत् पूतमासीत् । तेन प्रोक्तम् "काकोच्छिष्टं फलं नैव देवपूजोपयोगि, युष्माकं जीवनं स्वतन्त्रम् एत-देव देवपूजाकृते कृष्णार्पितजीवनम् ।" तानसावुपदिष्टवान्—"नारी-मात्रे मातृभावसंरक्षणमेव शुद्धो भावः । ... मातृभावो निर्जलैकादशी-वद् वर्त्तते, यत्र न कस्यचिदपि भोगगन्धस्य सम्भावना । ... संन्यासिनां कृते तु भावोऽयं निर्जला एकादशी एव ।"

श्रीरामकृष्णस्य त्यागिनः पार्षदाः साधारणजीववत् प्रारब्धवशीभूता नैव जन्मागृह्णन् । देवकार्यसम्पादनाय, जीवमात्रकल्याणाय च ते समागताः । तेषां दृष्टिमभ्यन्तरे दापयित्वा कदा कदाचिदसौ अवोचत् "इमे बालका जन्मत एव सिद्धाः । ईश्वरीयं ज्ञानमादाय जन्म लेभिरे । अवतारेण सह ये समागच्छन्ति, ते नित्यसिद्धाः सन्ति । केषाञ्चित् एतदेवान्तिमं जन्म । ... नित्यसिद्धानां श्रेणी पृथग् भवति । एकवारं किञ्चित्-साधनानुष्ठानेनैव नित्यसिद्धा भगवन्तं प्राप्नुवन्ति, पुनः साधनं विनापि ज्ञानमधिगच्छन्ति ।"

श्रीठाकुरस्य शिक्षापद्धतिः पूर्णतयाऽभिनवाऽऽसीत् । "मानवगुरुः

मन्त्रं ददाति कर्णेषु, जगद्गुरुस्तु मन्त्रं ददाति प्राणेषु।" सोऽपि भक्तप्राणेषु स्वीयामाध्यात्मिकीं शक्तिं सञ्चारयन् तेषां कुण्डलिनीशक्तिं जागृतामकर्षीत्। अधिकारानुसारमेवासौ भावाविष्टो भूत्वा भक्तानां वक्षसि, जिह्वायां शरीरस्य कुत्राप्यन्यस्थाने वा स्पर्शमकरोत्। एतेन शक्तिपूर्णेन स्पर्शेन तेषां मनांसि संहृततामन्तर्मुखतां च प्रपद्यन्ते स्म। सञ्चितः किन्तु सुप्त ईश्वरीयो भावो जागर्त्ति स्म। फलतस्तैः कस्यचिद्दिव्यस्य ज्योतिषः, देवदेवीनां ज्योतिर्मयस्वरूपाणां दर्शनमक्रियत। कैश्चिद् गम्भीरध्यानस्य, अपूर्वानन्दस्यानुभूतयोऽक्रियन्त। केचिदीश्वरप्राप्तये सम्भ्रान्तमनसो बभूवुः। पुनश्च कस्यचन जीवने दिव्यभावावेशस्य, समावेस्तन्मयतायाश्च सञ्चारोऽजायत।

राम-कृष्ण-बुद्ध-ईसा-चैतन्यादिदेवमानवानां जीवनचरित्रपर्यालोचनेन सुस्पष्टमिदं ज्ञायते यत् तैः इच्छया, स्पर्शेन च बहवोऽसमर्था अपि समर्थीकृताः। नेत्रहीनेभ्यो नेत्राणि प्रदत्तानि। अज्ञानिभ्य आत्मज्ञानं प्रदत्तम्। भक्तिरहितेभ्यो भगवद्भक्तिरर्पिता, पापिनः पापाद् विमोचिताः। वर्त्तमानयुगे श्रीरामकृष्णस्य जीवनचरित्रे आध्यात्मिकशक्तिसञ्चारस्य यः समुल्लेखो निभाल्यते, तस्य पुरतोऽतीतघटनावल्यो निस्सारा इव प्रतिभान्ति।

श्रीठाकुरस्य शक्तिसञ्चारफलस्वरूपतो भक्तेभ्योऽलौकिकदर्शनस्य, भावावेशस्य गम्भीरध्यानस्य, च लाभोऽभवत्। तस्य सन्निधाने योऽपि समागतः, स एव महत्यानन्दे निमग्नः सन् परावर्त्तत। भक्तानां भक्तिभावः समुद्वेलित इवाऽभवत्। बहुभिरेव भाव-हास्य-रोदन-नृत्य-गान-द्वारा "ऊर्जितभक्तिः" समधिगता।*

---

* स्वामिना विवेकानन्देन स्थाने चैकत्र श्रीरामकृष्णदेवसम्बन्धे लिखितम्... "तदीयं जीवनमेकासाधारणालोकवर्त्तिकाऽऽसीत्; यस्यास्तीव्ररश्मिसम्पातेन जना हिन्दुधर्मस्य निखिलमवयवं स्वरूपं च परिज्ञास्यन्ति। शास्त्रे यानि ज्ञानानि केवलं

इदं किल महाशक्तेरेवाकर्षणं यत् केवलं कलिकत्तायास्तदभ्यर्ण-स्थानेभ्य एव न हि, प्रत्युत बहोर्दूरादपि भक्ता अनुरागिणो मुक्तिकामाः सदला दक्षिणेश्वरमागत्य सम्मिलिता अभूवन्, । एकस्मिन् दिवसे श्रीठाकु-रेण भावावेशे प्रोक्तम्—"यो हृदयेन ध्यानं जपं चानुतिष्ठति, तेनात्र स्थाने ( श्रीरामकृष्णं भगवद्रूपेण स्वीकर्तुं ) समागन्तव्यमेव भविष्यति ।"

* * *

श्रीरामकृष्णदेवसन्निधाने धावन्तो ये भक्ताः समवेता अभूवन्, ते साधारण्येन द्विधा विभाजयितुं शक्यन्ते—मुक्तिकामा अन्तरङ्गस्वरूपाश्च । द्विविधेष्वेतेषु मुक्तिकामिनां संख्या समधिका अन्तरङ्गभक्ताश्च गणनीया एवासन् ।

मुक्तिकामिष्वपि बहुविधानां भावानां साधकाः । सर्वानपि साधक-भक्तानेतान् मुक्तिद्वारं प्रापयितुं श्रीठाकुरेणागणनीयानि कष्टानि सोढानि । शतशो जीवानां पापभारो गृहीतः । केषांचित्स्पर्शनेन वेदनया स चीत्क्रियते स्म । तदानीमसौ वक्ति—"सर्वाङ्गं ज्वलितमभूत् ।" एतावन्ति कष्टान्यनुभूयापि जीवानामुद्धारे स प्रवर्त्तमान एवाभवत् । जीवकल्या-णार्थमेवासौ शरीरं जग्राह, किन्तु कदा कदाचिदसौ अवासोदत् । तदानीं

---

मतवादरूपेण सन्ति, तानि तदीयमूर्तोदाहरणरूपाणि विद्यन्ते । ऋषयोऽवताराश्च यस्य तत्त्वस्य वास्तविकशिक्षां दातुमैच्छन्, तैः स्वजीवनं द्वारीकृत्यैव तत् प्रदर्शितम् । शास्त्राणि केवलं मतवादमात्राणि । तत्प्रत्यक्षानुभूतिस्वरूपोऽसावासीत् । महा-पुरुषेणैतेन स्वीयपञ्चाशद्वर्षव्यापिना जीवनेन तादृशः शिक्षाप्रदो दृष्टान्तरूपश्च नैज आत्मा सम्पादितः, यादृशः पञ्चसहस्रवर्षव्यापिना जीवनेन भविष्यद्वंशीयानां कृते जातीयाध्यात्मिकजीवनं यापयद्भिः कर्तुं शक्यते ।

विभिन्नानि मतानि एकैकावस्थाविशेषरूपाणि क्रममात्राणि च । तस्यैतेन मतवादेन वेदानां व्याख्या शास्त्राणां समन्वयश्च सम्पत्स्यते · " इत्यादि ।

तेन जगन्माता साभिमानं प्रोच्यते—"जलमिश्रितं दुग्धं प्रोद्वेलयितुं बहूनामिन्धनानां प्रदानं क्रियते। इदानीं तन्मया न कर्त्तुं शक्यते मातः! एकसेटकदुग्धे सेटकचतुष्टयं जलम्! इन्धनोत्थैर्धूम्रैर्नेत्रे ज्वलिते।"...

ये च श्रीठाकुरस्यान्तरङ्गपार्षदा युगधर्मप्रचारे तत्साहाय्यं कर्त्तुं समायाताः, न तेषां मुक्तिकामना। तत्सम्बन्धे श्रीठाकुरो भावावस्थाया-मेकदा प्राह—"अन्तरङ्गपार्षदेषु विशेषतया द्वौ विषयौ ज्ञातव्यौ स्तः, प्रथम-तस्तु अहं (आत्मानं दर्शयित्वा) कोऽस्मि? द्वितीयतस्ते के सन्ति? मया सह तेषां कश्च सम्बन्धः?" पुनः प्राह बालकेष्वेषु बहवो नित्यसिद्धाः, जन्मत एव तेषामीश्वरं प्रत्याकर्षणम्...तेषां स्थितिः कीदृशीति ज्ञायते? पूर्वं फलम्, ततश्च पुष्पम्। पूर्वं दर्शनम्, ततश्च भगवद्गुणमहिम्नः श्रवणं तदनन्तरं च मेलनम्। इमे सर्वे बालका भगवत्प्राप्तेरनन्तरं साधनां कुर्वन्ति।...अन्तरङ्गपार्षदानां मुक्तिर्नास्ति।"...

श्रीठाकुरस्याभ्यन्तरे ईश्वरीयशक्तेरेतावदाधिक्यं विकासश्च परिदृश्यते स्म यत् तं केन्द्रीकृत्य आनन्दस्य सर्वव्यापि प्लावनमिव प्रावहत्। दक्षिणेश्वरं तदीयं लघुगृहं परमात्मभावशक्तिकेन्द्रमिवाभूत्। तत एव रात्रिन्दिनं तेन समान एवाध्यात्मिक आलोकः प्रसार्यते स्म। यश्च वारमेकं समागच्छति स एव मुग्धो भवति।

कदाचित् श्रीठाकुरः करतालिकां कुर्वन् भगवन्नामान्यकीर्त्तयत्, कदापि भावाविष्टो जगदम्बया साकं वार्तालापमकरोत्, कर्हिचित् सुम-धुरकण्ठतो मातुः स्तुतिगानमन्वतिष्ठत्, पुनर्भक्तैः सार्धं प्रोन्मत्त इव श्रवणमंगलनामकीर्त्तने न्यमज्जत्, मृदङ्गमञ्जीरादिध्वनौ श्रुते कियन्मनो-हरमभवत्तदीयं भावमयं नृत्यम्। कदापि च हुङ्कारं कुर्वन् उन्मत्तवन्नरी-नृत्यमानो गम्भीरं समाधिमध्यगच्छत्। तत्र च निलीयते स्म। ततश्च सर्वं शान्तम्। तस्य मुखमण्डलत आनन्दस्य धारा इव च्युता बभूव।

भक्ताः स्तब्धीभवन्तस्तदीयसमाधिदृश्यं व्यलोकयन्। भक्तानामपि भावावेशः समाजायत। कश्चिद् विहसति, कोऽपि रोदिति, कोऽपि जडवत् स्तब्धीभवन् स्पन्दनहीनतां प्रपद्यते, कश्चिच्चानन्दपुलकितो नरीनृत्यते। भावाविष्टश्रीठाकुरेण स्पृष्टः कोऽपि तदीयस्पर्शपरिणामेन गम्भीरसमाधौ निमज्जति। आनन्दस्वरूपमलयानिलप्रवाहतः सर्वेषां प्राणा मनांसि च तृप्तिं भजन्ते।



श्रीरामकृष्णः कस्यापि देशविशेषस्य जातिविशेषस्य कृते नागच्छत्। स हि समागतो विश्वमानवानां समस्तधर्माणां च हितसाधनाय। "यावन्ति मतानि, तावन्तः पन्थानः" इत्येव विश्वधर्मस्य नूतनं रूपम्।

सर्वेऽपि धर्माः सत्याः। सर्वेष्वपि धर्मेषु जीवात्मनोऽतीन्द्रियसत्ता-प्राप्तये एकैकः सन्मार्गो वर्त्तते। "यावन्ति मतानि तावन्तो मार्गाः" इत्येतद्धर्मपताकायास्तले हिन्दवो, बौद्धाः, ईसामतानुयायिनो, मोहम्मदाश्च, तथैव च मानवजातेः, मानवसभ्यतायाश्च प्रगत्या सह भविष्यत्काले यावन्ति धर्ममतानि समुत्पत्स्यन्ते, तत्तद्धर्मावलम्बिनश्च सर्वे समीपत एव स्थास्यन्ति तेषां सर्वेषां च आदर्शो भविष्यति, "श्रीरामकृष्ण-देवस्य जीवनम्।"

श्रीरामकृष्णदेवोऽवदत् "रामः कृष्णः अन्ये च अत्रैव शरीरे (आत्मानं दर्शयित्वा) समागताः सन्ति।" या शक्तिः प्रतियुगं राम-कृष्णादि-रूपेण आविरभवत्, सैवेदानीं "रामकृष्ण"-स्वरूपेण अवातरत्।

देवा असुरबधाय प्रस्तुतां देवीं स्वीयैरायुधैः सज्जितामकार्षुरिति दुर्गा-सप्तशतीपुस्तके समुल्लिखितम्। श्रीरामकृष्णावतारेऽप्येतद् दृश्यते यत् ब्रह्मज्योतिरारभ्य शिव-काली-राम-कृष्ण-ईसा-मुहम्मद-चैतन्य-(महाप्रभु)-प्रभृतयः, अन्ये च बहवो दिव्यदेहधारिणस्तदभ्यन्तरे ज्योतिःस्वरूपतो लीनाः सन्ति।

सर्वेऽप्यवताराः कस्या अपि विशेषशक्तेः आधारस्वरूपा विभिन्न-भावानां प्रतीकाः सत्यस्य मूर्त्तविग्रहाश्च। श्रीरामकृष्णस्याभ्यन्तरे सर्वेषां

तेषां संगतेरयं परिणामो बभूव यदसौ सर्वभावानां मूर्तविग्रहरूपेण आध्यात्मिकशक्तेः केन्द्रस्वरूपेण च परिणतोऽभवत् । समस्तमपि विश्वमेकेनाभिनवेनाध्यात्मिकेनालोकेनोद्भासयितुमेव हि तेषां विभिन्नज्योतिर्मयस्वरूपाणां श्रीरामकृष्णाभ्यन्तरे सम्मेलनमभूत् । सच्चिदानन्दरूपस्य ब्रह्मणः, त्यागमूर्त्तेः शिवस्य, अभयवरदानरूपायाः कालिकायाः, सत्यमूर्त्तेः श्रीरामचन्द्रस्य, परमकल्याणस्वरूपस्य श्रीकृष्णस्य, क्षमाधृतिविग्रहस्य ख्रीस्तस्य विश्वभ्रातृत्वप्रतीकस्य मुहम्मदस्य, चाण्डालान्तप्रेमप्रदस्य श्रीचैतन्यस्य, एतेषां सर्वेषामेव भावज्योतिरेकोभूयैको महाशक्तिशाली परमालोकनिकेतनस्वरूपः श्रीरामकृष्णो विचकास । श्रीरामकृष्णस्य स्वरूपं महातेजःपूर्णस्य तस्य सन्धानात्मकज्योतिषः समानमासीत्, यतः समस्तेऽपि संसारे आध्यात्मिकालोकस्य किरणाः प्रसरन्ति । पूर्वोत्पन्नानां समेषामवताराणां भावराशिं पुनरुद्दीप्य नवीनामाकृतिं ग्राहयितुं प्रयोजनमभूत् । अत एव श्रीरामकृष्णजीवनस्याभिनवा साधनाऽपूर्वा सिद्धिश्चासीत् । श्रीरामकृष्णो न व्यक्तिविशेषः, प्रत्युतासीदसौ भावमयो विग्रहः ।

* * *

श्रीठाकुरश्चैकदा प्रोवाच "सामन्तीयशासनस्य मुद्रा सम्राजः शासने नैव प्रचलति ।" मुद्राया उपादानं यद्यपि समानमेव तस्या आकृतिर्मुद्रणं च परिवर्तत एव, तथैव श्रीठाकुरोऽपि सर्वधर्मस्वरूपः "यावन्ति मतानि, तावन्तो मार्गाः" इत्येतस्य नूतनं मुद्रणस्वरूपं दधार ।...तदीयैषा दिव्यवाणी "यो ह्यत्र (श्रीरामकृष्णभावग्रहणार्थम्) आगमिष्यति, स एव चैतन्यस्य लाभं करिष्यति ।"...

अन्यदप्यसौ प्रावोचत् "कालेऽत्र छद्मवेशेनैवागमनम्, यथा कश्चिद् भूस्वामी गुप्तरूपेण भूस्वामिताकार्यं द्रष्टुं गच्छति ।" अतोऽत्रावसरे पूर्णसात्त्विकभावस्यैवाविर्भावः । रूपस्य, विद्यायाः, सर्वविधैश्वर्यस्य, कस्याश्चनान्यस्या विभूतेर्वा तत्र प्रकाशो नास्ति । केवलं परा विद्या, परमा भक्तिः, परमं ज्ञानमेवात्र प्रकाशितत्वमगमन् । अपूर्व-

स्त्यागः, उत्कटं वैराग्यं, विशुद्धमीश्वरपरायणत्वं, विश्वप्लावि प्रेम, इत्येतान्येव श्रीरामकृष्णावतारस्य भावैश्वर्यरूपाणि बभूवुः। भाग्यवन्त एव छद्मवेशधारिणमेनं पर्यचिन्वन्। येषामिदमन्तिमं जन्म, त एवैनं सर्वभावमयं ग्रहीतुं शक्ष्यन्ति।*

---

* श्रीस्वामिविवेकानन्देन सर्वभावमयश्रीरामकृष्णदेवचरणेषु आत्मनिवेदनपूर्वकं निम्नलिखितं 'श्रीरामकृष्णस्तोत्रं' विरचितम्—

ॐ ह्रीं ऋतं त्वमचलो गुणजिद् गुणेड्यः
नक्तंदिवं सकरुणं तव पादपद्मम्।
मोहंकषं बहुकृतं न भजे यतोऽहं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥१॥

भक्तिर्भगश्च भजनं भवभेदकारि
गच्छन्त्यलं सुविपुलं गमनाय तत्त्वम्।
वक्त्रोद्धृतं तु हृदि मे न च भाति किञ्चित्
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥२॥

तेजस्तरन्ति तरसा त्वयि तृप्ततृष्णा
रागे कृते ऋतपथे त्वयि रामकृष्णे।
मर्त्यामृतं तव पदं मरणोर्मिनाशं
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥३॥

कृत्यं करोति कलुषं कुहकान्तकारि
ष्णान्तं शिवं सुविमलं तव नाम नाथ।
यस्मादहं त्वशरणो जगदेकगम्य
तस्मात्त्वमेव शरणं मम दीनबन्धो ॥४॥

श्रीठाकुरस्य शरीरं शनैः शनैः क्षीणतामगच्छत्, दुर्बलं चाभवत्। अहोरात्रं धर्मशान्तिमुक्तीनां वितरणमेव प्रचलति स्म, सुदूरादपि जनाः, सामूहिकाः समाययुः। सर्वेऽपि संसारदावानले दग्धाः समागताः। ते कानप्यपायान्कुर्वन्तस्तत्परिश्रमस्वरूपयन्त्रणामनुभवन्तश्च समायान्ति स्म। सर्वेऽपि मुक्तेरभिलाषिणः। स चाप्यकातरभावेन सर्वेभ्योऽपि मुक्तिं प्रायच्छत्।

श्रीरामकृष्णदेव एकदा भावदशायामुक्तवान्—"...अत्र नास्ति कश्चिदपरः। यूयं सर्वे आत्मीया एव, युष्मान् एव ब्रवीमि, अन्ते च बोधितवानस्मि, स हि पूर्णः, अहं तस्यैवांशः। स च प्रभुरहं च तस्य दासोऽस्मि, पुनर्विचारयामि, सोऽहमेव, अहमेवासौ।"

श्रीठाकुरोऽन्यस्मिन् दिवसे जगन्मातुः समीपे भावाविष्टः प्रार्थनामकरोत्—"जननि! अत्र ये जना आन्तरिकाकर्षणेनागमिष्यन्ति ते सिद्धा भवन्तु।" स हि जीवत्राणाय समागच्छत्, तदेव संकेतयन्नुवाच—"अवतारस्य, परमेश्वरस्य वा दर्शनमेकमेव वस्तु।"

स्वीयमानवदेहान्मुक्तेः कालमप्यसौ जानाति स्म। एकदाऽसौ मातरं श्रीसारदादेवीमगादीत् "यदा त्वं द्रक्ष्यसि यदहं (रात्रौ) कलिकत्तायामेव स्थितिं कुर्वाणोऽस्मि, यस्य कस्यापि हस्तात् भोजनं कर्त्तुं प्रवृत्तोऽस्मि, किं वा स्वभोजनतः प्रागेव तस्मात् स्वभोजनपदार्थात् कमपि भागं निष्कास्य कस्मैचिदन्यस्मै दातुं प्रवर्त्तमानोऽस्मि, तदा त्वयाऽवधेयं यत् ममेदं शरीरं नैव बहुदिनं स्थास्यति।"

श्रीठाकुरो भक्तान् प्राह—"यदा बहवोऽधिका जना मयीश्वरबुद्ध्या श्रद्धां भक्तिं च विधास्यन्ति, तदानीमेवेदं शरीरमन्तर्धानं प्राप्स्यति।" शरीरत्यागसमयसम्बन्धे तेनान्यदपि बहु संकेतितम्। इदानीं छद्मवेशेनागतिः। बहूनां मानवानामेतस्य बोधे जाते, सोऽहं प्रस्थास्ये।

* * *

१८८५ ईसवीयवर्षस्य 'एप्रिल'-मासस्यान्ते श्रीठाकुरस्य कन्सररोग-

सूत्रपातो जातः *। किन्तु तेन तस्य कापि चिन्ता न कृता, धर्मोपदेशः, शक्तिसञ्चारः, जीवोद्धारश्च दिनानुदिनं प्रावर्धत, सहैव स रोगोऽपि। कण्ठाभ्यन्तरे शनैः शनैः शोथः समाजायत, व्रणमपि संवृत्तम्, येन कथने महत् कष्टमन्वभूयत, तदापि तेन परमेश्वरचर्चाऽक्रियत एव।

धर्मपिपासूनामागमने जाते स्वकण्ठव्यथा दूरं स्थाप्यते स्म। तदुपरि निरन्तरं भावस्य समाधेश्च गतिपरम्परा प्राचलत्। ईश्वरचर्चायां प्रादुर्भूतायां तस्मिन्नुद्दीपनं जायते, येन सहसाऽसौ समाधिस्थो भवति स्म। सेवकानां निरोधस्य कोऽपि प्रभावस्तस्मिन्नापतत्।

पर्याप्तचिकित्सयापि रोगवृद्धिमवलोक्य भक्ताः शङ्किता बभूवुः। चिकित्सासेवासौविध्यं विचार्य द्राक्तराः श्रीठाकुराय कलिकत्तायां स्थातुं स्वसम्मतिं दत्तवन्तः। कलिकत्तानगरांशभूते श्यामपुकुरे लघुभवनमेकं भाटकेन गृहीतम्। एकसप्ताहं कलिकत्तायां बलरामबाबूगृहे स्थित्वा १८८५ ईसवीयस्य अक्टोबरमासस्यारम्भेऽसौ श्यामपुकुरे समागच्छत्। तदानीं द्राक्तर-महेन्द्रलालसरकारस्तस्य चिकित्सामकार्षीत्। ततः किञ्चिद्दिनानन्तरं तस्य सेवायै श्रीमाता सारदादेवी अपि दक्षिणेश्वरात् श्यामपुकुरस्थगृहं समाययौ।

परमहंसदेवोऽस्वस्थो भूत्वा कलिकत्तायां समागतोऽस्तीति परिज्ञाय अनेके मानवास्तद्दर्शनार्थं समाजग्मुः। श्यामपुकुरस्य लघुभवनमेतद् दर्शनार्थिनां समागमेन जनबहुलतीर्थरूपेण परिणनाम। अनेके मुक्तिकामनामादाय समागताः। यस्य विश्रामस्य महती आवश्यकताऽऽसीत्, तस्मै तस्य प्रदानमसम्भवं संवृत्तम्। तस्य मुखादीश्वरीयप्रसङ्गमाकर्ण्य

* कथामृतस्य द्वितीयभागे लिखितम् "१८८५ ईसवीय एप्रिलमासस्य चतुर्विंश्यां" तारिकायां बलरामस्योपवेशप्रकोष्ठे श्रीठाकुरो व्याजहार—···"को जानाति, मम कण्ठे ग्रन्थेरुद्भवम्। रात्रेरन्तिमे भागे महत् कष्टमनुभूयते, केनोपायेन शान्तिं गमिष्यति ?"···

सर्वे मुग्धा अबोभूयन्त। द्राक्तरः सरकारो वार्त्तालापतः श्रीठाकुरं दृढ-तया न्यवारयत्। परन्तु स स्वयमेव षट्सप्तहोरा यावत् तेन साकं धर्मचर्चामकार्षीत्। तथापि तेन तृप्तिर्नासाद्यते स्म। स अवोचत्, "केनाप्यन्येन सह वार्तां न करोतु, केवलं मयैव सह करोतु।"

ये जनाः श्रीठाकुरस्य पार्श्वे समागतास्तेषामुपर्य्येव न हि, सूक्ष्मदेहेन बहुदूरं प्रस्थाय बहूनामुपर्यसौ कृपामकरोत्। श्रीठाकुरो यदा श्याम-पुकुरे न्यवसत्, तत्कालीनेयं घटना—विजयकृष्णगोस्वामी ढाकातः समागत्य प्रोक्तवान्—यदेकदा ढाकास्थिते स्वभवने द्वारं पिधायाऽसौ समुपविष्टो भगवन्तं परमेश्वरमचिन्तयत्। तदानीं श्रीठाकुरः सशरीर-स्तत्रोपस्थाय तस्मै दर्शनं दत्तवान्। कदाचिदयं मस्तिष्कविकारः स्यादित्ये-तन्निर्णयार्थमसौ गोस्वामिमहोदयः स्वहस्ताभ्यां श्रीरामकृष्णस्याङ्गप्रत्यङ्गानि संस्पृशन् ददर्श। विजयमुखाद् वार्तामिमामाकर्ण्य श्रीठाकुरो मन्दं मन्दं जहास।...

नरेन्द्रनाथस्य नायकत्वे युवानो भक्ताः यथावसरं श्रीठाकुरस्य सेवायै श्यामपुकुरस्य गेहे न्यवात्सुः। गृहिणो भक्ता दिन एव समागत्य महता-ऽऽनन्देन च चिकित्सासपर्यादीनां व्ययवहनमकुर्वन्। अस्वस्थं श्रीठाकुरं भक्तजननीं ( सारदादेवीं ) च केन्द्रीकृत्य श्यामपुकुरे श्रीरामकृष्णभक्त-संघस्य सूचनाऽभवत्।

श्रीठाकुरस्य मानसं शनैः शनैरनन्तस्याभिमुखमधावत्। ईषदपी-श्वरीये प्रसङ्गे प्रचलितेऽसौ गम्भीरसमाधौ न्यमज्जत्। श्रीठाकुरस्य तस्य समाधेरवस्थाया एकदा द्राक्तरः सरकारस्तस्यैकः सहचरो द्राक्तरश्चोभौ मिलित्वा परीक्षणं साधुरीत्या कृतवन्तौ, सर्वं दृष्ट्वा श्रुत्वा चोभौ स्तब्धौ संवृत्तौ। द्राक्तरेण सरकारेण यन्त्रद्वारा श्रीरामकृष्णहृदयस्य स्पन्दनं सुपरीक्षितं, दृष्टं च यत् हृदयं सर्वथा स्पन्दनहीनं विद्यते। केनाप्यन्येन द्राक्तरेण श्रीठाकुरस्योन्मीलिते नयने निजाङ्गुलीं प्रवेशयताऽपि न काऽपि त्रुटिः कृता! सर्वं परीक्ष्य विलोक्य च तेन स्वीकृतं यत् बाह्यतो

मृतवत्प्रतीयमानस्य श्रीठाकुरस्यैतत्समाधिदशासम्बन्धे आधुनिकं भौतिकविज्ञानं न किञ्चिदपि वक्तुं शक्नोति ।

समाधेर्दशामेतां तर्कवादिनो मूर्छाम्, पाश्चात्त्यदर्शनानुयायिनश्च जडत्वमङ्गीकुर्युः, न तद्भिन्नं किञ्चिदन्यत्, किन्तु समाधिकाले श्रीठाकुरेण यत् किमपि दृश्यते समुपलभ्यते च तत्सर्वमेवाक्षरशः सत्यमभवत् । बहुभिरप्येतत् परीक्षितं सत्यघटनया सम्यक् मेलितं च । अयं समाधिरेव मानवं परमज्ञाने भूमानन्दे च प्रतिष्ठापयति ।

इतः श्रीठाकुरस्य रोगः प्रवर्धमानोऽभवत् । केनाप्यौषधेन किमपि सत्फलं नावलोक्य डाक्तरः सरकारः किञ्चिद् विचचाल । तस्य परामर्शेन जलवायुपरिवर्त्तनार्थं कलिकत्तातो बहिः कुत्राप्युन्मुक्तस्थाने श्रीठाकुरं नेतुं निश्चयो जातः । पुरत आसीत् पौषमासः । पौषमासे स्थानपरिवर्त्तनविषये श्रीठाकुरेणापत्तिः करिष्यत इत्यालोच्य भक्ताः शीघ्रतरं किञ्चिदुपयुक्तस्थानमन्वेष्टुं प्रावर्त्तन्त । काशीपुरे अशीतिमुद्रामासिकभाटकेन गोपालचन्द्र-घोषस्योद्यानभवनं स्वीकृतम् । आग्रहायणसंक्रान्तेरेकदिनपूर्वं ( १८८५ ईसवीयस्य दिसम्बरमासस्यैकादश्यां तारिकायाम् ) शुभदिने मध्याह्नोत्तरकालेऽसौ काशीपुरमाजगाम । अत्रैव श्रीरामकृष्णदेवेन मानवलीलाया अष्टौ मासा व्यतियापिताः ।

प्राकृतिक-शोभासम्भृत उन्मुक्तस्थानेऽत्र समागत्य श्रीरामकृष्णो बालकवदानन्दं प्रकाशयामास । कैश्चिद्दिवसैरेव श्रीरामकृष्णस्वास्थ्ये समुन्नतिं निभाल्य भक्तहृदयानि सानन्दं ननृतुः । श्रीठाकुरस्य भाविसंन्यासिनः शिष्यास्तदीयशय्यासमीपे समवेताः पूर्णरूपेणात्मानं तस्य सपर्यायां न्ययोजयन् । तेषां मनसीदानीं तीव्रं वैराग्यमासीत्, सर्वेऽपि शाश्वतशान्तिमधिगन्तुं व्याकुलीबभूवुः ।

* * *

दिसम्बरस्य त्रयोविंशी तिथिः । सहसैव श्रीठाकुरस्य भावे परिवर्त्तनमदृश्यत । कृपाया लुण्ठनमबोभूयत । भावस्थो भूत्वाऽसौ कालीपदस्य

वक्षः स्पृशन्नुवाच—“चैतन्यवान् भव ।” स्नेहेन च तस्य हनूदेशं (श्मश्रु-स्थानं) गृहीत्वा प्रीतिं प्रदर्शयामास । अनन्तरं भावाविष्टेन तेन प्रोक्तम्—“यः किलान्तरिकभावेनेश्वरमाह्वयति, सन्ध्यां पूजां वा विदधाति, तेनात्रागन्तव्यमेव ।”

प्रातर्द्वयोर्भक्तिमत्योः स्त्रियोरुपरि श्रीठाकुरस्य दया बभूव । समाधि-स्थः स चरणेन तौ भक्तिमत्यौ स्त्रियौ समस्पृशत् । तयोर्नेत्राभ्यामानन्दा-श्रूणि प्रावहन् । एकया रुदत्या प्रोक्तम्—“एतादृशो भवदीया दया !”… तस्य तु अयाचिता कृपाऽऽसीत् । सिंथि-स्थानस्थे गोपाले कृपाऽनुष्ठानाय तेनोक्तम्—“गच्छ, गोपालमाहूय समागच्छ ।”

* * *

श्रीरामकृष्णस्य मानसिकदशायां तीव्रतरं परिवर्त्तनमभवत् । तदीयं मनः साकारतो निराकाराभिमुखमधावत् । स विद्याया “अहम्भावम्” अपि परित्यक्तवान् । स ह्योवाच—“आम्, लोकशिक्षापि तिरोदधाति ।… अधिकं वक्तुं न शक्नोमि । सर्वं राममयं परिदृश्यते ।… कदा कदाचि-न्मनसि समुद्भवति—कं कथयामि ? पश्यामि—साकारतः सर्वमपि निराकाराभिमुखं प्रतिष्ठते । बहु व्याहर्त्तुं समीहा समुदेति, किन्तु वक्तुं न शक्यते । इदानीमपि पश्यामि—निराकारमखण्डं सच्चिदानन्दम्—एवं-विधमवस्थितमास्ते ।…” (कथामृते) ।

श्रीरामकृष्णदेवः स्वीयामस्वस्थतामाश्रित्य निजभक्तानामेकं संघ-मस्थापयत् । विभिन्नानां प्रतिकूलस्थितीनां सत्त्वेऽपि तदीयैरन्तरङ्गपार्षदैः आत्मनियोगो गुरुसेवार्थं विहितः । एकदा भावावस्थायामसौ प्रोक्तवान्—“अस्य रोगस्य दशायां परिज्ञातं यत् कोऽन्तरङ्गः, कश्च बहिरङ्ग इति । ये च गृहादिकं परित्यज्यात्र समागतास्तेऽन्तरङ्गभूताः सन्ति, ये च कदाचित् संवादमात्रं पृष्ट्वा गच्छन्ति, ते बहिरङ्गरूपाः सन्ति ।”

* * *

१८८६ ईसवीयजनवरीमासस्य प्रथमतारिकायां शरीरं किञ्चित् स्वस्थमदृश्यत। अतः श्रीठाकुरोऽद्य किञ्चिद्भ्रमणेच्छया नीचैरवातरत्। बह्वो गृहमेधिनो भक्ता अपि तेन साकं गन्तुं प्रवृत्ताः। उद्यानस्य तोरणाभिमुखं जग्मुः। पुरतो गिरिशमवलोक्य तस्य भावे परिवर्त्तनमभूत्। श्रीठाकुरस्य चरणयोर्निपत्य गिरिशेन तदीया स्तुतिः प्रारब्धा। सहसा श्रीठाकुरस्याङ्गप्रत्यङ्गानि रोमाञ्चितान्यभूवन्। अस्यां दण्डायमानदशायामेवासौ समाधिस्थोऽभवत्।

भक्ता उल्लसिता बभूवुः। कश्चिदानन्दध्वनिमकरोत्, कश्चित्तदीयचरणपरागं स्वमस्तकेऽस्थापयत्, कोऽपि कुसुमान्यानीय तस्य पादौ समर्चयति स्म। सर्वे प्रोन्मत्ता इवाभूवन्। एकमद्भुतं स्वर्गीयं दृश्यमेतत्! तदानीमेवार्धचेतनः श्रीठाकुरः प्रसन्नेन मनसा सर्वान् विलोकयन् प्रोवाच —"युष्मभ्यमहमिदानीं किं कथयामि, सर्वैर्भवद्भिश्चैतन्यमधिगम्यताम्।" इत्युक्त्वा तेन तत्तद्वक्षःस्थलस्पर्शपूर्वकं प्रत्येकोऽपि चैतन्यवानक्रियत। उपस्थितेषु भक्तेषु केवलं द्वावेव "न हीदानीम्" इत्युक्तवता तेन न स्पृष्टौ।*

श्रीठाकुरस्य शक्तिसंवलितः स्पर्शोऽयं भक्तानामाध्यात्मिके जीवने महत्तरमेकं परिवर्त्तनं कुर्वन् शनैः शनैस्तान् ईश्वरीय आनन्दे दृढतया प्रतिष्ठितान् विदधौ।

* * *

सम्भवतः १८८६ ईसवीयाब्दस्य फरवरीमासस्य घटनेयमास्ते—श्रीठाकुरस्यान्यतमान्तरङ्गपार्षदो गोपालः (स्वस्मात् कतिपय-वत्सरज्येष्ठत्वात् श्रीठाकुरो गोपालं 'वृद्धगोपाल'-नाम्नाऽकथयत्) तीर्थभ्रमणात्परा-

* अनन्तरमेकदा द्वावपीमौ भावावेशं स्पृशता श्रीठाकुरेण चैतन्यवन्तौ सम्पादितौ।

वृत्त आसीत् । साधुभ्यः काषायवस्त्रदानाय तस्य समीहा बभूव । तदानीं गङ्गासागरयात्रामुपलक्ष्य बहवः साधवः कलिकत्तायां समागता अभूवन् । तेभ्यः साधुभ्यो वस्त्रादिदानसमीहायां व्यक्तीकृतायां श्रीठाकुरः प्रोवाच —"अत्रत्या ये सर्वे त्यागिनो भक्ताः सन्ति—एभ्योऽभ्यर्हिताः साधवस्त्वया कुत्र लप्स्यन्ते ? अत्रैकैकोऽपि सहस्रसाधुगौरवान्वितो वर्त्तते । एभ्यः प्रदानेनैव तव कार्यं सम्पत्स्यते ।" श्रीठाकुरस्य निर्देशमनुसृत्य वृद्धगोपालो द्वादशगैरिकवस्त्राणि तावत्यो रुद्राक्षमालाश्चन्दनादीनि च तत्समीपमानिनाय । तानि गैरिकवस्त्राणि मालादीनि च स्वहस्तेनैव तेन नरेन्द्रादिभ्य एकादशभक्तेभ्यो दत्तानि,* अवशिष्टं गैरिकं वसनं ततोऽनन्तरं गिरीशचन्द्राय समर्पितमभूत् ।

आडम्बरविहीनमिदमनुष्ठानं जागतिके इतिहासे महत्त्वपूर्णैका घटना । यतस्तद्दिने किल "श्रीरामकृष्णत्यागिसंघस्य" स्थापना बभूव । एतदनुष्ठानाभ्यन्तरे त्यागिसंघीयामोघशक्तिबीजं निहितमासीत् । युगावतारः श्रीठाकुरः स्वहस्ताभ्यामेव संघस्याभिषेककार्यं सम्पादितवान्, युगधर्मप्रचाराय च तस्मै सहस्राधिकवर्षाणां स्थायित्वमसौ प्रादात् ।

शनैः शनैर्मार्चमासः समायातः, श्रीरामकृष्णशरीरं पूर्वापेक्षयाऽपि क्षीणतां प्रपेदे । कण्ठे ईदृशी व्यथा आसीत् यद् भोजनं तु दूरे तिष्ठतु, सामान्यजलीयपदार्थोऽपि गलाभ्यन्तरं नैव कर्त्तुं शक्यते । जगन्मात्रा तस्मै प्रदर्शितम्—"एभिरगणितमुखैस्त्वमेवाश्नासि ।"··· तस्य कष्टमवलोक्य पाषाणा अपि द्रवन्ति स्म ।

---

* नरेन्द्रः, राखालः, योगीन्द्रः, बाबूरामः, निरञ्जनः, तारकः, शरत्, शशी, वृद्धगोपालः, काली, लाटूश्चेति-नामकेभ्यो निजशिष्येभ्यः श्रीठाकुरो गैरिकवस्त्राणि प्रादात् । देहत्यागात्पूर्वमेकादशशिष्येभ्य एतेभ्योऽन्यभावेनापि श्रीठाकुरेण संन्यासदीक्षा प्रदत्ता । द्वारं द्वारमुपस्थाय माधुकरीं भिक्षां ग्रहीतुं ते प्रहिताश्चापि ।

१८८६ ईसवीयाब्दस्य मार्चमासस्य चतुर्दशी* तिथिः। गम्भीराया निशायाश्च काल आसीत्। महता कष्टेन शनैः शनैः श्रीठाकुरेण व्याहृतम्–"मदर्थं यूयं रोदिष्यथ, अत एवैतावत् कष्टं सहे। 'एवंविधं कष्ट'-मिति सर्वे वदेयुश्चेत्तर्हि शरीरमिदं परित्यक्ष्यामि।"...श्रुत्वैतद् भक्ता मौनिनोऽश्रूणि विमुञ्चन्ति।

निशया सहैव तस्य रोगो वृद्धिमगमत्। कलिकत्तायां द्राक्तरस्या-ह्वानाय संदेशहरः प्रहितः। शनैः शनैः किञ्चित्स्वास्थ्यमनुभवन् श्रीठाकुरो-ऽस्पष्टस्वरेणोक्तवान्—"अहमनेकानीश्वरीयरूपाणि पश्यामि! तेष्वेव (स्वशरीरं प्रदर्श्य) अस्य रूपस्यापि दर्शनं करोमि।"

आगामिनि दिवसे प्रातरेव श्रीठाकुरो भक्तैः सह संकेतेनास्पष्टस्वरेण वार्तालापं कुर्वन्नासीत्–"यदि शरीरमिदं कानिचिद् दिनानि समस्थास्यत तर्हि बहवो जनाश्चैतन्यलाभमकरिष्यन्त।"...किञ्चित् क्षणं मौनमास्थाय पुनरगादीदसौ—"किन्तु सा (जगन्माता) न रक्षिष्यति, नैव रक्षिष्यत्यसौ। सरलमूर्खोऽयं (स्वदेहं प्रदर्श्य) सम्भवतः सर्वं (मोक्षादिकं) यतः दद्यात्! एकतः कलियुगे ध्याने जपे चासक्ता न सन्ति।"...राखालः स्नेह-पूर्णस्वरेणोवाच—"भवान् जगन्मातुः समीपे प्रार्थयतु यद्देहोऽयं कानिचिद्दिनानि पुनस्तिष्ठेत्।" श्रीठाकुरः केवलमेतावदुवाच—"इदमी-श्वरेच्छाधीनम्।"

कञ्चित्कालं मौनमवलम्ब्य पुनर्गम्भीरस्वरेणोवाच—"अस्य (मम) अभ्यन्तरे द्वौ स्तः, एकः सः (ईश्वरः) द्वितीयश्च भक्तो भूत्वाऽस्ति। तस्यैव (भक्तरूपस्य) करो भग्नः, स एव रुग्णोऽप्यस्ति। अवगच्छसि नु?...कं कथयेयम्, कोऽवधारयिष्यति?...स च मानवावतारमाश्रित्य भक्तैः

---

* कथामृतस्य तृतीये भागे, १८१ पृष्ठे।

सार्धमायाति । भक्ता अपि पुनस्तेनैव सह गच्छन्ति ।"…तस्य देववाणी-माकर्ण्य सर्वे स्तम्भिता विस्मिताश्च बभूवुः ।

अनन्तरं श्रीरामकृष्णो मृदुस्वरेण नरेन्द्रमभ्यधात्—"त्यागस्यावश्य-कताऽस्ति ।" पुनरुवाच…"पश्यामि ( आत्मानं प्रदर्श्य ) अस्याभ्यन्तर-तस्सर्वमस्ति ।"

तदानीमेकस्मिन् दिने श्रीठाकुरेणालौकिकं दर्शनमनुष्ठितम् । तेन दृष्टम्— तदीयं सूक्ष्मं शरीरं स्थूलशरीरतो बहिर्निस्सृत्य भ्राम्यति । ततस्तेन प्रोक्तम्—"मया दृष्टं, सर्वत्रैव पृष्ठभागे व्रणमुद्भूतमस्ति । विचारितं, कथमेतदुद्भूतम् ? ततो मात्रा प्रदर्शितम्, यत् अनुचितान्यपि कार्याणि कृत्वा लोकाः समागत्य स्पृशन्ति स्म, तेषां दुर्दशामवलोक्य मनसि दया-भावः प्रादुरभूत्, तेषामेव दुष्कर्मस्वीकारफलप्रभावत इयमवस्था जाता । तत एव तु ( स्वीयं कण्ठं दर्शयित्वा ) इदमभवत् । अन्यथा शरीरेण तेन न किञ्चिदन्याय्यं कृतम् । पुनरेतावान् रोगभोगः कथम् ?" जीवानां पापभारग्रहणेनैव तस्य शरीरे भयावहोऽयं रोगः समुत्पन्नः । तस्य मुखा-देतद्दर्शनकथामाकर्ण्य बहुभिर्भक्तैर्मर्मान्तिकव्यथाऽनुभूता ।

* * *

एकतो वारं वारं भावसमाधिः गम्भीरास्तात्त्विक्यः कथा असह्यं कष्टम् । किन्तु सहैवैतैः रङ्ग-रसिकतायामपि नास्ति काचिन्न्यूनता "स-ईशोऽनिर्वचनीयः प्रेमस्वरूपः"—आनन्द एव तद्रूपम् । अतो हि श्रीठाकुरः सदानन्दमयोऽस्ति ।

काशीपुरस्योद्याने एकदा श्रीमाता ( श्रीसारदादेवी ) सार्धद्वयसेटक-दुग्धपूर्णं पात्रमादाय सोपानान्यारोहन्ती शिरसश्चङ्क्रमणेन पतिता । गुल्फस्यास्थि निजस्थानात् परिच्युतम् । शीघ्रमेव सा समुत्थापिता, समा-नीता च । दारुणयन्त्रणा अविद्यत । श्रीठाकुरः श्रुत्वा बालभक्तं बाबूरामं

प्रोवाच—"बाबूराम ! किमिदानीं भविष्यति ? पथ्यस्य क उपायः करिष्यते ? को मह्यं पथ्यं दास्यति ?" तदानीमसौ मण्डं भुंक्ते स्म । श्रीमातैव मण्डं निर्माय तं भोजयति स्म । श्रीमातुर्नासिकायामेकं बृहन्नासाभूषणमासीत् । अतो नासिकां दर्शयित्वा हस्तसंकेतेनासौ बाबूरामं प्रोवाच—"अये बाबूराम ! एनां पेटायां स्थापयित्वा शिरसि कृत्वा समानेतुं शक्ष्यसि ?" तस्य परिहाससंवलितां वार्तामाकर्ण्य बालभक्ता हसन्तो भुवि लोलुठ्यमाना बभूवुः ।

—:-*-:—

अन्तरङ्गान् त्यागिनः पार्षदान् आदाय श्रीरामकृष्णदेवेन काशीपुरोद्याने भावी 'धर्मसङ्घः' संस्थापितः। "काम-काञ्चन-त्याग" एव तस्य दीक्षायाः प्रथमो मन्त्रः। सर्वविधकामनानां, किं बहुना, मुक्तेः समीहाया अपि परित्यागः। श्रीठाकुरस्तेभ्यस्त्यागिपार्षदेभ्यो नानाभावैर्दीक्षामदात्। तान् विविधसाधनानकारयत्, सर्वाण्यपि तत्त्वान्यशिक्षयच्च।

तेनोक्तम्—"नरेन्द्रो लोकशिक्षां दास्यति।" केवलं नरेन्द्र एव कथम्? नरेन्द्रस्य नेतृत्वे प्रत्येकमपि शिष्यं जीवकल्याणसाधनाय आदर्शाचार्यरूपेणाऽसौ प्रस्तुतमकरोत्। भाविनामाचार्यशिष्याणां जीवनं सात्त्विकैश्वर्येण मण्डितमसावकार्षीत्। एकान्तस्थल एव शिक्षेयमदीयत—न च साधारणभक्तसभायाम्। श्रीठाकुरेण त्यागिभ्यः शिष्येभ्यो या गुह्यशिक्षा, ये च गोप्यसाधनोपदेशाः प्रदत्तास्तत्सर्वं 'कथामृते' प्रकाशितं न विद्यते। तस्य याः किलोपदेशवाण्यः कथामृते प्रकाशिताः सन्ति तास्तु सर्वसाधारणानां समस्तजगतां कृते विद्यन्ते। किन्तु त्यागिभ्यस्तेन येषां गुह्यसाधनानां तत्त्वज्ञानस्य च शिक्षा प्रदत्ता, तेषामभ्यन्तरे च यादृशः शक्तिसंचारः कृतस्तत्समष्टिः—"अलिखितो वेदः।" तत्सर्वं च केवलं पार्षदानां जीवनस्याध्ययनेनैव परिज्ञातुं शक्यते।

सर्वेऽपि पार्षदास्तृप्तेः पूर्णतायाश्च समुज्ज्वलप्रतीका बभूवुः। भावसमाधिदेवदेवीदर्शन-ज्योतिर्दर्शन-शान्तिप्रभृतिषु यस्य वस्तुनः कृते यः प्रार्थयते श्रीठाकुरेण तस्मै तदेव प्रादीयत। किन्तु केवलं नरेन्द्रस्तृप्तिं नासादितवान्। स च चिरशान्तिमये, परमानन्दमये निर्विकल्पे समाधौ मग्नो भूत्वा स्थातुमैच्छत्। तेनोक्तम्—"अहं शान्तिं समीहे, तदतिरिक्तं

परमेश्वरमपि नैव वाञ्छामि।" श्रीठाकुरेण ज्ञायते स्म यत् नरेन्द्रस्य मनः स्वरूपे लीनं भूत्वाऽनन्तधाम प्रस्थातुं व्याकुलीभवति। परन्तु तदेतदसौ नैव सम्पादयितुमियेष। नरेन्द्रं द्वारीकृत्यैव तेन युगधर्मः प्रचारयितव्य आसीत्।

एकदा स्थिरमना नरेन्द्रः श्रीठाकुरस्य गृहे समुपविष्ट आसीत्। "किमिच्छसि, कथयतु ?"—स्मितमुखेन श्रीठाकुरेण जिज्ञासितम्। साश्रुनयनेन नरेन्द्रेण प्रत्युक्तम्—"मम समीहा विद्यते, शुकदेववत् केवलं समाधौ निमज्जितुम्, केवलं देहरक्षायै किञ्चिन्नीचैरवतीर्य पुनः समाधौ विलीनो भवेयम्।" श्रुत्वेदं श्रीठाकुरो गम्भीरोऽभवत्। स हि धिक्कारस्वरेण प्रोवाच—"हन्त ! हन्त !! त्वमेव महान् आधारः, तवैव मुखादीदृशी वार्ता ! मया तु विचार्यते स्म, कदाचित्त्वं विशालवटवृक्ष इव भविष्यसि; सहस्रशो मानवास्तव छायायामागत्याश्रयं प्राप्स्यन्ति। एतन्नभूत्वा, तव केवलं स्वमुक्तेरेव चिन्ता समुत्पन्ना ?" श्रुत्वेदं मुखमवनमय्य नरेन्द्रोऽश्रुविसर्जनमकरोत् अचिन्तयच्च—'कियद् विशालमस्ति हृदयमेतदीयम्।'

इतः किञ्चिद्दिनानन्तरं नरेन्द्रः सन्ध्यासमये ध्यानस्थ उपविष्टोऽस्ति; शनैः शनैस्तदीयं मानसं निर्विकल्पसमाधौ निमग्नमभूत्। शरीरं स्थावरवत् स्थिरं—बाह्यतो मृतवत् संवृत्तम्। दादागोपालेन दशेयमवलोकिता, शङ्कितेन भूत्वा त्वरितं श्रीठाकुरपार्श्वमुपेत्य तेन प्रोक्तम्—"नरेन्द्रो मृतः संवृत्तः।" स तु सर्वमेवावागच्छत्। शान्तस्वरेणासौ प्रोवाच—"समीचीनमभूत्; तिष्ठतु कञ्चित्कालमस्यामेवावस्थायाम्, एतदर्थमेव मां बहूद्विग्नमकरोत्।"

पर्याप्तनिशायां व्यतीतायां नरेन्द्रस्य ज्ञानं शनैः शनैः परावर्त्तत। किन्तु तदानीमपि मनः शरीरे नासीत्। स हि चीत्चकार—"मम शरीरं कुत्रास्ति ?" पार्श्वे समुपविष्टा भक्तास्तस्य देहं थपथपायमानाः प्रोचुः—"इदमस्ति तावकीनं शरीरम्।" सहजामवस्थामासाद्य नरेन्द्रनाथः श्रीठाकुरस्य समीपमगच्छत्। समाधिशान्तौ तदीयं मनः स्नातमासीत्। तं दृष्ट्वैव

श्रीठाकुरः प्रोवाच—"किं रे ! साम्प्रतन्तु मात्रा तुभ्यं सर्वं प्रदर्शितम् । यत् किञ्चिद् दृष्टं, सर्वमधुना तिरोहितं स्थास्यति, कुञ्चिका ( कला ) मम हस्ते स्थास्यति । इदानीं त्वया मातुः कार्यं पूरयितव्यमास्ते । मातुः कार्ये पूर्णे सति दशेयं पुनः परावर्त्तिष्यते ।" नरेन्द्रनाथस्य मनस्तदानीमक्षय-शान्तिमयमास्ते स्म । स च मौनीभूय मुखमवनमयन् तस्थौ ।

* * *

क्रमशः श्रीरामकृष्णो महाप्रयाणाय समुद्यतोऽभवत् । स्वीयं युगधर्मं प्रचारयितुं तेन त्यागिनामन्तरङ्गाणां जीवनं तेनैव भावेन प्रस्तुतमक्रियत । तेन ज्ञायते स्म यत् नरेन्द्रनाथ एव तस्य योग्य उत्तराधिकारी वर्त्तते । एतस्मै विशिष्टकार्यायैव तस्यागमनमभूत् । एकस्मिन् दिने नरेन्द्रमाहूय तेन प्रोक्तम्—"एतान् सर्वान् बालकान् तव हस्ते समर्पयामि, त्वयैतेषां निरीक्षणसंरक्षणं कर्त्तव्यम् ।" ततश्च संघजीवनयापनसम्बन्धे तेन नरेन्द्राय अनेके सदुपदेशाः प्रदत्ताः ।

महाप्रयाणस्य केभ्यश्चिद्दिवसेभ्यः पूर्वत एव श्रीठाकुरः प्रतिदिनं सायं नरेन्द्रं स्वपार्श्वमाहूय द्वारं पिधाय च बहुकालं यावत् तस्मै गुह्यानुपदेशान् अदात् । लीलासंवरणात् अष्टभ्यो नवभ्यो वा दिनेभ्यः प्राग् असौ योगीन्द्रं पञ्चाङ्गमानेतुं संकेतितवान्, सौरश्रावणस्य २५ दिनेभ्योऽग्रे प्रत्येकदिनस्य तिथिनक्षत्रादिकं पठितुमुक्तवांश्च । योगीन्द्रः पठन्नभवत् । श्रीठाकुरो नेत्रे निमील्य सर्वं शृण्वन्नभूत् । यदा योगीन्द्रः श्रावणसंक्रान्तिपर्यन्तं पठित-वान्, तदानीं तेन संकेतद्वारा पञ्चाङ्गं पिधातुमाज्ञाऽर्पिता । तस्मिन् काले केनापि न ज्ञातं यत् श्रीठाकुरेण देहत्यागदिनं स्थिरीक्रियते ।

देहत्यागस्य त्रिभ्यश्चतुर्भ्यो वा दिनेभ्यः पूर्वं श्रीठाकुरेण स्वशय्यासमीपे नरेन्द्र आहूतः । निस्तब्धताकारणात् गृहं गुरुत्वपूर्णमिव प्रतीयते स्म । गृहे तदानीं कश्चिदपि नासीत् । पुरत उपवेशनाय नरेन्द्रं संकेतयन् श्रीठाकुरः

स्नेहपुरस्सरं निर्निमेषदृष्ट्या तदभिमुखं निरीक्षमाणः शनैः शनैर्गम्भीर-समाधौ लीनोऽभवत्। तस्मिन् समये नरेन्द्रनाथेनैतदनुभूतम्, यत् श्रीठाकुरस्य शरीरात् सूक्ष्मस्तेजोरश्मिरेको निर्गत्य तदभ्यन्तरे प्रविशतीति। शनैः शनैस्तस्यापि बाह्यचेतना व्यलुप्यत, स चापि समाधिस्थोऽभवत्। बहोः कालस्यानन्तरं सहजां दशां प्राप्य तेन दृष्टं यत् श्रीठाकुरो मौनी भूत्वाऽश्रूणि विमुञ्चति। कारणे पृष्टे श्रीठाकुरो व्याजहार—"अद्य तुभ्यं सर्वस्वमर्पयित्वाऽहमकिञ्चनोऽस्मि संवृत्तः। अस्याः शक्तेः प्रभावेण त्वया जागतिकानि बहूनि कल्याणानि विधास्यन्ते। कार्ये पूर्णे जाते पुनस्त्वं प्रत्यागमिष्यसि।"… ततः क्षणात् श्रीरामकृष्णशक्तिर्नरेन्द्रनाथे प्राविशत्। श्रीठाकुरो नरेन्द्रश्चैकस्वरूपतां प्राप्ताविवाभूताम्।

देहत्यागे केवलं दिनद्वयमवशिष्टमासीत्। श्रीठाकुरोऽसह्यरोगयन्त्रणया कातरतामगच्छत्। नरेन्द्रस्तस्य शय्यासमीपेऽधोमुख उपविष्टोऽभूत्। तदानीमेव सहसा तस्य मनसि भावोऽयमुत्पन्नो यद् यदि एतद्दारुण-शारीरिककष्टसमयेऽपि "अहमस्मि भगवान्" इति कथयेदयं तदाऽहं प्रत्येष्यामि। परमाश्चर्यम्! नरेन्द्रमनसि तादृशविचारोदयसमकालमेव श्रीठाकुरस्तदभिमुखमाननं परिवर्त्य स्वस्थकण्ठेनोक्तवान्—"यश्च रामः यो वा कृष्णस्तौ द्वावपीदानीं (स्वशरीरं प्रदर्श्य) शरीरेऽस्मिन् रामकृष्णरूपे विद्येते। तव वेदान्तदृष्ट्या न हि।" नरेन्द्रः सापराध इव मुखमधः कृत्वोपविष्टो बभूव। हृदयमुन्मथ्याश्रुधारा तदीयनेत्राभ्यां प्रावहत्।

१२९३ वङ्गाब्दीयसौरश्रावणस्यैकत्रिंशत्तमतिथिः, सूर्यवासरश्च।* इदमेव श्रीरामकृष्णनरलीलाया अन्तिमं दिनम्। ज्योत्स्नाप्लावितवातावरणं तद्वियोगकरुणध्वनिना व्यथितमिव बोभूयते स्म। भक्तानां

* पञ्चाङ्गमनुसृत्य तस्मिन् दिने १८८६ ईसवीयागस्तस्य १५ तारिकाऽऽसीत्। श्रीरामकृष्णदेवः ३१ श्रावणस्य रात्रौ १ वादनानन्तरं गंभीरसमाधौ मग्नोऽभवत्।

भाराक्रान्तप्राणेषु श्रीरामकृष्णोऽद्य नवीनरूपेण समागतः ।··· स हि दारुणया यातनया पेपीड्यमानोऽभवत् । नाडी क्षीणाऽसम्बद्धा च प्रचलति ।

इदानीं समयेऽपि भक्तैः साकं गम्भीरतत्त्वचर्चा प्राचलत् । कस्यचित् शिरसि हस्तं परिभ्रामयन् प्रेम प्रादर्शयत् ।··· सन्ध्यातः प्रागेव तस्य सातिशयं श्वासकष्टमजायत । भक्ता अश्रूणि व्यमुञ्चन् । सर्वेऽपि श्रीठाकुरस्य शय्यायाश्चतुर्दिक्षु शान्ताः संतस्थिरे ।

सन्ध्याया अनन्तरं तेन किञ्चिद् बुभुक्षाऽनुभूता । सेवकाः सामान्यपथ्यं भोजयितुमचेष्टन्त । किन्तु गलाभ्यन्तरे न किञ्चिदप्यवातरत् । ततश्चासौ गम्भीरे समाधौ निमग्नो बभूव । शरीरं स्पन्दनशून्यं सुस्थिरं च संवृत्तम् ।

मध्यरात्रौ तस्य सहजदशा पुनः प्रतिनिवृत्ता । तदानीं पुनरनेन किञ्चिद्भोक्तुमीहा प्रकाशिता । बहुशिरोधानसाहाय्येनासौ समुपवे-

---

केचित् पुरुषास्तमेव देहत्यागमवागच्छन् । पाश्चात्यज्योतिषगणनया समयेऽस्मिन्, अगस्तस्य १६ तारिका सोमवासरश्चासीत् । पूर्वप्रकाशिते कुत्रापि ग्रन्थे श्रीठाकुरस्य देहत्यागकालः १६ अगस्तो रविवारश्च लिखितो निभाल्यते । पाश्चात्यज्योतिषगणनानुसारेण मध्यरात्रौ द्वादशवादनानन्तरं परवर्तिदिनमारभ्यते । अगस्तमासस्य षोडशतारिकायाः स्वीकारे सोमवासरस्य स्वीकृतिरेव समीचीना प्रतीयते ।

श्रीठाकुरस्य देहत्यागप्रसङ्गे स्वामी रामकृष्णानन्द एकस्थाने प्रोक्तवान्—(भगिनीदेवमातृकृते Ramkrishna and His disciples—नामग्रन्थे १६१-६३ पृष्ठे)—"वयं द्वितीयदिने अर्थात् सोमवासरे एकद्विवादनं यावत् समाधितस्तस्योत्थानस्याशामकुर्म । तदानीं कालेऽपि श्रीठाकुरस्य शरीरे विशेषतश्च पृष्ठभाग ईषदुत्ताप आसीत् ।"··· "श्रीरामकृष्णपोथी"-पुस्तके ६२२ पृष्ठे समुपलभ्यते यत्—डाक्तरः सरकारः अगस्तस्य षोडशतारिकायां सोमवासरे दिने प्राय एकवादनकाले समागत्य श्रीरामकृष्णं समीचीनरीत्या परीक्ष्य च दुःखं प्रकाशयन्नवोचत्—"अनुमानतः अर्धघण्टापूर्वमयं स्वदेहं परित्यक्तवान् ।"

शितो जातः। तेन ईषत्पानीयसमा 'सूजी' विना क्लेशमशिता, प्रोक्तं च—"इदानीमहमतिशयस्वच्छन्दतामनुभवामि।" नरेन्द्रनाथेन किञ्चित् शयितुमसावनुरुद्धः। तदानीमेव काले सोऽत्यन्तस्वाभाविकेन स्वरेण वारत्रयं "काली"-नाम्नः समुच्चारणमकरोत्, द्वितीये क्षणे च शयितवान्।

निस्तब्धा निशा। कुतश्चिच्च झिल्लुरझङ्कृतिः श्रूयते स्म। रात्रौ एक-वादने, द्विमिनिटयोः ( कस्यचिन्मते षण्मिनटेषु ) सहसा तस्य सर्वाङ्गेषु वारं वारं सपुलकानि रोमाणि समुदञ्चन्। तस्य दृष्टिर्नासाग्रे प्रतिष्ठिता-ऽऽसीत्। सम्पूर्णे मुखमण्डले दिव्यानन्दमयी दीप्तिर्जागर्त्ति स्म। स च समा-धिस्थो जातः। समाधिरयं महासमाधौ परिणनाम, श्रीरामकृष्णदेवः स्वरूपे व्यलीयत। अंशी अंशश्च द्वौ मिलित्वैकतां गतौ।

श्रीमाता ठाकुराणी रुरोद—"मम मातः! कालि! मां विहाय क गतासि?"

—:❀:—

# श्रीसारदादेवीचरितम्

श्रीरामकृष्णो नरदेहमत्यजत्। परन्तु तदीयो भावराशिर्दिग्दिगन्तं, पूर्वपश्चिमं, उत्तरदक्षिणं, देशदेशान्तरं, दूरदूरान्तरं सर्वत्रैव पक्षौ विस्तारयन् प्रसरन्नास्ते। स हि भावराशिर्विश्वमानवस्य धमन्युपधमनीषु, नानाछन्दोभिः बहुभिः प्रकारैर्विचित्रां प्राणशक्तिं सञ्चारयन् अभिनवां चेतनामुद्बोधयन् प्रसरति।

श्रीरामकृष्णस्य लीलासङ्गिनी श्रीसारदादेवी या किल तेन निजार्धाङ्गिनीरूपेण गृहीता, सेदानीं नरदेह एव विद्यते। सहधर्मिणी-विषये श्रीठाकुरोऽवोचत्—"सा शारदा, सरस्वती····ज्ञानदानार्थ-मागता।"

श्रीठाकुरस्य देहपरित्यागानन्तरं श्रीसारदाऽपि देहत्यागस्य निश्चय-मकार्षीत्। किन्तु श्रीठाकुरेण नैतत्समर्थितम्। तेनोक्तं—"साम्प्रतं त्वं न गन्तुं शक्नोषि। अत्र बहूनि कार्याण्यवशिष्टानि सन्ति।" युगावतारो मानवदेहं परितत्याज। किन्तु तेन स्वीया शक्तिर्युगधर्म-प्रचाराय संरक्षिता। सारदादेवी नरदेहे स्थिता बभूव।

अत्रास्माभिः श्रीसारदादेव्या जीवनस्य संक्षेपतो दिग्दर्शनं कारयिष्यते। श्रीरामकृष्णभक्तसंघे सा "श्रीमाताठाकुराणी" इति नाम्ना एतेन रूपेण च परिचिताऽऽसीत्।

*　　　*　　　*

बाँकुड़ामण्डलान्तर्गते जयरामबाटीग्रामे, १२६० वंगाब्दस्य पौषस्याष्टमे दिवसे ( कृष्णपक्षस्य सप्तम्यां तिथौ ) ( १८५३ ईसवीये

हायने दिसम्बरमासस्य द्वाविंशतितमतारिकायां ) बृहस्पतिवासरे रामचन्द्रमुखोपाध्यायस्य श्यामासुन्दरीदेव्याश्च प्रथमसन्तानरूपेण श्रीसारदादेव्या जन्म गृहीतम् ।* जयरामबाटीग्रामस्तु लघुरासीत्, किन्तु तत्र ब्राह्मणानां गृहाण्यधिकान्यासन् । अस्य उत्तरस्यां पूर्वस्यां च दिशि सीमनिर्देशं कुर्वन् स्वल्पपरिसर आमोदरो नदो लतावदटाट्यमानः प्रवहति स्म, येन ग्रामोऽयं नितरामुर्वरः समृद्धश्चाभवत् ।

स्वजन्मसम्बन्धे श्रीसारदादेव्या सूचितमासीद्—"....मम जनुरपि एतस्य ( श्रीठाकुरस्य ) समानमेव जातम् । जननी शिवहरे ( शिहड़े ) देवदर्शनार्थमगच्छत् । परावर्त्तनसमये जयरामबाटीपश्चिमसीमपार्श्वे सहसैव शौचगमनेच्छाप्रादुर्भावात् देवालयनिकटस्थस्यैकवृक्षस्य तले सा गतवती । शौचं नाऽभवत् । किन्तु तयाऽनुभूतं यत् एकप्रकारको वायुस्तस्या उदरं प्रविवेश, येन स्वीयमुदरं तया गुरुभूतमिव प्रतीतम् । सा उपविष्टैवासीत् । तदानीं मम जनन्या विलोकितं यत् रक्तं कौशेयवस्त्रं धारयन्ती एका पञ्चषड्वर्षदेशीया सुन्दरी बालिका वृक्षशाखातः समवतीर्णा पार्श्वमागत्य स्वकीयौ कोमलौ करौ पृष्ठदेशतो जनन्याः कण्ठे समर्प्य प्रोवाच—"मातः ! अहं तव गृहं आगमिष्यामि ।"

तदानीं जननी संज्ञाहीनतां प्रपेदे । सर्वे गत्वा तामुत्थाप्य समानिन्युः । सैव बालिका जनन्या उदरे प्रविष्टा, तेनैव मम जन्माऽभूत् । गृहमागत्य जननी घटनामिमामवर्णयत् ।" एतस्याः घटनायाः केभ्यश्चिद्दिनेभ्यः पूर्वं श्रीसारदादेवीजनकश्रीरामचन्द्रमुखोपाध्यायेनैकस्मिन् दिने मध्याह्नकाले निद्रावस्थायां स्वप्ने दृष्टम् यत् काचित् हेमाङ्गिनी बालिका पृष्ठत आगत्य तस्य कण्ठाश्लेषं कृतवती । बालिकाया असाधारणसौन्दर्यं बहुमूल्यालंकारांश्चावलोक्य स तां

* रामचन्द्रमुखोपाध्यायस्य द्वे कन्ये पञ्च पुत्राश्च आसन् । सारदा, कादम्बिनी, प्रसन्नकुमारः, उमेशचन्द्रः, कालीकुमारः, वरदाप्रसन्नः, अभयचरणश्चेति ।

काचिद्देवीति अमन्यत। विस्मितः सन् रामचन्द्रस्तामपृच्छत्—'कासि त्व'मिति। सा तु निन्दितवीणास्वरेण स्वरेण प्रोवाच—'इयमहं तव गृहं आगतवती'। निद्राभंगे जाते रामचन्द्रः स्वप्नवृत्तान्तं स्मरन्नचिन्तयत् यत् स्वयं लक्ष्मीरेव तस्मै दर्शनं दत्तवती। परं सर्वं तेन रहसि एव स्थापितम्।

रामभक्तो रामचन्द्रमुखोपाध्यायः कलिकत्तातः समागत्य स्त्री-मुखात् सर्वमिदमाकर्ण्यावधारितवान् यत् स्वयं भगवती तस्य गृहं समागच्छति। दम्पती भक्तिपूतचेतसा संयतमनसा च देव्यागमन-प्रतीक्षामकुरुताम्।

[दरिद्रगृहे जन्मग्रहणात् सारदादेव्या बाल्यकालः महति दारिद्र्ये व्यतीतः। तस्याश्चरित्रस्य सेवाभावः प्रारम्भिकजीवन एव प्राकट्य-मगच्छत्। अतिशैशवावस्थायामेव सा गर्भधारिण्या निजमातुर्बहु-विधेषु कार्येषु विविधानि साहाय्यानि सम्पादयितुं प्रावर्तत। कनिष्ठ-सोदराणां निरीक्षणरक्षणादिकं तदीयमन्यतमं प्रधानकार्यमासीत्। तया कथितम्—"अहं सोदरानादाय गङ्गां स्नातुमव्रजम्। आमोदरो नद एव अस्माकं गङ्गा। गङ्गायां स्नात्वा भृष्टं तण्डुलं भुक्त्वाऽहं सर्वानादाय स्वगृहमागच्छम्। बहुवारं गङ्गास्नानस्य ममाभ्यास आसीत्।"

किञ्चिदधिकवयोऽवस्थामधिगत्य सारदादेव्या स्वजनकस्य कार्येष्वपि साहाय्यदानस्यारम्भः कृतः।] क्षेत्रेषु कर्मकरभृत्येभ्यो भर्जन-दानम्, आकण्ठजलेऽवतीर्य घासकर्त्तनम् इत्यादीनि बहूनि कार्यजातानि तयाऽनुष्ठितानि।* किन्तु रामचन्द्रः कन्यां देवीं मत्वा तां प्रति श्रद्धा-

---

* परवर्तिकाले सारदादेव्या सूचितं यत् घासकर्त्तनकाले तत्समाना काचिदपरा बालिका जलेऽवतीर्य घासमकर्त्तयत्। एतद्विषयवर्णनावसरे परेभ्य-स्तया प्रोक्तम्—''बाल्ये मयाऽवलोकितं यत् मत्सदृशी बालिकैका सदैव मया सह निवसन्ती मम प्रत्येककार्ये साहाय्यमाचचार, मया साकमामोदप्रमोदमप्य-

सम्मानभावनामकार्षीत्। सारदा तस्य प्राणेभ्योऽप्यधिकं प्रियतरा बभूव

एतयोर्दरिद्रब्राह्मणदम्पत्योर्महत्त्वसम्बन्धे सारदादेव्यैवैकवार प्रोक्तम्—"मम पितरौ सातिशयसाधुस्वभावौ स्तः। रामे पितुर्महती भक्तिरभवत्। भक्त्या सहैव तस्य परोपकारित्वे नैष्ठिकत्वे च न्यूनता नासीत्।···जननी चापि सुतरां कृपालुर्बभूव, सा अन्नपानदानेन लोकानामातिथ्यमकरोत्। तावतीव सरलप्रकृती आस्ताम्। अत एवाहमस्मिन् गृहे आविरभवम्।"

सारदादेव्या बाल्यकालीनघटनाविशेषस्य किमपि विवरणं नोपलभ्यते। ग्रामीणानामन्योन्यबालिकानामिव पित्रोः स्नेहपरिपूर्णे क्रोडे तस्या अपि लालनं पालनं चाभवत्। पितरौ तां सस्नेहं 'सारु'-नाम्ना समाह्वयतः स्म। बाल्यकाले सारदादेव्या कश्चिदपि लेखनपठनसुयोगो नासादितः। किन्तु परस्तात् स्वचेष्टयाऽसौ किञ्चित् लेखनपठनादिकमशिक्षत। बाल्यकालादेवासौ शान्ता अकुटिला च बभूव। सरलता मूर्त्तरूपेव समागमत्। क्रीडासहचरीभिः सह न तस्याः कोऽपि कलहो जातः। परन्तु कदाचित् अन्यबालिकासु परस्परकलहे जाते झटिति सा तासु सौमनस्यमकरोत्। देवदेवीनां प्रतिमा निर्माय पुष्पबिल्वपत्रादिभिः तत्समर्चनं तस्यै अतीवारोचत।

षष्ठे वर्षे पदार्पणं कुर्वत्या एव तस्याः पाणिग्रहः श्रीरामकृष्णेन सह समभूत्। अस्य विवाहस्याप्येक इतिहासो वर्त्तते, यस्य मर्मापि बहुगौरवपूर्णमास्ते। श्रूयते यत् हृदयस्य ग्रामे शिवहरे (शिहड़े) गीतपुराणप्रवचनादीनामयोजनमबोभूयत। एतदुपलक्ष्य श्रीरामकृष्णदेवोऽपि

---

करोत्। कस्मिंश्चिदन्यस्मिन् समागते न मयाऽसौ विलोक्यते स्म। दशैकादशवर्षावस्थां यावदियं दशा बभूव।" भगवतीसंगिनीगणो बाल्यकालादेव श्रीसारदादेव्या सह विचरन्नासीत्।

शिवहरे समाययौ। पार्श्ववर्त्तिभ्यो ग्रामेभ्यो बहवः स्त्रीपुरुषा गानं श्रोतुं शिवहरे समाजग्मुः। श्यामासुन्दरी चाऽपि सहैव सारदां नीत्वा समायाता। शिवहरे एव तस्या मातृनिलयः। गीतादेरनन्तरं सभायां विसर्जितायामेका प्रतिवेशिनी सारदां क्रोडे कृत्वा परिहासस्वरेण तामपृच्छत्—"एषु केन सह विवाहं करिष्यसि ?" तदानीं बालिकया सारदया उच्चैर्विहस्य द्वाभ्यामेव कराभ्यां समीपोपविष्टश्रीठाकुराभिमुखमिङ्गितं कृतम्। एतावत्या बालिकाया भाविनः पत्युर्निर्देशः, तथैव च श्रीरामकृष्णद्वाराऽपि भावावस्थायां भाविन्याः पत्न्याः सम्बन्धे पूर्वतो निर्धारणम्, इति घटनाद्वयमन्योन्यपरिपोषकमतीव विस्मयजनकं च।

सारदादेव्याः पितृगृहजीवनं जागतिकदृष्ट्या नितान्तकष्टपूर्णमासीत्। बालिकया सत्याऽपि तया बहूनि कार्याण्यक्रियन्त। एतावत्स्वल्पावस्थायामपि चुल्लिकास्थानपरिष्कारादिकमपि सम्पादयन्ती सा ओदनहण्डिकामप्यवतारयितुं चुल्लितो नाशक्नोत्। ततस्तत्पिता तां हण्डिकां चुल्लितः अवातारयत्। परन्तु तयैतादृशसर्वकार्यसम्पादने प्रमोदोऽन्वभूयत।

जयरामबाटीग्रामे, तत्पार्श्ववर्त्तिषु स्थानेषु चैकदा महादुर्भिक्षमापतत्। तदानीं काले धर्मप्राणरामचन्द्रस्य परमोदारहृदयपरिचयो जायते। कदाचिदनन्तरं श्रीसारदादेव्या भक्तेभ्य एकवारं चर्चा कृता—"कर्हिचित् (१२७१ वङ्गाब्दे) प्रदेशे तत्र भयङ्करं दुर्भिक्षमभूत्। अनेके मानवा भोजनाभावान्मम गृहं समागच्छन्। अस्माभिः पूर्ववर्षोत्पन्नधान्यराशिः कुसूलेषु सुरक्षितः समक्रियत। पितृदेवस्तमेव धान्यराशिं तण्डुलरूपेण परिणमय्य, तत्र च माषद्विदलानि प्रक्षिप्य हण्डिकासु कृसरान्नं पाचयित्वाऽरक्षीत्। अवोचच्च "स्वगृहवासिनः सर्वे एतदेव भोक्ष्यन्ति, ये चात्र समागमिष्यन्ति तेऽप्येतदेव भोजयितव्याः। मम सारदायाः कृते समीचीनतण्डुलानां भक्तं निर्मातव्यम्। सा तदेव खादिष्यति।" किन्तु कदाचित् एतावन्तो मानवाः समाययुर्यत् कृसरान्नं न पर्याप्तमभवत्।

ततः पुनर्निर्माणाय चुल्लिकोपर्यस्थाप्यत। तदेवोष्णं कृसरं परिवेष्य तच्च शीतलीकर्त्तुं व्यजनेन मया वातश्चक्रे। हंहो! यतो बुभुक्षाज्वाला-पीडिता जना भोक्तुमुपविष्टा अभूवन्। एकस्मिन्दिवसेऽस्पृश्य-'डोम'-जातीया काचित् स्त्री आगता—तस्याः शिरोरुहास्तैलाभावेन जटी-भूता, बुभुक्षया च नेत्रे उन्मादपूर्णे इवास्ताम्। सा द्रुतमागच्छन्ती धेन्वाः कृते स्थापितायां मृत्तिकाकुण्डिकायां जलार्द्रतण्डुलकुट्टनोद्भूत-चूर्णं यदासीत्तदेव भोक्तुमारभत। तदालोक्य सर्वेऽपि तामूचुः 'अभ्यन्तरे गत्वा कृसरान्नं भक्षय' इति। परं बुभुक्षापीडिता सा तद्वचने-ऽदत्तावधाना तदेव चूर्णं भक्षयन्ती तस्थौ। एतादृशं भयावहं दुर्भिक्ष-मभवत् तस्मिन् वर्षे।"

सारदादेव्या बाल्यमिषेण परिणममानकरुणापरदुःखकातरतादीनि यानि मुकुलितान्यासन्, तान्येवानन्तरं तदीयमातृत्वाभ्यन्तरतः पूर्ण-विकसितानि बभूवुः, येषां दिव्यैः सौरभैः सहस्रशः प्राणाः शान्तिमुपे-यिवांसः। सन्निहिते भविष्यति काले च संख्यातीतप्राणैः प्रेरणा प्राप्स्यते।

* * *

१२७४ वङ्गाब्दे (१८६७ ईसवीये) श्रीठाकुरः विवाहात् प्रायः सप्तहायनानन्तरं कामापुकुरमाजगाम। जयरामबाटीतः सारदाऽपि कामारपुकुरे समानीता।* तदानीं कालेऽस्या अवस्था चतुर्दशवर्ष-

---

* इतः पूर्वम् १२७३ वर्षे श्रीसारदादेवी वारद्वयं कामारपुकुरे समायाता। तदानीमसौ नूतना वधूः, तत्कृते नवीनं वातावरणम्। स्थानमपि नवीनम्। हालदारतडागे एकाकिन्या स्नानार्थं गमने तया भीतिरनुभूयते स्म। परन्तु नासीत् किञ्चिदुपायान्तरम्। बिभ्यती गृहान्निःसृत्य पश्यति स्म यत् तदवस्थासमकालीना अष्टौ बालिका मार्गे स्थिता अभूवन्। ता अपि स्नातुमगच्छन्। सर्वाः सहैव वार्तालापं विदधत्यः प्राचलन्। चतस्रो बालिकाः पृष्ठे, चतस्रश्च तस्याः

देशीयाऽभूत्। तदा च प्रायः षण्मासान् श्रीठाकुरस्य समीपं स्थित्वा तया बहूनां लौकिकानामाध्यात्मिकानां च विषयाणां शिक्षाऽधिगता।

एतेषु मासेषु श्रीरामकृष्णस्य दिव्यसंगति-फलस्वरूपं श्रीसारदा देवी अतीव शान्तस्वभावा, विचारशीला, निःस्वार्थप्रेमपरा चाभूत्। तथैव मनसि सदाऽऽनन्दपूर्णा भूत्वा दुःखपीडितमानवमात्रेऽनन्ते सम-वेदनापरिपूर्णहृदया, क्रमशश्च करुणायाः साक्षात्प्रतिमाऽजायत।

बहुरात्रिपर्यन्तं भावाविष्टः श्रीठाकुरो ग्रामीणस्त्रीपुरुषाणां समीप-मुपविष्ट ईश्वरचर्चामकरोत्। तामाकर्ण्य सारदादेवी विगतबोधा शयिता बभूव, दृष्ट्वैतदन्याः स्त्रियस्तां बोधयन्त्य ऊचुः—"एतादृशाः समीचीनाः कथाः न श्रुतवती, शयिताऽसि ?" श्रीठाकुरस्तस्याः परिबोधनं निवार-यन्नुवाच—"न हि, एतां न बोधयत, किमियं स्वेच्छया सुप्ता ? एतासां सर्वासां कथानां श्रवणेन नेयमत्र स्थास्यति, द्रुतमेव पलायिष्यते।" स्वस्वरूपवर्णनमाकर्ण्य श्रीसारदादेवी सहसा स्वरूपे व्यलीयत।

श्रीरामकृष्णो दक्षिणेश्वरं समागमत्। सारदादेवी चापि जयरामबाटी-मगच्छत्। तदनन्तरीयचतुर्वर्षाणि दीर्घविस्मृतेरवगुण्ठने व्यलुप्यन्त। पत्या तदीयो न कोऽपि संवादो गृहीतः। न च स समागच्छति, न चापि तामाह्वयति। तत् किमसौ मां विस्मृतवान् ? तस्य चरणयोः छायायामेव ममैकमात्रविश्रान्तिरिति क्रन्दनध्वनिः श्रीसारदादेव्या विरहक्लान्तप्राणेषु बोभूयते स्म। ग्रामे च श्रीरामकृष्णसम्बन्धे क्रमशो बह्व्यः किंवदन्त्योऽश्रूयन्त। स हि पूर्णतो नग्नो भूत्वा लम्बायमानं

---

पुरतोऽभूवन्। स्नानोत्तरं सारदादेव्या गृहसमीपागमनं यावत् सर्वास्तया सार्ध-मतिष्ठन्। प्रतिदिनं ता एव अष्टौ बालिकाः स्नानकाले तां प्रतीक्षमाणा मिलन्ति स्म। ...बहुकालानन्तरं च सारदादेव्या परिज्ञातमिदं यदिमा ग्रामस्यास्य बालिका नासन्।...तास्तु देव्या अष्टसहचारिण्यो नायिकाश्च बभूवुः, याः सदैवादृश्यरूपेण देवीं परिवेष्टयन्त्यस्तस्थुः।

लगुडं स्कन्धे कृत्वा भ्राम्यति, भिक्षुकाणामुच्छिष्टं भुंक्ते, अस्पृश्यश्वपाकवत् पुरीषं प्रोञ्छति, इत्यादिका बह्वो वार्त्ताः समाकर्ण्यन्त। सारदादेव्या आन्तरिकी अव्यक्तवेदना केन ज्ञायते? आकाशाभिमुखं पश्यन्ती उष्णान् श्वासप्रश्वासान् गृह्णन्ती बभूव सा।

यदि जनानां वचनं सत्यं भवेत्? तर्हि तु ममैतावद्दूरे निवासो न समीचीन इति—सारदादेव्या विचारितम्। स्नानसुयोगमुपलक्ष्य काश्चन प्रतिवेशिन्यो गङ्गास्नानार्थं कलिकत्तां गन्तुमुद्यता बभूवुः। इदमाकर्ण्य ताभिः सह तयाऽपि दक्षिणेश्वरं गन्तुं निश्चयो विहितः। सारदामनोभावमवधार्य स्वयं जनक एव तां दक्षिणेश्वरं निनाय।

तारकेश्वरतः षष्टिक्रोशार्धान् त्रिचतुरेषु दिनेषु पद्भिरतिक्रम्य रात्रौ प्रायशो नववादनकाले दक्षिणेश्वरमागत्य श्रीसारदा सत्वरं श्रीठाकुरस्य गृहं प्राविशत्। अवगुण्ठनवतीं पत्नीमवलोक्य श्रीठाकुरः सोल्लासं प्रोवाच—"त्वमागताऽसि? साधु कृतम्। हृदयराम! कटं विस्तारय" ···इति वाक्यद्वयेनैव श्रीसारदादेव्या मन आनन्दपरिपूर्णमभवत्। आनन्दस्यावेगेन नयने वाष्पमलिनतां गते।

पत्नी ज्वरार्दिता समागतेति ज्ञात्वा श्रीठाकुरो महतीं चिन्तामापेदे। तेन पत्नी स्वगृह एव संस्थापिता, अजस्रप्रेमधारया सुसिक्ता च। श्रीठाकुरस्य चिकित्सादिप्रबन्धेन सपर्यया च श्रीसारदादेवी त्रिभिश्चतुर्भिर्वा दिनैरेव रोगरहिता जाता। अहो! कियान् स्नेहः, कीदृशी च ममता अस्ति अस्य हृदये। कियदाकर्षणम्, कियती च गम्भीराऽऽन्तरिकता! सहसैव सारदादेवीहृदयं द्रवीभूतमिव संवृत्तम्। एतावद्दिनानि यावत् स्वोपस्थानराहित्यात् आत्मन उपरि महान् क्रोधोऽप्यबोभूयत। तयाऽवधारितं यद् ग्रामे याः किल जनश्रुतयः समाकर्णितास्ताः सर्वा मिथ्याभूताः सन्ति। अहो! अयं त्वीदृशः प्रेममयोऽस्ति, यथा प्रेमस्वरूपो भगवानेव विद्यते, श्रीसारदादेवीदमालोचयत्। श्रीठाकुरो-

ऽपि ममतापाशेन सारदादेवीं दिनानुदिनमतिसमीपमाचकर्ष, आत्मानं चासौ सर्वतोभावेन सारदादेव्या हस्तयोः समर्पयाञ्चकार।

श्रीसारदादेव्याः प्रायशो मासद्वयं स्थितावेव श्रीठाकुरेण श्रीषोडशी (श्रीत्रिपुरासुन्दरी) रूपेण तस्याः समर्चनमनुष्ठितम्।* श्रीरामकृष्णदेवस्य सत्यदृष्टौ सारदादेव्या वास्तविकं स्वरूपं प्रकटितमिव जातम्। पूजाकाले देव्या आसने उपवेशनमात्रेणैव श्रीसारदादेवी भावस्था बभूव। श्रीठाकुरस्तदीयौ चरणौ आलक्तकेन शिरश्च सिन्दूरेण समयोजयत्। श्रीसारदां वस्त्रादिनाऽऽच्छाद्य मिष्टान्नं ताम्बूलं चाऽभक्षयत्। अनन्तरं श्रीसारदादेव्या श्रीठाकुरस्य भ्रातृपुत्रीं लक्ष्मीमणिं प्रति पूजाया अस्या विषये चर्चा कृता। ततो लक्ष्मीमणिर्विहस्यापृच्छत्—"भवती अतिलज्जावती आसीत्, वस्त्राणि कथं पर्य्यधापयत्?" तयोत्तरितम्—"अहं तु भावाविष्टा भूत्वोपविष्टाऽभूवम्।"... अनन्तरं श्रीसारदादेवी श्रीठाकुरश्चोभावपि गम्भीरसमाधिमग्नौ बभूवतुः। ततः श्रीरामकृष्णोऽर्धबाह्यदशायामागत्य देवीचरणे स्वात्मनिवेदनपूर्वकं स्वकीयसर्वसाधनाफलं जपमालां च समर्प्य प्रणतवान्—"सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते" इति एवं

* षोडशीपूजाविषये "लीलाप्रसङ्गे" लिखितम्—१२८० वङ्गाब्दज्येष्ठमासे श्रीठाकुरेण षोडशीपूजा कृता। अर्थात् श्रीमातुः दक्षिणेश्वरागमनात् चतुर्दशपञ्चदशमासेभ्यः समनन्तरम्। "श्रीश्रीमायेर्कथा" नामकपुस्तकस्य द्वितीयभागे १२८ पृष्ठे लिखितम्—"... दक्षिणेश्वरे सार्धैकमासनिवासस्यानन्तरमेव षोडशीपूजा समनुष्ठिता। ततश्च प्राय एकवर्षं यावदहं दक्षिणेश्वरे स्थिता।... अन्ते च रुग्णा स्वगृहं परावृत्ता" इत्यादि। श्रीठाकुरस्य श्रीमातुश्च जीवनस्यानेकासां घटनानां पौर्वापर्यसामञ्जस्यस्य ध्यानपूर्वकपर्यालोचनयेदं दृश्यते यत् श्रीमात्रा कथिता घटनावली समधिकसमीचीना प्रतीयते। षोडशीपूजाया अनन्तरमेव श्रीठाकुरोऽष्टौ मासान् यावत् स्वगृह एव पत्न्याः शयनप्रबन्धमकार्षीत् इदमेवाधिकं सम्भवं प्रतीयते।

पूजाविधिः समाप्तिमगात्। पूजको पूज्या देवी च द्वावप्यात्मस्वरूपेणै-कतां जग्मतुः। तयोर्दाम्पत्यजीवनस्यैतदेव परिपूर्णं रूपम्, एष एव पूर्णः परिचयः। तस्मादेव लीलामय्याः स्त्रीरूपेण लीला एतावन्माधुर्यमयी विद्यते। कीदृश आनन्दः स्वामिसेवायाम्, स्वामिसाहचर्य्ये च ? सेवा-क्षमा-लज्जा-तुष्टि-शान्तिरूपेण सा सदा त्यागमूर्तिशिवस्वरूपस्वामिनः सेवायां तत्परा बभूव।

श्रीरामकृष्णः श्रीसारदादेवीं पूजयामास। स तु पार्थिवं शिवलिङ्ग निर्माय पर्यपूजयत्। मृन्मयमूर्त्तौ चिन्मयप्रकाशमपश्यच्च। समस्ता नार्यस्तस्य कृते पूज्यतमा आसन्। परन्तु तदीयेयं षोडशीपूजा एकस्याः स्वतन्त्रपद्धत्याः परिचायिका किं नास्ति ? एतस्याः पूजायाः माध्यमेन सारदादेवी एव केवलं तेन देवीत्वे प्रतिष्ठापितेति न, विश्वस्य नारीभ्य एव बृहत्तममर्यादा, महत्तमगुरुता च प्रदत्ता।

"या देवी सर्वभूतेषु मातृरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥"

मन्त्रमिमं सार्थकमुच्चारयन् मानवजातिमसौ जीवभूमितो ब्रह्मभूमिं प्रापयत्।

—०-०—

श्रीसारदादेवी यदा दक्षिणेश्वरे समागता, तदानीमियमूनविंशति-वर्षदेशीयाऽऽसीत्। तदानीमेकदा चरणसंवाहनपरा श्रीसारदादेवी श्रीरामकृष्णमपृच्छत्—"कीदृश्या भावनया भवान् मां पश्यति?" इति। सहजस्वरेण श्रीरामकृष्णः प्रत्यभाषत—"या माताऽस्मिन्मन्दिरे विद्यते सैवास्य (मम) शरीरस्य जन्मदात्री तथा सैवेदानीं नौबत-स्थाने वसति। सैव चात्र मम पादसंवाहनं करोति। सत्यमेव निरन्तरं त्वां साक्षादानन्दमयीरूपमेवावलोकयामि" इति।

कामगन्धशून्यमानवीयदेहसम्बन्धविहीनस्यैतदपार्थिवदाम्पत्यजीव-नस्यालोचनाप्रसङ्गे वयमप्यात्मसमाहिता भवितुमर्हामः। अन्यथै-तादृशदिव्यप्रेममयलीलाया महत्त्वं न बोद्धुं शक्यते। ततः प्रभृत्येव तस्या दाम्पत्यजीवनं, साधनं, भजनं च सहैव प्राचलन्। सांसारिक-दृष्ट्या श्रीठाकुरः श्रीमाता च दम्पती बभूवतुः। परमेतावानेव तत्सम्बन्धे पर्याप्तपरिचयो नास्ति। अयं तु सर्वथा बाह्यसम्बन्ध आसीत्।... श्रीठाकुरं प्रति श्रीमातुर्भक्तिमाकर्षणं चावलोक्यैकदा परिहासमुखेन हृदयरामो मातुलानीमवोचत्—"सर्वे मातुलं 'बाबा' इति कथयन्ति। किं भवत्याऽपि 'बाबा' पदेनाभिधातुं शक्यते?" अतिस्वाभाविक-कण्ठेन श्रीसारदादेवी उदतरत्—"तं 'बाबा' इति किं कथयसि हृदय, स तु मम 'बाबा' 'माता' च सर्वमास्ते?" अनन्तरं कदाचिद् भक्त-प्रश्नोत्तरे तया प्रोक्तम्—"तमहं सन्तानभावेन पश्यामि।" श्रीठाकु-रेणैकवारं कथितम्—"आवां द्वावपि मातुः सङ्गिनौ स्वः।" श्रीमाता

श्रीठाकुरं समस्तसम्बन्धकेन्द्ररूपममन्यत। उपर्युक्तवर्णनेन तयोः पारस्परिकरहस्यमयगोप्यसम्बन्धस्य कथमपि कश्चिदाभासो लभ्यते, परमेतावतैव तदलौकिकसम्बन्धमर्मोद्घाटनं न जायते, प्रत्युत तयोः पारस्परिकदिव्यसम्बन्धो नितरां जटिलायते।

श्रीठाकुरस्य साधनाकालजीवनेतिहासस्तु कोऽपीषद्रूपेण परिज्ञायते, किन्तु श्रीमातुर्जीवनस्य बहूनां घटनानामिव तदीयसाधनस्येतिहासोऽप्य-श्रुतोऽज्ञात एव तिष्ठति। तस्याः अधिकांशसाधनानि लोकानां परोक्षे समनुष्ठितान्यभूवन्।

मुमुक्षवः साधारणसाधकाश्च स्वविमुक्तिहेतवे साधनान्यनुतिष्ठन्ति। किन्तु परमेश्वरप्रेरितानामाधिकारिकपुरुषाणां साधना आदर्श-मुपस्थापयितुं समष्टिमुक्तये च समनुष्ठीयन्ते। बाह्यदृष्ट्या विविधश्रेणी-विभक्तमानवानां साधनानि समानान्येव दृश्यन्ते, किन्तु तदुद्देश्य-प्रयोजनानि सर्वथा भिन्नानि भवन्ति।

सारदादेव्या बाल्यजीवने कस्याश्चनाध्यात्मिकानुभूतेर्भावसमाधेर्वा सम्बन्धे न किमपि श्रूयते। दक्षिणेश्वरे षोडशीपूजाया रात्रौ प्रथमवारं तां समाधिस्थां पश्यामः। तद्रात्रित एव तदीयाध्यात्मिकजीवनस्य प्रारम्भोऽभवत्। ततश्चासौ पूर्णया निष्ठया भजनसाधनान्यकरोत्। बहुदिनानि यावत् तस्या एवं नियम आसीत् यत् एकलक्षजपपूर्त्ति-मन्तरेण नासौ जलग्रहणमप्यकार्षीत्। निस्तब्धभावतो रात्रिषु निरवच्छिन्नध्याने संलग्नाऽजायत। श्रीमातुर्वर्णनेनैतस्येषदाभासो लभ्यते—"तानि सर्वाणि दिनानि कीदृगपूर्वाण्यभूवन्! चन्द्रिका-संवलितरात्रौ चन्द्रस्याभिमुखं करौ बद्ध्वाऽहमवोचम्—'स्वीयचन्द्रिका-वन्मनो मे निर्मलीकुरुष्व'। रात्रौ चन्द्रोदये जाते रोरुद्यमाना सा प्रार्थनामकरोत्—"चन्द्रेऽपि कलङ्कसत्ता, हे परमात्मन्! मम मनसि ईषदपि कालिमा न भवेत्" "अहं निजां वार्तां किं कथयेयं पुत्रि! तदानीमहं दक्षिणेश्वरे रात्रौ त्रिवादनसमये समुत्थाय ध्यानोपविष्टा।

किंचिदपि बाह्यपरिज्ञानं नासीत्। वारमेकं ज्योत्स्नापूर्णनिशायां मांगलिकवाद्यशाला-सोपानसंन्निधावुपविश्य जपमकार्षम्। वातावरणं नितान्तं निस्तब्धमासीत्। श्रीठाकुरस्तस्मिन् दिने कदा "झाऊवने" शौचार्थमगच्छदिति न मया परिज्ञातमभवत्। अन्यदिवसे उपानदुद्भूतशब्देन तत् परिज्ञातमभूत्। ध्यानं नितरामेकतानतामगच्छत्। तदानीं काले ममाकारोऽप्यन्यादृश एवासीत्—भूषणैः सुसज्जितः, अहं च रक्तशाटिकां पर्यधाम्। वातवशात् शरीरतो वारं वारमंचलमुदडीयत। परन्तु मम कोऽपि बोधो नासीत्, पुत्रो योगेन्द्रस्तस्मिन् दिने यदा श्रीठाकुरं शौचजलपात्रप्रदानार्थमुपागच्छत्, तदा तेन तदवस्थायामहं दृष्टा।...दक्षिणेश्वरे रात्रौ वंशी वाद्यते स्म। श्रुत्वैव मनो व्याकुलं बभूव। ज्ञातं यत् साक्षाद्भगवानेव वेणुं वादयति। मनः समाधिस्थमभूत्।..."

तस्या इयं समाधेरवस्था प्रयत्नं विनैवाजायत, परन्तु एतस्य समाधेरवस्थाया बाह्यप्रकाशोऽतीव स्वल्पः पर्यदृश्यत। श्रीठाकुरस्यान्यतम ईश्वरकोटिकपार्षदः स्वामी प्रेमानन्द एकदा प्रोवाच—"सा (श्रीमाता) स्वयं शक्तिस्वरूपा, तस्यां गोपनशक्तिरधिकाऽऽसीत्। किन्तु श्रीठाकुरश्चेष्टमानोऽपि गोपयितुं न शशाक। तस्य तेजःप्रकाशो बहिः प्राकट्यमगच्छदेव। श्रीमातुरपि भावसमाधिरबोभूयत—किन्तु कस्यापि विदितो नाऽभवत्।" अतिसहजरूपत एव सा स्वरूपस्थिता समतिष्ठत। पुनर्नित्यलीलायामपि स्वभावत एव गमनागमनं बोभवीति स्म।

रात्रिषु जागरणं कुर्वाणयैतया मालाद्वारा यो हि जपः समनुष्ठीयते स्म स आश्रितसन्तानविमुक्त्यै एव। सा होवाच—"पुत्रकाः, बालकाः किञ्चिन् कुर्युर्नवा, तेषां कृते किञ्चित् कृत्वा संरक्षेयम्।" अनेकभक्तसन्तानप्रश्नानामुत्तरे श्रीमाता प्रोवोचत्—"युष्माभिः किञ्चिन्नास्ति

कर्त्तव्यम्, यत् करणीयं तन्मयैव क्रियते।" सन्तानैः पृच्छ्यते—"किं, किमपि करणीयं नास्ति ?"

"न हि, किञ्चिदपि न हि।"
"किमपि नास्ति कर्तव्यम् ?"

"न हि, किञ्चिदपि न हि।" पौनःपुन्येन माता वारत्रयमुवाच। पुनः कृपामयी माता अवोचत्—"यत्र यावन्ति सन्तानानि सन्ति, सर्वेषामेव कृते मयाऽनुष्ठीयते।" मातृरूपतः सा सर्वेषां विमुक्तये सहजां व्यवस्थामकरोत्।

श्रीमाता १२७८ वर्षे (१८७२ ईसवीये मार्चमासे) प्रथमवारं दक्षिणेश्वरे श्रीठाकुरस्य समीपमागच्छत्। तत आरभ्य १२९३ वर्षीय-श्रावणस्य एकत्रिंशत्तमतिथिं यावत् श्रीठाकुरस्य देहावसानसमयपर्यन्तं, लम्बायमानपंचदशवर्षाणि श्रीमातुः साधनकालशब्देनाख्यातुं शक्यन्ते। एतत्समये श्रीठाकुरस्य सेवैव सर्वापेक्षया तीव्रा तस्याः साधनाऽऽसीत्। एतस्य साधनस्यानन्तरं श्रीवृन्दावनस्य बेलूड़स्य च पंचाग्नितपस्यादि-साधना निम्नकोटिगाऽक्रियत। एतस्मिन् पतिसेवारूपसाधनाकाले श्रीमातरं * विश्वमातृत्वविकासायैव जगति समागतां—वयमादर्शस्त्री-रूपेण समीक्षामहे।

श्रीठाकुरस्य साधना तीव्रवेगधाराशालिनी पर्वतीयनदीव बभूव। किन्तु श्रीमातुः साधना अन्तःस्रोतस्विनी फल्गुसरिदिव शान्ता परिज्ञायते। श्रीठाकुरोऽनेकसाधनाभ्यन्तरत एकत्वप्रतिष्ठामकरोत्। किन्तु श्रीमाता एकत्वे प्रतिष्ठिता व्रततीव बहूनां साधनानामभ्यन्तरे प्रतिष्ठिता बभूव। तदीयेष्टदेवः सर्वदेवदेवीमयः सर्वभावमयश्चाभूत्।

श्रीसारदादेव्या जन्म ग्रामस्योन्मुक्तवातावरणे समभवत्। किन्तु

* श्रीसारदादेव्यैव प्रोक्तम्—"जगति मातृभावविकासायैव श्रीठाकुरोऽधुना मां संरक्ष्यागच्छत्।"

दक्षिणेश्वरे समागत्य मन्दिरस्य माङ्गलिकवाद्यभवनस्यैकस्मिन् लघीयसि प्रकोष्ठे तया स्थातव्यमभवत्। तत्रैव भोजननिर्माणम्, अशनम्, निवसनम्, श्रीठाकुरस्य कृते पाकविधानम्, भक्तेभ्यो भोज्यपदार्थपाचनम्, पात्राणि, लौहचुल्ली, भाण्डसमूहश्चेति सर्वं संरक्ष्यते स्म। अस्मिन् लघुप्रकोष्ठे निवसन्ती श्रीमाता श्रीठाकुरस्य सपर्य्यायां संलग्ना सती बहूनब्दान् व्यत्यगमयत्। रात्रौ त्रिवादने एव शौचादिभ्यो निवृत्ता गङ्गास्नानमनुष्ठाय यदा गृहं प्राविशत्, तदा दिवसे शौचस्य वेगे समुत्पन्नेऽपि शौचार्थं न जगाम।

दक्षिणेश्वरे देवीमन्दिरस्यैकस्मिन् पिहिते प्रकोष्ठे निवासोऽभवत्। समस्तं दिनमेव तत्र यात्रिणां समागमोऽबोभूयत। भिक्षुकाणामौदरिकाणां साधुवेषधारिणां तत्र सर्वदैव सम्मर्द इव समुपातिष्ठत। तथापि लज्जारूपिणी श्रीसारदादेवी नैजमात्मानमाच्छाद्य गच्छति स्म, यत्तस्याश्छायामपि न कश्चिदपश्यत्। बहूनां वर्षाणामनन्तरं कोषाध्यक्षः प्रोवाच—"साऽत्र वर्तते, इति श्रुतम्, किन्तु सा कदापि न विलोकिता।"

नित्यसिद्धा श्रीमाता लोकचक्षूंषि विरहय्य श्रीठाकुरस्याकुण्ठभावेन परिचर्यां कुर्वन्ती तस्थौ। अनन्तरं भक्तानामपि सानन्दमसौ सपर्य्यामन्वतिष्ठत्। सार्धत्रिसेटकपरिमितगोधूमचूर्णस्य तया करपट्टिका निरमीयन्त। तथाऽप्यसौ सदानन्दमयी बभूव। स्वसम्बन्धे तयैकवारं प्रोक्तम्—"तर्हि किं मम सर्वमलौकिकमस्ति? अशान्तिनाम्ना तु मया कुत्रचित् किमपि न दृष्टम्। इष्टदर्शनम्—तत्तु करामलकवदेव वर्त्तते। एकवारमुपविश्यैवेष्टदर्शनं कर्त्तुं शक्यते। दक्षिणेश्वरे मङ्गलवादनस्य लघुप्रकोष्ठं दृष्टम्? तत्रैवाऽहमासम्। प्रथमं तु गृहाभ्यन्तरगमनकाले मस्तकं प्रघट्टितं जातम्। एकदा तु किंचित् क्षतमप्यभवत्। अनन्तरमभ्यासो बभूव! द्वारसमीपे समासादिते मस्तकं नम्रीभूतमभूत्। कलिकत्तातोऽतिहृष्टपुष्टाः स्त्रियो दर्शनार्थं तत्रायान्ति स्म, द्वारस्योभयतो हस्तौ संयोज्य तिष्ठन्त्य ऊचुः—"अहो! कीदृशे गृहेऽस्माकं सीतालक्ष्मी-

निवसति ! वनवास इव वर्त्तते।"... तत्र पिहितस्थाननिवासेन तस्याः पादयोर्वातरोगः समुत्पन्नः, येन जीवनपर्यन्तं तस्यै महत्कष्टं प्रदत्तम्।

शरीरं तु नूनं मन्दिरस्यैकप्रकोष्ठेऽतिष्ठत् ; किन्तु तदीयानि मनःप्राणेन्द्रियाणि सर्वाणि श्रीठाकुरस्याभ्यर्णमेव चङ्क्रममाणान्यभूवन्। तस्मिन् गृहे स्थिताया अपि तस्या (श्रीठाकुरस्य) निर्निमेषदर्शनं तद्वार्तालापस्याबाधश्रवणं च प्रचचाल। बालभक्तं शारदाप्रसन्नं स्वगेहमुपविष्टः श्रीठाकुरः प्रोवाच—"शकटीभाटकाय नौबतगेहात् पणचतुष्टयमानीयताम्।" समागत्य शारदाप्रसन्नोऽपश्यत्—पूर्वत एव पणचतुष्टयं सोपानपार्श्वे संरक्षितं तिष्ठति। अनन्तरं श्रीमाता जगाद—'नौबतगेहे सहस्रं कार्याणि कुर्वाणाया अपि मम मनः श्रीठाकुरस्य समीपमेव न्यवसत्। एतावद्दूरतोऽपि कथावार्ता निम्नस्वरेण तत्कृता समस्ताऽपि मया श्रूयते स्म।' श्रीठाकुरं प्रति रात्रिन्दिवं तदीया सतर्कदृष्टिरासीत् —तथा तस्मिन् स्वस्मिंश्चाभेदं मत्वाऽऽत्मवदसौ तस्य सेवामकरोत्। एतत्सेवाभ्यन्तर एव द्वयोरन्तर्मेलनमजायत, एतत्सेवारूपसाधनभ्यन्तर एव चाभूद् द्वयोरभेदज्ञानम्। भक्तनीलकण्ठगीतस्यैकचरणं सा मनस्येव गुनगुनायमाना प्रायशोऽगायत—

"अये मानस ! प्रेमरूपं धनं
रत्नमेतत्त्वया गुप्तितो रक्षणीयम्।"

श्रीठाकुर एव तस्याः "प्रेमरूपं धनरत्न"मासीत्। अत एव तयाऽसौ स्वस्याभ्यन्तरे एकान्तस्थाने सुगुप्तो रक्षितः। श्रीमाता परवर्त्तिनि काले स्वशरीरं दर्शयित्वा प्रोवाच—"एतदभ्यन्तरेऽसौ सूक्ष्मदेहेन तिष्ठति।" श्रीठाकुरेण स्वमुखादेव प्रोक्तम्—"तवाभ्यन्तरे सूक्ष्मदेहेनाहं निवत्स्यामि" इति।

शनैः शनैर्भक्तसमागमो ववृधे। आनन्दमयी श्रीमाता सेवारूपेण यथा श्रीठाकुरं प्रासादयत् तथैवालक्ष्यरूपतोऽवगुण्ठनाभ्यन्तर एव सा सस्नेहदृष्टिं भक्तवृन्देभ्योऽपि सुखं प्रायच्छत्। शनैः शनैः सा

'भक्तजननी' बभूव । भक्ताः श्रीठाकुरस्यैवाकर्षणेन, तस्य समीपे स्थित्वा आध्यात्मिकीं चेतनामधिगन्तुमागच्छन्। किन्तु एतेन सहैव नौबतगेहात् ( मन्दिरस्यासौ भागो यत्र श्रीठाकुरः श्रीमाता च न्यवसताम् ) एतादृशं किञ्चिद् भक्तैरलभ्यत, येन तैर्नौबतगृहवासिनी ( श्रीमाता ) देवी मातृरूपेण वृता, ततः प्रभृत्येव परिदृश्यते स्म यत् श्रीसारदादेवी क्रमशः स्वीयमात्मानं देवीरूपेण प्रकाशयामास । साऽपि श्रीभगवतः सन्निधाने भगवतीरूपेणैव समागत्य स्थिता बभूव ।

दक्षिणेश्वर एव श्रीमातुरेतस्याः शक्तेर्विकासस्य प्रथमा सूचनाऽभवत्। काचन महिला कस्यचिन्महतः पारिवारिकसंकटस्य निवृत्तये कस्यापि मन्त्रस्यौषधस्य वा प्राप्तिकामनया श्रीठाकुरस्याभ्यर्णमुपाविशत् । श्रीठाकुरः स्वयं न किञ्चित्समर्प्य तां स्त्रियं नौबतगेहं प्रदर्शयन्नवोचत्—

"तत्र गच्छ त्वदीयाऽसौ वासना पूर्त्तिमेष्यति ।
अहं तु किञ्चिज्जानामि सा तु मत्तोऽधिका मता ॥"
( पोथीपुस्तकस्य छायानुवादः )

श्रीमाता नैव किमपि कर्तुमियेष । तां स्त्रियं पुनरसौ श्रीठाकुरस्य समीपं प्रेषयामास । श्रीठाकुरः ऐच्छत् यत् सारदादेव्येव तत्प्रतिकारं कुर्यादिति । तत्प्रतिकरणं विवशया श्रीमात्रैव विहितमभूत्—

"जननी बिल्वपत्रं च समर्प्योवाच तां प्रति ।
स्वगृहे नीयतामेतत् पूर्णाः स्युस्ते मनोरथाः ॥"
( पोथीपुस्तकस्य छायानुवादः )

* *

शनैः शनैस्त्यागिभक्तेषु केचिन्नियमितरूपेण दक्षिणेश्वरं न्यवसन् । श्रीठाकुरोऽतिसावधानतया तांस्त्यागपथमगमयत् । तेषामाहारविहारयोः साधनभजनयोश्च सर्वत्रैव तस्य सतर्कदृष्टिरभूत् । कृच्छ्रसाधनाभ्यन्तर-तोऽसौ तान् आदर्शस्य, भूमानन्दस्य चाभिमुखं नयन्नासीत् । बालकेषु

केन कियत्यो रोटिकाः खादिष्यन्ते, एतदपि स नौबतगृहमुपस्थाय कथयित्वा च समागच्छत्। अधिकभोजनेन भजनसाधनयोराघातो भविष्यति। अत एव हि सतर्कतैतादृशी बभूव।

बाबूरामाय रोटिकाचतुष्टयं निर्धारितमासीत्। राखालाय षट्। अन्येभ्यश्चैतादृशो निर्देशोऽभूत्। नौबतगृहाद् भुक्त्वा निवृत्तेः परं श्रीठाकुरः पृच्छति स्म यत्—"केन कियत्यः करपट्टिका भुक्ताः?" एकदा पृष्टो राखालः प्रोक्तवान्—"मया सप्त रोटिका भक्षिताः।" श्रुत्वा श्रीठाकुरः स्तब्धो बभूव। यतः षट्करपट्टिकाभोजनार्थमेव राखालः समादिष्ट आसीत्। अन्यदा भोजनानन्तरं बाबूरामो जिज्ञासितः—"अयि भोः! कियत्यो रोटिका भक्षितास्त्वया?" बाबूरामेण प्रोक्तम्—'षट्'। श्रीठाकुरो गम्भीरभावेन प्रोवाच—"एतावदधिकाः कथं भक्षिताः?" बाबूराम उवाच—'मात्रैव प्रदत्ताः।' श्रुत्वेदं श्रीठाकुरो विचलितोऽभवत्, पादुके परिधाय झटिति नौबतगृहे समुपस्थितोऽभियोगस्वरेणोवाच—"त्वं बालकान् मानवान् सम्पादयितुं न समीहसे। ते साधवः सन्ति। अस्मिन् वयसि एतावदधिकभोजनेन कथं कार्यं सेत्स्यति?"

बालकानां भोजनविषये वार्तामेतादृशीमाकर्ण्य मातुर्मनस्याघातो जातः। वेदनासम्भृतकण्ठेन श्रीमाता जगाद—'एकस्मिन् दिने समधिकरोटिकाद्वयप्रदानेनैतादृशी वार्ता?···'तदाऽहमेव तेषां निरीक्षणं भरणं च करिष्यामि। बालकानां भोजनपानसम्बन्धे भवता न किमपि वक्तव्यम्।' श्रुत्वेदं श्रीठाकुरः शान्तः शनैः शनैर्विहसन् स्वस्थाने परावर्तत। अन्यदिवसस्येयं वार्ता। श्रीमात्राप्रोक्तम्—"बाबूरामायैकवारं पानार्थं सितारसः प्रदत्तः। तदानीं बाबूरामस्योदरामय आसीत्। श्रीठाकुरो दृष्ट्वैकदा मामवोचत्—'त्वया बाबूरामाय भोजनार्थं किं प्रदत्तम्?' मयोक्तम्—'सितारसः।' एतदाकर्ण्य श्रीठाकुरेणोक्तम्—'स हि साधुर्भविष्णुः। त्वं कीदृशमभ्यासं कारयसि।'

एवंविधा प्रचलति स्म त्यागिनां शिक्षा दीक्षा च। एकतः श्रीठाकुरस्य

कठोरा व्यवस्था, अपरतश्च श्रीमातुः स्नेहपूरितः कोमलो व्यवहारः। द्वाभ्यां शक्तिशालिचुम्बकाभ्यामुभयतः समाकृष्यमाणं तेषामाध्यात्मिकं जीवनं स्वस्थाने संहतं तीव्रया गत्याऽग्रे प्रावर्धत।

श्रीरामकृष्णसान्निध्येन तदीयान्तरङ्गशिष्यैर्बहु शिक्षितम्—भावः, समाधिः, निर्विकल्पस्थितिः, अन्यच्चापि बहु। यस्य यादृशी आध्यात्मिक-प्रयोजनीयता, तस्मै तदेव वस्तु श्रीठाकुर उदारहस्ताभ्यां प्रायच्छत्। किन्तु श्रीमातुः पार्श्वतस्तैः एतादृशं किं वस्त्वधिगतम्, येन तैस्तस्याः सन्निधावप्यात्मा समर्पितः? श्रीमातुरभ्यन्तरे तत् कीदृशमाकर्षणमासीत्? सा तु सम्प्रति स्वरूपं संगोप्य समागमत्। लेखनं पठनं च तया साधारणमेव ज्ञायते स्म। एकं द्वौ वा त्यागिनौ भक्तौ विहाय न कस्यापि सम्मुखे सा वार्तामकरोत्। तथापि तैः श्रीमातरि किमालोकितम्, येन ते सर्वे तां जगन्मातुर्जीवन्तीं मूर्त्तिमवागच्छन्? श्रीमाता यस्य मस्तके हस्तं दत्वा आशिषं प्रायच्छद्सावात्मानमतिशयधन्यममन्यत।

त्यागिभिः शिष्यैः श्रीठाकुरो बहुशः सुपरीक्ष्य स्वीकृतः। किन्तु श्रीमातुश्चरणयोस्तैः किं विवेकमन्तरेण शिरांसि नम्रीकृतानि?

राखालः श्रीठाकुरस्य मानसपुत्र आसीत्। स एव राखालमहाराजः परवर्त्तिनि काले श्रीमातुः सम्मुखे समागत एवैतावान् भावाविष्टोऽजायत यत् तदीयानि सर्वाण्यप्यङ्गानि रोमाञ्चपुलकितानि बभूवुः, भावतः सम्पूर्णमपि शरीरमकम्पत, चक्षुर्भ्यामानन्दाश्रुधारा कपोलावुभौ प्लावयन्ती प्रावहत्। विश्वविजयी स्वामी विवेकानन्दो यदा मातुः समीपमागच्छत्, ज्ञायते कश्चित् शिशुरेषः। पाश्चात्यदेशानां विजय-यात्रातः पूर्वं मातुराशीर्भिर्बलवान् स समुद्रमपि लङ्घयामास। श्रीमाता आशिषो दत्वा व्याजहार—"पुत्र! त्वं विश्वविजयी भूत्वा प्रत्यागमिष्यसि। तव मुखे सरस्वती निवत्स्यति।"*

---

* १८९४ ईसवीये वर्षे अमेरिकातो गुरुभ्रात्रे श्रीस्वामी विवेकानन्दः पत्रमलिखत्—"....भ्रातः! अनुचितं न मन्तव्यम्, युष्मासु कोऽपि साम्प्रतमपि

नरेन्द्रनाथप्रभृतिशिष्यवत् श्रीसारदादेव्याऽपि विशेषसाधनाय, आध्यात्मिकानुभूत्यै वा श्रीठाकुरो विशिष्टरूपेणानुरुद्धः—इत्यस्य न किमपि प्रमाणमुपलभ्यते। प्रारम्भिकदिवसेष्वेकदा तया योगेन्द्रमोहिनी विज्ञापिता—"तस्मै कथनीयम्, यन्ममाऽपि कोऽपि भावसमाधिर्भवेत्। बहूनां जनानामुपस्थितिकारणात् वृत्तान्तमिमं तस्मै विज्ञापयितुमवसरो मया नोपलभ्यते।"

आगामिदिने प्रत्युषसि एव योगेन्द्रमोहिनी प्रणामपूर्वकं श्रीमातुर्वृत्तान्तं श्रीठाकुराय न्यवेदयत्। तेन श्रुतम्, किन्तु स किञ्चिदुत्तरमदत्त्वान्तरेणैव गम्भीरो भूत्वाऽतिष्ठत्। एतद्विलोक्य तया भक्तया स्त्रिया नौबतगृहं प्रत्यावृत्याऽदृश्यत यत श्रीमाता पूजां विधत्ते। भावावेशे कदापि सा विहसति, पुनः किञ्चिदनन्तरं रोदनं प्रारभते, तस्याश्चक्षुर्भ्यामश्रुधारा प्रवहति च। शनैः शनैः श्रीमाता गम्भीरे समाधौ न्यमज्जत्। बहोः कालादनन्तरं यदा समाधिर्भग्नस्तदा तया स्त्रिया भक्तया जिज्ञासा कृता—"अस्तु मातः, त्वया तु प्रोक्तं तव भावो न जायते, परमेतत् किमासीत्?" श्रीमातुर्लज्जावनतमुखे कोमलो हास्यभावो विजृम्भितोऽभवत्। श्रीठाकुरस्य दिव्यसंगेन दिव्यशक्त्या च श्रीमाता अनायासेनैव देवीपदे प्रतिष्ठिताऽक्रियत।

श्रीरामकृष्णस्य जीवनं जाज्वल्यमानाग्निपरीक्षया परिशुद्धमासीत्। "त्याग" एव तदीयजीवनमुख्योपदेशोऽभूत्। त्यागनिकषे धर्मजीवनं परीक्ष्यते। सन्देशवाहकेभ्यस्तेन त्यागमन्त्रस्यैव दीक्षा प्रादायि। ते च त्यागधर्म एवाभिषिक्ता अक्रियन्त। शिक्षयैतया तस्य लीलासङ्गिनी

---

मातरं नावागच्छत्। मातुः कृपा मयि पितुः कृपातो लक्षगुणाधिका वर्तते।... मातरं प्रति मम महान् पक्षपातः।...भ्रातः! मातुर्वार्तायां स्मृतिपथं गतायां कदा कदापि (हनूमत्सदृशं) ब्रवीमि—को रामः! भ्रातः, ईदृशं यदा कथयामि, मातुरभिमुखमेव तु मम पक्षपातः।"...इत्यादि।

परिमुक्ता नासीत्। मरुस्थलीयो भक्तो लक्ष्मीनारायणः श्रीठाकुरस्य सेवायै दशसहस्रं मुद्राः प्रदातुमैच्छत्। श्रीठाकुरोऽतिदृढभावेन रूप्यकाणां ग्रहणं नैव स्वीचकार। ततो लक्ष्मीनारायणः श्रीमातुर्नाम्ना रूप्यकाणामेतेषां प्रदानस्याभिलाषं प्रकाशयाञ्चक्रे। श्रीठाकुरो नौबत-भवनात् श्रीसारदादेवीमाहूय एतद्विषये तस्याः सम्मतिं ग्रहीतुमुक्तवान्—"किं भोः, अयं रूप्यकाणि प्रदातुमीहते, त्वयैतानि कथं न गृह्यन्ते? कथय।" श्रुत्वैतत् श्रीमाता प्रत्युवाच—"एतत् कथं भवितुमर्हति। रूप्यकाणि न ग्रहीतुं शक्यन्ते। अहं यदि रूप्यकग्रहणं करोमि, तर्हि तद्ग्रहणं भवत एव भविष्यति। यतो यद्यहं स्वीकरोमि, तदानीं भवतः सपर्यायां, बहुविधान्यावश्यकतायां च व्ययीकरणमन्तरा न स्थातुं शक्यते। फलतो भवतो ग्रहणमेवैतद् भविष्यति। त्यागकारणादेव जना भवन्तं प्रति श्रद्धां भक्तिं च विदधते। अतः केनापि प्रकारेणैतेषां रूप्यकाणां ग्रहणं न समीचीनम्।" तस्या वचनमिदमाकर्ण्य श्रीठाकुरो निश्चिन्तोऽभवत्।

सारदादेव्या जन्मातिदरिद्रब्राह्मणपरिवारेऽभवत्। बहुवारं तैरन्येषां धान्यानि कुट्टयित्वा उपवीतसूत्राणि कर्त्तयित्वा च जीविका समुपार्जिता बभूव। एतादृशदरिद्रताया वातावरणे लालिता पालिता च स्त्री दशसहस्र-रूप्यकाणां सहजभावेन परित्यागमकरोदिति निःसन्देहोऽसाधारणो वृत्तान्तः। श्रीठाकुरस्त्यागसाधनायां सिद्धो भूत्वा सुवर्णं मृत्तिकां च समानभावेनापश्यत्। श्रीसारदादेवी देवमानवस्यास्य संगप्रभावादेता-दृशज्ञाने प्रतिष्ठिताऽभवत्।

श्रीमातुर्दक्षिणेश्वरजीवनं नितरामानन्दमयमासीत्। रात्रिन्दिवं श्रीठाकुरस्य सेवा, संगः, भजनं, साधनादि सर्वम् अविच्छिन्नधारया प्राचलत्। इतश्च भक्तसमागमः, उद्दीपनमय ईश्वरीयप्रसङ्गः, नृत्यगीतम्, भावसमाधिश्चेत्यादिना श्रीठाकुरस्य गृहे सदैव आनन्दकोलाहलो बभूव। कदाचिदुच्चध्वनिना कीर्त्तनमभवत्, हरिनाम्ना गुञ्जितमभूत्, हुङ्कारमातन्वन्नसौ नृत्यमकरोत्। तदानीं काले स उन्मत्तोऽबोभूयत।

कश्चिद्भक्तो जहास, कश्चन रुरोद, कोऽपि च ननर्त्त, जगौ च—तत्स्थानं वैकुण्ठधामवत् प्रतीयते स्म । श्रीमाता नौबतगृहस्य उपप्रकोष्ठे दण्डायमाना जवनिकाछिद्राभ्यन्तरतोऽतृप्तनयनाभ्यां प्रेमलीलामिमामपश्यत् । तदानीं साऽपि आनन्दमग्ना समुल्ललास । दिवसा रात्रयश्च दिव्यतन्मयतायामेव व्यत्ययुः । सर्वदैवासौ देहातीतसत्तायां विराजमानेवातिष्ठत् ।

श्रीठाकुरस्य प्रायश उदररोगोऽभवत् । भोज्यवस्तूनि सर्वाणि न परिपाकं यान्ति स्म । यद्वस्तु परिपाकमेति, तदेव तस्य कृते श्रीसारदादेवी पाचयति, सम्मुखमुपविश्य विविधाभिर्वार्ताभिस्तस्य मनो विनोदयन्ती तं भोजयति च । श्रीठाकुरस्य मनसो सहजगतिरपि ऊर्ध्वस्थाऽभवत्; कस्मिंश्चिदीश्वरीयप्रसङ्गे परिचाल्यमाने सहसैव भावस्थोऽसौ बभूव । तदानीं स भोजनपानादिकं सम्पूर्णतया विस्मृतवान् । श्रीमाता बलादिव तदीयं मनः साधारणभूमौ समाकृष्य स्थापयन्ती तमभोजयत् ।

नौबतभवननिवासेन पत्न्याः कष्टं जायते, इदमवलोक्य श्रीठाकुरः श्रीमातरं मध्ये मध्ये कामारपुकुरं, जयरामबाटीं वा प्राहिणोत् । दक्षिणेश्वरनिवासकाले श्रीमाता षट्सप्तवारं पित्रालयं, श्वशुरालयं चाऽगच्छत् । इतश्च तस्याः प्रयाणेन श्रीठाकुरस्य भोजनपाने कष्टमजायत । श्रीठाकुरस्तदोद्विग्नः सन् सन्देशं प्रैषयत्—"त्वं त्वरितमागच्छ" इति ।

नौबतगृहस्य पिहितस्थाने निवासेन श्रीमातुः स्वास्थ्यमतिशयविगुणितं जातम् । दृष्ट्वेदं श्रीरामकृष्णदेवस्यान्यतमः सेवकः शम्भुबाबूमहोदयो मन्दिराद् बहिर्ग्रामसन्निधाने ईषद्भूमिं क्रीत्वा मातुः कृते गृहमेकमन्यन्निरमापयत् । एतद्गृहार्थं काष्ठानि एकेनान्यभक्तेन विश्वनाथोपाध्यायेन प्रदत्तानि । एकं स्थूलं काष्ठं जलप्रवाहे प्रावहत् । तदानीं काले हृदयरामो श्रीमातरं "भवद्भाग्यमेव निकृष्टम्" इति प्रोच्य कठोरवचनमवोचत् । श्रुत्वेदं सर्वं हृदयं सावधानीकृत्य श्रीठाकुरोऽवदत्—"पश्य हृदय ! अत्र (मम पुरतः) यस्त्वयाऽपराधः क्रियते स क्षम्यते; परमेतदभ्यन्तरे (सारदादेव्या) य आस्ते, स यदि फूत्कुर्यात्, तदा ब्रह्मा, विष्णुर्वा न तव रक्षां कर्त्तुं शक्ष्यति ।"

श्रीमातुर्हृदयमत्युदारमासीत्। जनानां भोजनदानसम्मानादीनि तस्यै बहु रोचन्ते स्म। एकदा दक्षिणेश्वरे बहूनि फलानि, प्रचुरमिष्टान्नानि च समायातानि। तया सर्वाणि परेभ्यो दत्तानि। इदमाकर्ण्य नैजमसन्तोषं व्यञ्जयन् श्रीठाकुरः प्रोवाच—"एवम्प्रकारेण वस्तूनां अपरिमितव्ययेन कथं कार्यं चलिष्यति?" श्रुत्वैतत् श्रीमाता न किञ्चिद् वदन्ती तस्याभिमुखतः सगर्वमपससार। श्रीमातरं मुखं परावृत्य व्रजन्तीं विलोक्य श्रीठाकुरोऽतिविचचाल, रामलालमाहूयासौ जगाद—"अरे रामलाल! शीघ्रं गत्वा निजां पितृव्यपत्नीं परिशान्तय, यदि साऽप्रसन्नाऽभवत् तर्हि कुशलं नास्ति।"

श्रीमातुः श्रीठाकुरस्य च सम्बन्धोऽतिरहस्यमयोऽभवत्। तयोः प्राणेषु एकः स्वर इवासीत्। एकस्य स्पर्शनेन समुद्भूता झंकृतिरन्यस्मिन्नपि समुदभूत्। प्राणानां गभीरतामुपगतौ द्वौ न स्तः, अपितु एकतां प्राप्ताविव बभूवतुः। स्वरूपयोरभिन्नतयैव तौ परस्परं प्रियतमावास्ताम्। भाग्यवन्तं कमप्येकदा सारदा देवी प्रोवाच—"पुत्र! श्रीठाकुरं मां च त्वमभेदभावेन पश्य। आवामभिन्नौ।" करुणामयी सा कदाचिदन्यस्मिन् समये स्वसन्तानसमक्षं स्वसम्बन्धे प्रणिजगाद—"पश्यत, शरीरमिदं (निजशरीरं दर्शयित्वा) दैवदेहमवगच्छत। ·· मम विद्यमानतायां न कोऽपि मां ज्ञातुं शक्ष्यति। अनन्तरं सर्वेऽवधारयितुं पारयिष्यन्ति।"

श्रीरामकृष्णः छद्मवेशे समागतः। श्रीसारदादेवी गुप्तरूपेण—स्वीयं वास्तविकं स्वरूपं प्रच्छाद्य समाजगाम। श्रीठाकुरस्य जीवनकाले तदीयान्तरङ्गभक्तेष्वप्यनेके श्रीसारदादेवीं "देवी"रूपेण ग्रहीतुं नाशक्नुवन्। श्रीठाकुरस्य त्यागिभक्तानां कथा तु नूनमेव भिन्ना वर्तते। श्रीमाता तेषां सर्वेषां गुरुपत्नी बभूव। अयमेव तदीयः सर्वाभ्यर्हितः परिचयः। (स्थानाभावतस्तासां सर्वासां घटनानामुल्लेखोऽत्र

न सम्भवः)। श्रीठाकुरस्य देहावसानानन्तरं श्रीसारदादेव्या स्वस्वरूपं यावद् गोपितम्, तावदनेके भक्तास्तां साधारणनारीमेवामन्यन्त।

स्त्रीषु श्रीठाकुरस्यान्तरङ्गभक्तिमती योगेन्द्रमोहिनी समभूत्। सा किल श्रीमात्रा सहातिघनिष्ठभावतो मेलनसौभाग्यं प्राप्तवती, तदीय-भावसमाधिदर्शनावसरं लब्धवती, श्रीमातुरजस्रस्नेहं ममत्वादिकं चाधिगतवती बभूव। श्रीमाता तां "योगेन्द्रपुत्री"ति नाम्ना समाह्वयत्। तथापि भक्तिमत्यास्तस्या मनसि कश्चित् संशयः समुदपद्यतैव। असावेवमालोचयामास यत् श्रीठाकुरस्त्वेतावान् त्यागी विद्यते, किन्तु माता परमसंसारिणीव परिदृश्यते। भ्रातृवर्गस्य भ्रातृजानां च कृते एवेयमुद्विग्ना तिष्ठति! एकदा योगेन्द्रमोहिनी गङ्गाघट्टे समुपविश्य ध्यानरता बभूव। श्रीठाकुरस्तत्राविर्भूय प्रोवाच—"पश्य गङ्गायां किं वहति?" भक्तिमत्या दृष्टम्, यदेकः शिशुः सद्यो जातो भागीरथ्यां प्रवहति, यस्योदरस्य नालोऽपि कर्त्तितो नास्ति। श्रीठाकुरस्तं दर्शयन्नुवाच—"किमेतेन भागीरथी अपवित्रतां गता? एतत्स्पर्शेन गङ्गायां कोऽपि विकारो नोत्पद्यते। तामपि तथैवावधारय। तस्या उपरि त्वया कीदृग्विधोऽपि सन्देहो न विधातव्यः। ताम्, एतत् (स्वशरीरं दर्शयित्वा) चान्योन्यमभिन्नमवगच्छ।" भागीरथ्याः परावृत्य भक्तिमती स्त्री मातरं प्रणम्योवाच—"मातः, मां क्षमस्व।" श्रीमाता प्रेमपूर्वकं पप्रच्छ—"किम्, किमभूत् पुत्रि?" योगेन्द्रमोहिनी तदा विश्लिष्य सम्पूर्णामपि घटनां श्रावयित्वाऽवादीत्—"तवोपरि मम सन्देह आविरासीत्, अद्य मदीयं सन्देहममुं श्रीठाकुरो निरस्तमकरोत्।" श्रीमातुर्वदनोपरि बाल्यकालीन इव हासः परिजजृम्भे। स्नेहपूर्वकं तया प्रोक्तम्—"एतेन किमभवत्? सन्देहस्तु भविष्यत्येव। संशयः, पुनश्च विश्वासः समुत्पत्स्यते। एवम्प्रकारेणैव पूर्णो विश्वासो जायते। अन्ते च विश्वासः सुदृढायते।" श्रीठाकुरो यदि नावाबोधयिष्यत्, तदा श्रीमातुर्विषये संसारो न किमपि पर्यज्ञास्यदबोधिष्यद् वा।

शनैः शनैः श्रीठाकुरस्य कन्सररोगसूत्रपातोऽजायत। सहैव दक्षिणेश्वरस्यानन्दमयो निवासकालोऽपि समाप्तिमगात्। देवायतनानि, देवीदेवविग्रहाः, यात्रिसमागमः, 'द्वादशमासेषु त्रयोदश महोत्सवाः',—सर्वाण्यपि यथापूर्वमासन्। तथापि सर्वाण्यप्येतानि, प्राणहीनानीव प्रतीयन्ते स्म। सर्वत्रैव शून्यताया मर्मरध्वनिरश्रूयत।

श्यामपुकुराख्यविभागस्यैकस्मिन् साधारणे द्वितलभवने भाटकगृहीते भक्ता अस्वस्थं श्रीठाकुरमानिन्युः। सुचिकित्सा प्राचलत्। किन्तु समुचितपथ्याभावात् चिकित्सायाः किमप्याशानुरूपं फलं नादृश्यत। भक्ता दक्षिणेश्वरतः श्रीमातरं श्यामपुकुरमानेतुं व्यचारयन्। किन्तु गृहेऽत्र स्त्रीनिवासस्त्वासीदेव न हि—सापि च चिरलज्जाशीला। अनेकेषामपरिचितपुरुषाणां गमागमा अबोभूयन्त, सदैव च यात्रिणां समागमः संबभूव। एतेषां मध्ये कथं सा स्थास्यति? किन्तु श्रीमातुः समीपे प्रस्तावोपस्थापनमात्रेणैव सर्वामप्यसुविधां परिहृत्यासौ श्यामपुकुरभवनं समाजगाम।

श्रीमातुस्तदानीन्तनकृच्छ्रसाधनामालोच्यास्माभिः विस्मितैर्भूयते। स्त्रीनिवासविरहिते साधारणभवनेऽत्र सर्वसाधारणानां कृते स्नानस्थानमेकमेवासीत्। रात्रौ त्रिवादनात् पूर्वं शय्यां परित्यज्य स्नानादितो विनिवृत्ता कदाऽसौ भवनस्य त्रितलोपरि गच्छति स्मेति न केनापि पर्यबुध्यत। दिनं यावत् सा उन्मुक्ते प्रकोष्ठे निवसन्ती तत्रैव च श्रीठाकुरस्य कृते पथ्यादिकं निर्माय यथाकालं जनेष्वपसारितेषु श्रीठाकुरं पथ्यादिकं भोजयित्वा जगाम। प्रगाढनिशायां सर्वेषु सुप्तेषु माता नीचैर्द्वितले समागत्य स्वनिर्दिष्टप्रकोष्ठे प्रविशति। महता काठिन्येन तया घण्टात्रयं विश्रामाय लभ्यते स्म। एवं प्रकारतस्तया कियन्त्यपि दिनानि श्रीठाकुरस्य सपर्यायां भजनसाधने च शान्तिपूर्वकं व्यतीतान्यभूवन्।

तदनन्तरं काशीपुरस्योद्याने श्रीमात्राऽन्तिमाः केचिन्मासा महत्यो-

त्कण्ठया व्यतियापिताः। श्रीठाकुरस्य दुःसाध्यरोगेणासह्यकष्टमासीत्। तस्य वेदनामवलोक्य पाषाणहृदयमपि व्यदीर्यत। जलस्य बिन्दुमपि नासौ निगिलितुं शक्नोति। श्रीमाता जगाद—"कदा कदापि कण्ठात् नासिकातश्च सूजी (तरलपथ्यं) निःससार, तदानीं समये महती भयङ्करवेदनाऽन्वभूयत।···अनन्योपाया माताऽन्ते तारकेश्वरशिव-मन्दिरे शिवप्रपन्नतायै प्रायोपवेशनकृते जगाम। द्विनद्वयं यावत् सा विनाऽन्नपानं शिवमन्दिरे निपतिता बभूव। किन्तु न किञ्चित्फलमभवत्। परावृत्य समागता श्रीठाकुरेण पृष्टा—"किं, किमपि जातम्? न किञ्चिन्नु?"

अस्य दारुणरोगस्य समयेऽपि श्रीठाकुरस्य कदा कदाचित् समाधिर्महाभावो वा समजायत। इतश्च भक्तानां तीव्राः साधनभजनतपस्या अपि प्राचलन्। श्रीठाकुरेण स्वरोगं दूरीकृत्य काशीपुरेऽनेके जना अनुकम्पिताः। एकस्मिन् दिनेऽसौ कल्पतरुर्भूत्वा बहून् भक्तान् समधिगतचैतन्यानकार्षीत्। काशीपुरे श्रीठाकुरस्य रोगशय्यासमीप एव जगति महोदारधर्मभावप्रचाराय "श्रीरामकृष्णत्यागिसङ्घस्य" संघटन-मप्यभवत्। परवर्तिनि काले एकदा श्रीमात्रा प्रोक्तम्—"काशीपुरोद्यानं तस्यान्तिमलीलास्थानम्। कृच्छ्रं तपः गम्भीरध्यानसमाधी चाबो-भूयन्त। तत् तदीयमहासमाधिस्थलम्। अत्र ध्यानानुष्ठानेन मनुष्यैः सिद्धिरासाद्यते।"

—:*०*:—

## ३

श्रीठाकुरो महासमाधौ लीनो बभूव। शोकातुरा श्रीमाता परेद्युरेव विधवावेशं दधार। स्वकीयाङ्गेभ्यस्तया एकैकं सर्वाण्यप्याभूषणानि निःसार्य प्राक्षिप्यन्त। यदाऽसौ हस्तयोः कङ्कणे निःसारयितुं प्रावर्तत, तदानीमाविर्भूय श्रीठाकुरस्तस्या द्वौ करावगृह्णात् उक्तवांश्च—"मृतोऽहं किम्? त्वं सौभाग्यवत्याश्चिह्नस्वरूपमाभूषणं किमर्थं त्यजसि?" इत्युक्त्वा कङ्कणावतारणं न्यरुणत्। हस्तयोः कङ्कणे न निस्सारिते। श्रीमात्रा स्वदुकूलस्य कूलं विदार्य लघूकृतम्। तदनन्तरं तया सर्वदैव लघुरक्तकूलं दुकूलमेव पर्यधीयत।

श्रीठाकुरस्य देहावसानानन्तरं श्रीमात्रा शरीरपरित्यागसंकल्पः कृतः। तदानीं श्रीठाकुर आत्मानं दर्शयन् उवाच—"न, त्वमेतर्हि संसार एव तिष्ठ, बहूनि कार्याणीदानीमवशिष्यन्ते।" किन्तु श्रीठाकुरस्य देहावसानेन योऽभावः प्राकट्यं नीतः, स हि श्रीमातुः कृतेऽसह्यो-ऽभवत्। किन्तु श्रीठाकुरस्यादेशात् तया समस्थीयत।

श्रीठाकुरदेहपरित्यागस्य सप्तदिनानन्तरं श्रीमाता काशीपुरं परित्यज्य समागच्छत्, सा परित्यक्तसर्वधैर्येव समभूत्। तदीयमनसोऽस्थैर्यं क्रमशः प्रववृधे। अतः श्रीठाकुरस्य विशिष्टभक्तैः सपरामर्शं वृन्दावन-दर्शनार्थं श्रीमातरं गमयितुं निश्चयोऽनुष्ठितः। बलरामबाबूमहोदयस्य गृहे सप्तदिननिवासानन्तरं सौरभाद्रपदस्य १५ तिथौ श्रीमाता वृन्दावनं प्रतस्थे। त्यागिनः सन्तानाः योगेन्द्र-काली-लाटूप्रभृतयो भक्तिमत्यः काश्चन स्त्रियश्च सार्धं जग्मुः। श्रीमाता मार्गे वैद्यनाथस्य, वाराणस्याः, अयोध्यायाश्च दर्शनमकार्षीत्। काश्यां श्रीविश्वनाथस्य नीराजनावसरे

सा भावाविष्टाऽभूत्। वृन्दावनयात्राप्रसङ्गे श्रीमाताऽवोचत्—"वृन्दावनकाले मया दृष्टम्, यत् श्रीठाकुरो धूम्रयानस्य गवाक्षे मुखं स्थापयित्वा ब्रवीति—'यत् कवचं त्वत्समीपे वर्तते, तन्न भ्रश्येतेति द्रष्टव्यम्।' तदीयमिष्टकवचं मत्पार्श्व एवासीत्। तस्य पूजनं प्रतिदिने तन्मया सत्यहमकरवम्। अनन्तरं च कवचं बेलड़-मठे समर्पितम्।"

वृन्दावने समागत्य ते सर्वे वंशीवटस्य कालाबाबूकुञ्जे न्यवात्सुः। वृन्दावनं भगवतो लीलास्थलम्। प्रत्येकवस्तुनि तस्यैव लीलायाः स्पर्शो विद्यते। भावमयपुण्यभूमौ कृष्णमयवृन्दावने समागत्य श्रीमातुः शोकदग्धं मनः शनैः शनैः किंचित् शान्तिमवाप। सा च भावसाधनस्यातलगाम्भीर्ये न्यमज्जत्। प्रतिक्षणमेवासौ भावसमाधौ तन्मयी बभूव। विरहाश्रूणि शनैः शनैरानन्दप्लवने रूपान्तरितान्यभूवन्।

एकदा श्रीठाकुर आत्मानं दर्शयन् श्रीमातरमुवाच—"मया योगेन्द्राय दीक्षा न दत्ता, त्वमेव तस्मै मन्त्रं देहि।" कश्च मन्त्रो देय इत्यपि तेन सूचितम्। पूर्वं तु माता न तत्र मनोऽदात्, मनसि 'सर्वे जनाः कथयिष्यन्ति अधुनैव माता दीक्षादानतत्परा जाता' इति। तया व्रीडाऽनुभूयते स्म, भयमपि किंचिदुदपद्यत। परेद्युः श्रीठाकुरेण पुनरपि तस्यै दीक्षादानवृत्तान्तः कथितः। तथापि तया नैतदनुष्ठितम्। तृतीयदिने पुनः प्रदत्तदर्शनाय श्रीठाकुराय श्रीमात्रा निवेदितम्—"मया तु तेन सह वार्ताऽपि न क्रियते, कथं मन्त्रं दद्याम्?" श्रीठाकुर उदतरत्—"त्वं पुत्रीं योगेन्द्रसुन्दरीमभिधेहि,—सा स्थास्यति।" इतश्च श्रीठाकुरेण दर्शनं ददता दीक्षाग्रहणार्थं योगेन्द्रः प्रोक्तः। किन्तु श्रीमातरं विज्ञापयितुं योगेन्द्रस्य साहसं न बभूव।

तां भक्तिमतीं योगेन्द्रसुन्दरीं द्वारीकृत्य श्रीमात्रा योगेन्द्र-(योगानन्द)विषये परिज्ञातमिदं यत् श्रीठाकुरेण तस्मै कश्चनापीष्टमन्त्रो न प्रदत्तः, तदा तया योगेन्द्राय दीक्षादानस्य निश्चयः कृतः। श्रीमाता एकस्यां पेटिकायां श्रीठाकुरस्य प्रतिकृतिं देहावशेषमपि सुरक्षितमकरोत्।

एकदा तत्पूजनं कुर्वाणयां तया समाहूतो योगेन्द्रः स्वपार्श्वमुपवेष्टुमादिष्टः। पूजां कुर्वती श्रीमाता गम्भीरभावावेशनिमग्ना बभूव। तस्यामेव भावावेशावस्थायामसौ योगेन्द्राय मन्त्रमदात्, श्रीमाता एवमुच्चैःस्वरेण मन्त्रोच्चारणं कृतवती यत् पार्श्ववर्त्तिगृहेऽपि मन्त्रोऽसावश्रूयत।

स्वर्गवाहिन्या अमृतगङ्गायाः पवित्रधारासमानैः श्रीमातुः कृपातरंगैः कियन्तः सहस्रशः प्राणाः संजीविताः—इति क्रमशोऽस्माभिर्द्रक्ष्यते। तारिण्यास्तापहारिण्याः स्वरूपं बिभ्राणया तया संख्यातीतानां सन्तप्तस्त्रीपुरुषाणां पापतापाः स्वायत्तीकृता अभूवन्।

श्रीठाकुरस्य विरहव्यथया दुःखिनी माता प्रायशो रोदनमकरोत्। एकदा श्रीठाकुरो दर्शनं दत्वा तामुवाच—"त्वमेतावत् कथं रोदिषि? अहं कुत्रापि तु न गतवानस्मि? अत्र गृहे न हि, तत्र गृहेऽस्मि।"

एकदा कल्य एव श्रीमाता कुंजे समुपविष्टा ध्यानं कुर्वाणा शनैःशनैरेतावद्गभीरे समाधौ न्यमज्जत्, यदसौ समाधिर्न केनापि प्रकारेण भज्यते स्म। भक्तिमतीभिः स्त्रीभिर्बहुकालपर्यन्तं तत्पार्श्वमुपविश्य हरिनामकीर्तनं कृतम्, तथाप्यसौ समाधिर्नात्रुट्यत्। अन्ते त्यागिसन्तानयोगेन्द्रेण यदा भगवन्नामोच्चारितम्, तदानीं स ईषद् भग्नोऽभवत्। समाधौ भग्ने श्रीठाकुरो यथाऽवदत् तथैव श्रीमाता प्रोवाच—"खादिष्यामि।" भोज्यपदार्थे पानीये च समीपमानीते यथा श्रीठाकुरो भुंक्ते स्म, तथैव श्रीमात्राऽपि किञ्चित् किंचिद् भुक्तम्।... अनन्तरं प्रोक्तम्—"अहं श्रीठाकुरस्य भावावेशे आसम्।"

कदाचिच्च आनन्दोल्लासनिमग्ना लघ्वी बालिकेव संगिनीः सह नयन्ती मन्दिरेषु देवदर्शनं कुर्वती व्यचरत्। सदैवासौ आनन्दपरिपूर्णा बभूव। नित्यमेव नवे नवे भावानन्दे समुच्छ्वसिता समभूत्।

एकदिनस्यायं वृत्तान्तः। केचित् पुरुषाः पुष्पैः सज्जीकृत्य कीर्त्तनं कुर्वन्तः शवमेकं नयन्तोऽभूवन्। तमवलोक्य श्रीमाताऽवोचत्—"पश्यत, पश्यत, किमिव लोकाः वृन्दावनं धाम प्राप्नुवन्ति। वयं मरणार्थमत्र समागताः, परन्तु ज्वरोऽपि न बभूव। कथयत—कियदधिकं मम वयोऽभूत्। स्वकीयं पितरं नैजं ज्यायांसमप्यपश्यम्।" श्रुत्वेदं सहवासिन्यः स्त्रियो हासं हासं लुलुठुः। ताभिः प्रोक्तम्—"मातः! किमुक्तम्—पिता दृष्टः? पितरं को न पश्यति?" एवं बालिकावत् श्रीमाता बभूव। श्रीठाकुरस्तु तस्याः प्राणेश्वर एवासीत्। देहपरित्यागानन्तरं तस्या असौ सर्वेश्वर एवाभवत्। नानारूपैरनेकविधाभिस्तेन मातुर्हृदयस्य शून्यता पूर्णतायामुद्वेलितासीत्।

श्रीमाता सेविकाः संगिनीश्च सह नीत्वा वृन्दावनस्य परिक्रमामकार्षीत्। तदानीं प्रायशः सा भावविह्वलाऽवलोकिता। ८४क्रोशपरिक्रमायां पंचदशदिनेभ्योऽधिककालो व्यत्यगात्। श्रीमाता वृंदावनात् योगेन्द्रं (योगानन्दं) भक्तिमतीरन्याश्च साकं नयन्ती हरिद्वारमगात्, हरपौढ़ीपवित्रसलिले च श्रीठाकुरस्य कांश्चित् केशान् नखांश्च विससर्ज।

हरिद्वारात् श्रीमाता जयपुरमुपतिष्ठमाना केषांचिद्दिवसानां कृते पुनरपि वृन्दावनं प्रत्यागता। ततश्च कलिकत्तामागत्य कानिचन दिनानि बलराममहोदयगृहे स्थिता। ततश्च कामारपुकुरमगच्छत्। अवसरेऽस्मिन् श्रीमाता अष्टौ नव वा मासान् कामारपुकुरेऽतिष्ठत्। श्रीठाकुरेणैकदा सा प्रोक्ता—"त्वं कामारपुकुरे स्थास्यसि, शाकं वप्स्यसि, शाकं भक्तं च खादिष्यसि, हरिनामानि च ग्रहीष्यसि।" आदर्शसात्त्विकजीवनयापनस्य कीदृशं सुन्दरं चित्रमेतत्।

तदानीन्तनं श्रीमातुः कामारपुकुरजीवनमतिक्लेशमयमभवत्, किन्तु तदीयमन्तरं तथैव दिव्यमहिम्ना संयुक्तं माधुर्यमयं चाभवत्। ओदनं शाकं चासौ निर्माति स्म, किन्तु तत्र निक्षेप्तुं लवणमसौ कस्मिंश्चिद्दिने न प्रापत्। श्रीठाकुरस्य विशिष्टा शिक्षा आसीत्—"न कस्यचिदग्रे करः प्रसारणीयः। यदि सम्भवेत्तर्हि हस्तमधोमुखीकृत्य किंचित्प्रदातुमेव चेष्टा कर्त्तव्या।" श्रीमात्रा अन्तिमदिनं यावदादेशोऽयमक्षरशः पालितः। स्वामी सारदानन्दः परवर्त्तिनि काले दुःखं प्रकाशयन्नुवाच—"तदानीं अस्माकं धारणा नेयमासीत् यन्माता लवणमपि समासादयितुं न पारयति।"

श्रीमाता एकदा प्रोवाच—"वृंदावनतः परावृत्य यदाऽहं कामारपुकुरमगमम्, जनापवादभयेन—असौ किमपि वदेत्, स किंचित् कथयेदिति विचार्य मयैकदा करकंकणे अवतारिते। विचारितं च गंगाविरहिते स्थाने कथं निवसेयम्? गंगास्नानाय गन्तुं मन आदिशत्। निरंतरं मम गंगास्नानस्याग्रह आसीत्। एकदा मया दृष्टम्—अग्रतो मार्गेण श्रीठाकुरः समायाति (भूतनहराभिमुखतः), तत्पृष्ठतश्च नरेन्द्र-बाबूराम-राखालादयो भक्ता, अन्ये च बहवो मनुष्या आसन्। मया विलोकितम्—श्रीठाकुरस्य पादान्निर्गत्य जलप्रवाहोऽग्रेऽग्रे (जलस्य धारा!) गच्छति। मया विचारितम्—अयमेव सर्वम्—अस्यैव पादपंकजात् गंगा निर्गता! शीघ्रं शीघ्रमहं रघुवीरगृहसमीपस्थजवाकुसुमवृक्षाद् बहूनि कुसुमानि त्रोटयित्वा गंगायामर्पितवती। ततः श्रीठाकुरेणाहमादिष्टा—"त्वया करकंकणे नावतारयितव्ये।..." ततः प्रभृति (लोकापवादभयात्) श्रीमात्रा करकंकणे नावतारिते।

कामारपुकुरेऽन्यदापि श्रीमातुः श्रीठाकुरस्य दर्शनमभूत्। तत्सम्बन्धे तया प्रोक्तम्—एकस्मिन् दिने श्रीठाकुरः समागत्य प्रोवाच—"कृसरान्नं भक्षय।" कृसरं निर्माय श्रीरघुवीराय भोगः समर्पितः।... ततश्चाहमुपविश्य भावावेशे श्रीठाकुरमभोजयम्।"

इतश्च श्रीमातुः कामारपुकुर-निवासासौविध्ये परिज्ञाते त्यागिभि-र्भक्तैः कलिकत्तायामागन्तुं तस्याः समीपेऽनुरोधपत्राणि लिखितुमारब्धानि। श्रीमाता कामारपुकुरे स्वश्वशुरगेहे आसीत्। तत्रान्येऽपि मानवा न्यवसन्, समाजोऽप्यास्ते स्म। सा महत्या बुद्धिमत्तया सर्वसम्मतिमादाय कलिकत्तामागमत्।

श्रीमाता कलिकत्तामाययौ। तस्या गंगाभक्तिरपूर्वाऽविद्यत। अतो भक्तैर्गंगापश्चिमतटस्थे बेलुड़ग्रामे गङ्गाया अतिनिकटतटे वर्तमान-बेलुड़मठस्य निकटवर्त्तिनि नीलाम्बरमुखर्जीमहोदयस्य भाटकगृहीते उद्यानवति गृहे श्रीमाता निवासिता। तया सार्धं काश्चन भक्तिमत्यो-ऽप्यासन्। तस्याश्च निरीक्षणभरणदायित्वं स्वामिना योगानन्देन स्वोपरि गृहीतम्। एकदा सन्ध्योत्तरकाले श्रीमाता भवनपृष्ठे समुप-विश्य ध्यानमकरोत्। पार्श्वे "पुत्री योगेन्द्रा" गोपालसुन्दरी चोपविष्टे। श्रीमातुर्मनः शनैः शनैर्निर्विकल्पदशां प्रापत्। स्पन्दनहीना सती गभीरसमाधौ न्यमज्जत्। बहोः कालादनन्तरमवबोधे जाते तया प्रोक्तम्—"अये योगेन्द्रे! मम हस्तौ कुत्र, पादौ च कुत्र स्तः?" तदापि तस्या देहे बोधो न न्यवर्तत। भक्तिमत्यः श्रीमातुर्हस्तौ पादौ च ईष-त्स्पृष्ट्वा प्रोचुः—"इमौ हस्तौ, इमौ च पादौ स्तः।" तस्मिन् दिने देहे मनस आगमनेऽधिकः समयो व्यत्यगमत्। एवमात्मानन्दनिमग्ना श्रीमाता मासषट्कं बेलुड़े तस्थौ। स्थानमिदं युगयुगान्तरं यावत् महातीर्थरूपेण परिणमयितुमेव श्रीमाता तत्र तपश्चचार, अन्यथा तत् स्थानं को जानीयात्?*

---

*श्रीमाता बेलुड़ग्रामे विभिन्नस्थानेषु तेषु तेषु कालेषु १८८८, ९०, ९३, ९५ ईसवीयवर्षेषु सर्वं मिलित्वा सार्धैकवर्षादधिकसमयं यावन्निवासमकरोत्। वर्तमानबेलुड़मठस्य भूमिः १८९८ ईसवीये वर्षे क्रीता बभूव। तदनन्तरं मठभवन-निर्माण-ठाकुरप्रतिष्ठा-मठस्थापनाः समभूवन्।

बेलुड़े निरवच्छिन्ने दिव्यानन्दे समययापनानन्तरं श्रीमाता स्वान्तरे जगन्नाथदेवस्य दुर्निवारमाकर्षणमन्वभवत्। भक्तानां प्रयत्नेन तस्याः पुरीगमनव्यवस्था समभूत्। पुरीक्षेत्रे श्रीमाता स्वसंगिनीभिः सार्कं बलरामबाबूमहोदयस्य "क्षेत्रवासी"ति नाम्नि भवने अतिष्ठत्। सा प्रायशो नित्यमेव पदातिनी जगन्नाथदर्शनार्थमगात्। बलरामबाबूमहोदयस्य पाण्डेयगोविन्दश्रृंगारी यदा श्रीमातरं शिविकामारोह्य गमनप्रस्तावमकरोत्, तदानीं तयोक्तम्—"न गोविन्द, त्वमग्रेऽग्रे मार्गं दर्शयन् व्रज, अहं तु दीनहीनाऽकिञ्चनेव तव पृष्ठतो जगन्नाथदर्शनार्थं गमिष्यामि।"……मन्दिरमुपस्थाय भावाविष्टया तया विलोकितं यत् जगन्नाथः पुरुषसिंहरूपेण विराजमानो विद्यते। स्वयमियञ्च तस्य पादसेवां विधत्ते।

श्रीठाकुरः स्थूलशरीरेण कदापि जगन्नाथदर्शनार्थं नागमत्। अत एकदा श्रीमाता श्रीठाकुरस्यैकमूर्त्तिं स्वीयवस्त्रांचले गोपयित्वा मन्दिरं नीतवती, तामेव मूर्त्तिं जगन्नाथदर्शनमकारयत्। पुर्य्यामपि श्रीमाताऽनेकशः भावतन्मयतां प्रापत्। तत्र तया गुरुत्वपरिपूर्णमेकं दर्शनमप्यनुष्ठितम्। जगन्नाथमूर्तिसम्बन्धे बहुभिर्भक्तैर्जिज्ञासिता सा प्रोवाच—"मया स्वप्ने शिवमूर्तिर्दृष्टा। ··केवलं शिवमूर्त्तिः शिवलिङ्गम्। एकलक्षशालिग्रामाणां वेदी निर्मिताऽभवत्। तदुपरि जगन्नाथशिवो व्यराजत। विमला देवी चाप्यतिष्ठत्। महाष्टम्यां रात्रौ तस्यै बलिर्दीयते। विमला तु दुर्गैवास्ते। अतः शिवस्तु स्थास्यत्येव।"

नानाभावानन्देषु विविधप्रकार दर्शनं कुर्वती श्रीमाता प्रायः चतुरो मासान् श्रीक्षेत्रमध्युवास। श्रीठाकुरेण सह तदा तस्या नित्यसम्बन्धो नित्यं मेलनमपि समभवत्। श्रीसारदादेवी तदभ्यन्तरे ईदृशं प्रेमसम्बन्धं प्राप्तवती यस्मिन् न कश्चिद् विच्छेदोऽवसादो वा बभूव। आसीत् केवलं पूर्णता-पूर्णा तन्मयतैव। जगन्नाथो "मन्नाथो" जातः। सम्पूर्णचेतनायां समस्तव्याप्तावपि श्रीठाकुरो व्यराजत। इदानीं तस्मिन्

चिरमेलनमासीत्। विच्छेदव्यवधानम् आत्मानन्दस्यासीमतायां गत्वा सम्मिलितम्।

श्रीमातुरभ्यन्तरे श्रीठाकुरस्य प्रकाशोऽयमतिशयसुन्दरोऽभवत्। स च नानारूपेषु शाश्वतभङ्गिमादिषु, प्रेमपवित्रतायां धृतिरूपे शक्तिरूपे भक्तिमुक्तिरूपेषु च प्राकट्यमगमत्। अत एव तु तस्या निर्विचारं तादृग् दयादाक्षिण्यं चासीत्। श्रीमाता स्वयमुवाच—"अहं दयाया दीक्षां ददामि। तद्दानाभावाद् रोदिति, दृष्ट्वा दया प्रादुर्भवति। अतएव कृपाया दीक्षा दीयते। अन्यथा तेन मम को लाभः? मन्त्रदाने कृते तत्पापमपि गृह्यते। चिन्तयामि, शरीरं तु यास्यत्येव—तदेतेषां किंचित्कल्याणं भवेत्।" एकस्याश्रितजनस्य कष्टमवलोक्य अभयवरदा श्रीमाता प्रोवाच—कस्माद् भयमस्ति, पुत्र, सर्वदैवाव-धारय यत् श्रीठाकुरस्तया साकं वर्त्तते, अहमपि त्वयैव सार्धमस्मि, मयि मातरि त्वया सह स्थितायां तव कस्माद् भयमास्ते? श्रीठाकुरः प्रोक्तवान्—"ये तवाश्रयार्थं समागमिष्यन्ति अन्तकालेऽहं तान् स्वहस्ताभ्यां गृहीत्वा लोकान्तरं नेष्यामि। कोऽपि यथेच्छं कुर्यात्, योऽपि पन्था रुचिकरो भवेत् तत्रैव किन्न गच्छेत्। अन्तिमसमये युष्मान् सर्वान् नेतुं श्रीठाकुरेण समागन्तव्यमेव।" आश्रितानां कर्णेषु मेघध्वनिरिव श्रीमातुरभयवाणी गुंजायमाना बभूव—"मातरि मयि युष्माभिः सार्धं विद्यमानायां युष्माकं कस्मात् किं भयमस्ति?"

श्रीसारदादेव्या शनैः शनैरवधारितं यत् श्रीठाकुरः तस्याः पूर्वमेव स्थूलदेहं परित्यज्य कथमगच्छत्। सा सम्प्रति स्वविद्यमानताप्रयोजन-साधने प्रावर्तत तथा सर्वेषु भगवतीकृपाविभाजने प्रवृत्ता च। एकदा भक्तेनैकेन जिज्ञासितम्—"मातः, अन्यान्यावताराः स्वस्वशक्तीनामनन्तर-मेव देहमत्यजन्। परमिदानीं भवतीं विहाय श्रीठाकुरः प्रागेवागच्छत्, इति कथम्?" श्रीमाताऽवदत्—"वत्स जानास्येव त्वं, जगति प्रत्ये-

कस्योपरि तस्य मातृभाव आसीत् । भुवने तस्यैव मातृभावस्य विकासाय मां अरक्षत् ।"

श्रीठाकुरेण यथा स्वस्वरूपसम्बन्धे संक्षेपतः केचिद् वृत्तान्ताः श्राविताः, तथैव यत्र कुत्रापि प्रसङ्गतः स्वकीयलीलासङ्गिनीस्वरूप-सम्बन्धेऽपि किंचित् किंचित् प्रकाशितमभूत्, तथैव तेन श्रीसारदादेवीं प्रति जगतो दृष्टिरपि समाकृष्टा । अन्यथाऽसौ केवलमादर्शनारी-मात्ररूपत एव परिचिताऽभविष्यत् । स्वयं शक्तिरूपिणी श्रीमाता महाशक्तिबलेन स्वस्वरूपमगोपयत् । तस्या आवरणस्यापावरणं मानव-शक्तिमतिरिच्यते, गुप्तलीलाभिनयोऽयं तत्कृपयैव कदाचित् कस्यचिद् भाग्यशालिनः पुरुषस्य दिव्यदृष्टौ समापतति स्म । अनन्तरमीश्वर-कोटिर्महात्मा स्वामी प्रेमानन्दः प्रोवाच—"माता केन परिज्ञातुं शक्यते ? ऐश्वर्यलेशोऽपि नास्ति । श्रीठाकुरस्य पार्श्वे तु तदापि विद्याया ऐश्वर्यमासीत्—भावसमाधिपरम्पराऽभूदेव, किन्तु मातुरेतदैश्वर्यमपि नितरां विलुप्तमभवत् । इयं कीदृशी महाशक्तिः ! यद् (पापिजनस्वरूपं) विषमस्माभिः पाचयितुं न शक्यते, तन्मात्रे समर्प्यते । माता सर्वानङ्के स्थापयति-आश्रयं प्रयच्छति ।*"

श्रीमाता पुरीतः कलिकत्तायां समागमत् । तत्र च प्रायशः सप्ताह-

* एकदा श्रीमातुर्जयरामबाट्यां ज्वरः समायातः । पादयोर्वातोऽपि प्रवृद्धः । एतद्दशायामपि श्रीमात्रा प्रोक्तम्—"अद्य न कोऽपि कृपाप्रार्थी समागमत् । श्रीठाकुरेण प्रोक्तमासीत्—'त्वया कियन्ति कार्याणि कर्त्तव्यानि सन्ति ! एको वासरो व्यर्थमतीतः ।" तत ईषदनन्तरं रात्रौ स्वामिनो ब्रह्मानन्दस्य पत्रमादाय त्रयो भक्ता आजग्मुः । पठित्वा पत्रे श्राविते; माता कातरस्वरेण प्रोवाच—"विदे-शाद् बालकाः स्वमात्रे कियन्ति रमणीयानि वस्तूनि प्रेषयन्ति ! राखालोऽन्ते मह्यमिदं ( पापिवृन्दं ) प्रैषयत् !"···अनन्तरं श्रीमात्रा भक्तेभ्यस्तेभ्योऽपि मन्त्रदीक्षा प्रदत्ता ।

त्रयमुषित्वा विवेकानन्दं, प्रेमानन्दं, मास्टरमहाशयं च सह नीत्वा आँटपुरमाययौ। कियन्ति दिनानि तत्र स्थित्वा सा कामारपुकुरमाजगाम। तदानीमपि प्राय एकवर्षमध्युष्य पुनः कलिकत्तां परावर्त्तत।

स्वजनन्याः स्वर्गारोहणानन्तरं श्रीठाकुरेण गयां गत्वा विष्णुपादपद्मे पिण्डं दातुं श्रीमाता समादिष्टा। तदा श्रीमात्रा प्रोक्तम्—"पुत्रस्य विद्यमानत्वे श्राद्धमहं करिष्यामि?" श्रुत्वेदं श्रीठाकुरो निजगाद—"ओम्, भविष्यति, भविष्यति। किमहं तत्र गन्तुं शक्नोमि? गत्वा च किमहं परावर्त्तिष्ये?" श्रीमात्रा शङ्कितया निगदितम्—"तर्हि भवतो गमनस्य आवश्यकता नास्ति।" श्रीठाकुरस्य देहत्यागानन्तरं तमादेशं स्मृत्वा तया तदानीमेव गयाधाम प्रस्थातुं निश्चयः कृतः। "वृद्धगोपालेन" (स्वामिना अद्वैतानन्देन) साकं १८९० ईसवीयहायनस्य मार्चमासे समुपस्थाय गयाकृत्यादिकं सम्पादितम्। विष्णुगयातः श्रीमाता बुद्धगयादर्शनार्थं जगाम। सम्बन्धेऽत्र तया प्रोक्तम्—"बृहति बोधगयामठे एतावन्त्यधिकानि वस्तूनि! कस्यापि वस्तुनोऽभावो नास्ति—किमपि कष्टं नास्ति। एतदवलोक्य अहं रुदितवती श्रीठाकुरं प्रार्थितवती च—"ठाकुर मम बालकानां निवासाय नास्ति किमपि स्थानम्, द्वारे द्वारे परिभ्रमन्ति। एषां कृतेऽपि एतादृशेनैकेन निवासस्थानेन भवितव्यम्। तदा ठाकुरस्येच्छया बेलूड़मठोऽयमभूत्।"

एतस्य कतिचिद्दिनानन्तरं श्रीठाकुरस्य त्यागिभिर्भक्तैर्बराहनगरे एकस्मिन् जीर्णशीर्णे भूतावासभवने कथंचित् पादसंस्थापनस्थानमधिगतम्। अन्नैर्विना कृच्छ्रसाधनस्य परा काष्ठा व्यत्यचलत्। श्रीमातुस्तत्प्रार्थनाया अनन्तरं शनैः शनैः सर्वतोऽवस्थायां परिवर्त्तनमारब्धम्।*

---

* श्रीरामकृष्णसंघस्थितिप्रसारहेतवे श्रीमातुर्मनस आकुलता एकया तदानीन्तनवार्त्तया परिज्ञायते। कोयालपाड़ास्थानस्यैकस्मै संन्यासिने श्रीमाता प्रोवाच—"अहो! एतदर्थमहं श्रीठाकुरस्य समीपे कियद् रोदितवती प्रार्थनां च

गयातः कलिकत्तायां परावृत्य कियन्ति दिनानि मास्टरमहाशयगृहे कियन्ति च बलरामबाबूगेहे स्थित्वा, ततो बेलुड़ग्रामस्य घुसुड़ीश्मशानपार्श्वे भाटकगृहीते गृहे श्रीमाता न्यवात्सीत्। तत् स्थानमसौ प्रायशो मासचतुष्टयमध्युवास। अत्रैव श्रीमातुरजस्रमाशीर्वादं शिरसि धारयन् स्वामी विवेकानन्दः परिव्राजकरूपेण बहुदिवसकृते बहिरगच्छत्।

घुसुड़ीस्थितगृहस्य निवासकालान्तिमभागे श्रीमाता कठिनेन रक्तामाशयरोगेण समाक्रान्ता बभूव। अतस्तां बराहनगरस्य सौरीन्द्रमोहनठाकुरगेहं भाटकगृहीतं चिकित्सार्थमानिन्युः। बराहनगरादियं कलिकत्तायां बलरामबाबूवेश्मनि समागच्छत्। दुर्गापूजाया अनन्तरं च कामारपुकुरमुपढौकमाना जयरामबाटीं जगाम।

---

कृतवती। तदैव तु तस्य कृपयाऽद्य कथमपि मठो निर्मितः।···श्रीठाकुरस्य देहत्यागानन्तरमिदमभिधाय प्रार्थनामकरवम्—ये भवदीयं नाम गृहीत्वा गेहादभिसरिष्यन्ति, तेषां भोजनपरिधानन्यूनता कदापि न भवेत्, सर्वे भवन्तं, भवतो भावोपदेशाश्च गृह्णन्त एकत्र तिष्ठेयुः। संसारतापसन्तप्ता जनास्तेषां त्यागिशिष्याणामभ्यर्णमागत्य भवत्कथामाकर्णयन्तः शान्तिमधिगच्छेयुः। सर्वकल्याणार्थमेव तु भवत आगमनमभवत्। तेषां त्यागिसंतानानामाश्रयाभावात् पथभ्रंशनमवलोक्य मम मनो व्याकुलीभवति। तदनन्तरं नरेन्द्रेणैतत् (मठस्थापनादिकं) सर्वं शनैः शनैः सम्पादितम्।

श्रीमातुर्मातृभक्तिरसाधारणी। तस्या जननी श्यामासुन्दरी चापि सातिशयसात्त्विकप्रकृतिरासीत्—अत एव हि देवी तद्गर्भमागच्छत्। सा एतादृशी भक्तिमती बभूव यत् जगद्धात्री देवी अयाचितभावतो दर्शनं दत्वा तदर्चनमगृह्णात्। तस्मिन् समये श्रीठाकुरः स्थूलदेहेन दक्षिणेश्वरमध्युवास। स किल प्रसन्नस्य (श्रीमातुः सहोदरभ्रातुः) मुखात् सर्वमाकर्ण्य प्रावोचत्—"गच्छ गच्छ, गत्वा पूजामनुतिष्ठ, एतेनैव तव

मङ्गलं भविष्यति ।" एतत्पूजासम्बन्धे "श्रीमारकथा" ( श्रीमातुः कथा ) नाम्नः पुस्तकात् परिज्ञायते—..."जगद्धात्रीपूजा बभूव । सम्पूर्णोऽपि ग्रामो निमन्त्रितः ।...प्रतिमाविसर्जनकाले मम माता जगद्धात्री प्रतिमा-कर्णे प्राह—"मातर्जगद्धात्रि, अग्रिमे वर्षे पुनः समागन्तव्यम् । अहं वर्षं यावत् त्वदर्थं वस्तूनि संगृह्य स्थापयिष्यामि ।"

अग्रिमे वर्षे मम माता मामगादीत्—'पश्यत, त्वयाऽपि किंचिद् देयम्, मम जगद्धात्र्याः समर्चनं सम्पत्स्यते ।' मया प्रोक्तम्—'भवतु, वारमेकं पूजनमभूत् । पुनरेतत् किमर्थम् ? नाहं किमपि सहायं कर्तुं समर्था ।' परं रात्रौ स्वप्ने दृष्टम्—तिस्रः देव्यः समागत्योपस्थिताः सन्ति । अरे रे !, इदानीमपि स्मृतम्—जगद्धात्री, तस्याश्च द्वे सङ्गिन्यौ जया विजया च । ताभिः प्रोक्तम्—'किं वयं गच्छेम ?' मया पृष्टम्—'काः यूयम् ?' देव्या निगदितम्—'अस्म्यहं जगद्धात्री ।' मयोक्तम्—'न गन्तव्यम् कुत्र गमिष्यथ ? तिष्ठत, मया तु गमनाय यूयम् नोपदिष्टाः ।'... तत एव हायनात् जयरामबाट्यां प्रतिवर्षं जगद्धात्रीपूजा बोभूयमाना समायाति ।

* * *

तदानीं काले श्रीमाता बहूनि दिनानि जयरामबाट्यामासीत्, पश्चाच्च १३०० वङ्गाब्दस्याषाढमासे प्रायशः सा पुनः कलिकत्तायां परावर्वृते । अत्रावसरेऽपि भक्तैर्बेलुड्ग्रामे भाटकेन गृहीते नीलाम्बर-बाबूवेश्मनि सा संस्थापिता । तदानीं बेलुड़े तया 'पंचतपोव्रतं' समनुष्ठितम् ।

श्रीठाकुरशरीरपरित्यागस्य कियत्कालानन्तरत एव श्मश्रुलेनैकेन सूक्ष्मदेहिसंन्यासिना पंचतपोव्रतानुष्ठानाय वारं वारं श्रीमाता प्रबोधिताऽभवत् । तस्य ( सूक्ष्मदेहि ) संन्यासिनो विशिष्टाग्रहेणैवासौ पंचतपोव्रतमन्वतिष्ठत् । विषयेऽस्मिन् श्रीमातुर्वर्णनेनैव परिज्ञायते—

'…पंचतपोव्रतस्यायोजनमभूत् । तदानीमहं बेलुड़े नीलाम्बरबाबूगृहेऽतिष्ठम् । चतुर्दिक्षु गोमयाग्निः, उपरि च प्रखरसूर्यसन्तापः । प्रातः स्नात्वा समीपमागत्यापश्यम्—अग्निर्नितरां प्रखरं प्रज्वलति । महद्भयमुत्पन्नं मनसि—कथमिव अस्य मध्ये गत्वा सूर्यास्तं यावदुपवेक्ष्यामि ? अनन्तरं श्रीठाकुरस्य नाम गृहीत्वा प्रविश्यापश्यम्—अग्नौ नास्ति कश्चित्सन्तापः । एवं सप्त दिनानि पंचाग्निमतपम् । किन्तु पुत्र, शरीरवर्णो मसीव कृष्णतां गतः । तदनन्तरमसौ संन्यासी नावलोकितः ।".

एतस्मिन्समये श्रीमातुरेकमलौकिकं दर्शनमभवत् । उद्यानस्याभिमुखे सुरसरिद् वहति । मात्रैकदा दृष्टम्—श्रीठाकुरो गङ्गायामवततार । सहसैव तस्य शरीरं गंगायां न्यलीयत । गंगा श्रीठाकुरश्चैकतां गतौ । इतश्च स्वामी विवेकानन्दो "जय रामकृष्ण; जय रामकृष्ण" इत्युच्चारयन् उभाभ्यामपि कराभ्यां तेन गंगाजलेन सर्वेषां शिरस्सु प्रोक्षणमकार्षीत् । तस्य च ब्रह्मवारिणः स्पर्शेन सर्वे सद्यो मुक्ततामगच्छन् । मुक्तिवारिस्वरूपश्रीरामकृष्णदेवदर्शनं तत्, श्रीमातुर्मनसि प्रभावमेतावन्तमपातयत्, येन सा बहूनि दिनानि गंगायां नावततार । सा प्रोवाच—"इयं गंगा तु श्रीठाकुरस्य देहः, अत्र कथं पादौ प्रक्षेप्स्यामि ?"

चतुष्पञ्चमासान् बेलुड़े कठोरतपस्यानन्तरं श्रीमाता किञ्चित्कालाय जयरामबाटीमगच्छत्, किन्तु बहूनां विशिष्टभक्तानामान्तरिकानुरोधेन श्रीमाता पुनः कलिकत्तामागत्य तैः सह विहारप्रान्तीयशाहाबादमण्डलान्तर्गते कैलवारस्थाने गत्वा द्वौ मासौ व्यत्ययापयत् । तत्र वन्यहरिणानां समूहान् सायकवेगवत् पलायमानानवलोक्य श्रीमाता बालिकेव समुच्छ्वसती बभूव । कैलवारात् परावृत्य सा पुनः कतिचिन्मासान् बेलुड़मध्युवास ।

स्वामिनः प्रेमानन्दस्य भक्तिमती जननी स्वगृहे आंटपुरे 'दश-

भुजाया' दुर्गादेव्या आराधनार्थमायोजनमकार्षीत्। तस्या विशेषाग्रहेण तत्पूजामुपलक्ष्य आंटपुरे श्रीमात्रापि गन्तव्यमभवत्। घटनामेतामुल्लेखयता स्वामिना विवेकानन्देन अमेरिकातः एकस्मै गुरुभ्रात्रे पत्रं लिखितम्—"बाबूरामस्य मातुर्बुद्धिर्वृद्धतया नाशमगच्छत्। तदैव तु जीवितदुर्गामपहाय मृन्मयीं दुर्गामाराधयितुं प्रवृत्ताऽऽस्ते।" पूजाया अनन्तरं श्रीमाता आंटपुरात् जयरामबाटीमाजगाम।

तस्मिन् समये श्रीमातुर्मनसि स्वीयां जननीं तीर्थदर्शनार्थं नेतुं बलवती समीहा प्रादुरभूत्। स्वकीयया जनन्या कैश्चिदन्यसम्बन्धिभिश्च साकमसौ कलिकत्तामुपतिष्ठमाना काशी-वृंदावनादितीर्थानां दर्शनाय प्राचलत्। प्रायशो मासत्रयं तीर्थवासानन्तरं सा कलिकत्तामाययौ। स्वीयान् मातृप्रभृतीन्* जयरामबाटीं संप्रेष्य प्राय एकमासं च श्रीमाता मास्टरमहाशयस्य कलूटोलास्थे वेश्मनि तस्थौ। अनन्तरं निजजनन्याः स्वीयभ्रातुश्चाह्वानेन श्रीमाता त्वरितमेव जयरामबाटीं प्रतस्थे। प्राय एकवर्षं तत्र स्थित्वा सा पुनः कलिकत्तां प्रत्याजगाम। तदानीं काले भक्तैः पञ्चषमासान् यावत् बागबाजारस्य गङ्गातटे भाटकगृहीते गोदामगृहेऽसौ निवासिता। शनैः शनैः भक्तसंख्यया सह दर्शनार्थिनां कृपैषिणां संमर्दो ववृधे।

पुनर्जयरामवाटीमागत्य श्रीमाता सार्धैकवर्षमतिष्ठत्। तत्पश्चाद् यदाऽसौ कलिकत्तायाम् (१३०५ वङ्गाब्दस्य वैशाखे) आययौ, तदानीं बागबाजारस्य बोसपाड़ानामकवीथ्यामेकत्र भाटकगृहीते वेश्मनि वासिताऽभवत्।

तदानीमेव स्वामी विवेकानन्दो भारतं प्रत्यावर्त्तत। प्रत्यावर्त्तमानेनैव तेन बेलुड़े एकस्य स्थायिनो मठस्य निर्माणाय भूमिः क्रीता।

---

* १३१२ बंगाब्दे (सन् १९०६ ई०) श्यामासुन्दरी देवीलोकं प्रतस्थे। वृद्धाया मनसि एकमात्रकामना ह्यियमेवासीद् यत् जन्मजन्मन्यहं सारदां कन्यारूपेण प्राप्नुयाम्।

सामयिकरूपेण नीलाम्बरबाबूगृहे भाटकगृहीते एव बेलुड़मठः समानीतः। महता वेगेन मठनिर्माणकार्यं प्रचचाल।

१८९८ ईसवीयवर्षे दीपावली-(कालीपूजा)दिवसे स्वामिमहाशयः संघजननीं श्रीमातरं बागबाजारतः नवीनमठप्राङ्गणमानिनाय। तत्रागत्य श्रीमात्रा नैजस्य सर्वदा पूजनीयस्य श्रीठाकुरस्य चित्रमभ्यर्चितम्।* श्रीरामकृष्णदेवो मठेऽधिष्ठितोऽभूत्। बेलुड़मठो महातीर्थरूपेण परिणनाम।

बेलुड़मठस्य स्थानविषये श्रीमाता प्रावोचत्—"अहं नित्यमेवापश्यम् यत् श्रीठाकुरो गङ्गाया उपरि परे पारे—यत्रायं मठः—रम्भोद्यानमध्ये निवसति। तदानीं मठो न निर्मितोऽभूत्।…" श्रीमातुः कथनेनेदमेवावधार्यते यत् श्रीठाकुर एव बेलुड़मठस्थानमिदं मनोनीतमकार्षीत्। तस्य विशिष्टेनेङ्गितेनैव स्थानेऽत्र मठः संस्थापितोऽभवत्।

तदनन्तरं दिसम्बरमासस्य (१८९८ ई०) पवित्रपुण्यतममुहूर्त्ते बेलुड़स्य भाटकगृहात् आत्मारामस्वरूपं श्रीरामकृष्णदेवस्य भस्मावशेषपूर्णपात्रं स्वामिमहोदयः स्वस्कन्धोपरि संस्थाप्य स्थायिनि मठेऽत्र समानीय युगसहस्राणां कृतेऽत्र स्थाने तस्य स्थापनामकरोच्च। जागतिक इतिवृत्ते एकोऽयं महास्मरणीयो दिवसः। अनन्तरं च जनवरीमासस्य द्वितीये दिने (१८९९ ई०) मठः पूर्णरूपेण नवीने मन्दिरेऽत्र समागमत्। तदनन्तरं त्रिचतुर्वर्षाणि यावत् श्रीमाता

---

* स्वनित्योपासनीयश्रीठाकुरचित्रसम्बन्धे श्रीमाता प्रोवाच…"इदमतिसदृशम्।…अहमन्यान्यदेवताश्चित्रैः साकं स्थापयित्वा एनदप्यपूजयम्। तदानीमहं नौबतवेश्मनो निम्नस्थे प्रकोष्ठे न्यवसम्। एकदा श्रीठाकुरः समागतः। चित्रमवलोक्यावोचत्—'अरे, त्वयैतत्सर्वं किमनुष्ठितमास्ते?'…अनन्तरं दृष्टम् यत् तेन बिल्वपत्राणि पूजासम्भारं च वारमेकं वारद्वयं वा चित्रे समर्प्य पूजनं कृतम्। तदेवैतच्चित्रमस्ति।" श्रीरामकृष्णदेव ईश्वरबुद्ध्या स्वचित्रपूजनं विधायात्मानं जगत्पूजनीयं कृतवान्।

कदाचित् जयरामवाट्यां कदापि च कलिकत्तायां तस्थौ। कलिकत्तामागत्य सा बागबाजारविभागस्य कुत्रापि भाटकभवने न्यवात्सीत्।

१८०१ ईसवीयवर्षे महता समाराहेण बेलुड़मठे श्रीस्वामिमहाशयः प्रतिमायां दुर्गापूजामकरोत्। 'जीवितदुर्गास्वरूपा' श्रीसारदादेवी तेन मठस्य पार्श्वस्थिते नीलाम्बरमुखर्जीमहोदयस्योद्याने संरक्षिता। यथावसरं श्रीमाता मठमागच्छत्—देव्याः प्रबोधनमभूत्। आनन्दमय्या आगमनेन पूजाया दिनचतुष्टयं महानानन्दोत्सवोऽभूत्। बहवो जनाः श्रीमातुर्दर्शनमासाद्य धन्या बभूवुः। एकतो 'दीयतां भुज्यताम्' अपरतश्च 'जय दुर्गे, जय मातः' इति ध्वनिभिर्गङ्गाया वक्षःस्थलं प्रतिध्वनितमभवत्।

—:❀:—

४

श्रीरामकृष्णदेवस्य देहत्यागानन्तरं श्रीसारदादेव्या अपार्थिवमनसः साधारणे धरातले संस्थापनमसम्भवमभवत्। तदीयं मनः स्वरूपे विलीनतां प्राप्तुमसीमाभिमुखमधावत्।* एकतः श्रीठाकुरश्च वारं वारं तां निरुन्धानो युगकार्यपरिपूर्त्तये श्रीसारदादेवीं नरशरीरे स्थापयितुमचेष्टत। श्रीसारदादेव्या मर्त्यधामनि स्थापनाय कस्यचित् मायापूर्णस्यावलम्बनस्य विशेषप्रयोजनमभूत्। श्रीरामकृष्णेन तस्य पूर्णा व्यवस्था कृताऽऽसीत्। एतस्याभासः श्रीमातुः कथनेन लभ्यते—"···श्रीठाकुरदेहत्यागस्यानन्तरं संसारे न किमप्याकर्षणमासीत्, मनोऽवसादपरिपूर्णमभूत्। अहं प्रार्थनामकरवम्—'सम्प्रति संसारेऽत्र मम निवासेन को लाभः ?' एतस्मिन्नेव काले सहसैकमलौकिकदृश्यमवलोकितम् यदेका रक्तवसनं धारयन्ती दशवार्षिकी द्वादशवार्षिकी वा बालिकाऽभिमुखे भ्रमति। श्रीठाकुरस्तां दर्शयन्नाह—एनामाश्रित्य तिष्ठ। तव सन्निधानेऽत्रान्येऽपि कियन्तो मानवा आगमिष्यन्ति।' इत्युक्त्वा द्वितीयक्षण एवासावन्तर्दधे। बालिकां

---

* इतः पूर्वमपि यथास्थानं मया श्रीमातुः स्वरूपलीनताचेष्टाया उल्लेखः कृतः। बेलुड़निवाससमये तस्या निर्विकल्पसमाधिरभूत्—स च तस्याः सङ्गिनीभिर्दृष्टः सूचितश्च। किन्त्वेतस्य समाधेः श्रीमातुर्जीवनेन सह कः सम्बन्ध इति श्रीमातुर्मुखादेव परिज्ञातमासीत्। श्रीमात्रा परवर्त्तिनि काले एकस्मै संन्यासिने शिष्याय वार्त्ताप्रसंगेनैवं प्रोक्तम्—"तस्मिन् काले (बेलुड़मठनिवासकाले) रक्तज्योतिर्नीलज्योतिःप्रभृतिषु ज्योतिष्षु मनो लीनममभवत्। द्विचतुर्दिनानि एवं स्थितौ सत्यां शरीरं स्थातुं नाशकत्।"

तां पुनर्नाहं द्रष्टुमशक्नवम्। ततश्चैकदाऽत्रैव स्थाने (जयरामबाट्याम्) अहमुपविष्टाऽऽसम्। कनिष्ठा बधूः (राधूमाता) तदानीमतिविकृतमस्तिष्काऽभवत्। बहुजीर्णशीर्णदुकूलकन्थाः पार्श्वे पिधाय ताश्च समाकर्षन्ती सा सरोऽभिमुखं व्रजन्ती बभूव। तस्याः पृष्ठतश्च जानुभ्यां गच्छन्ती रुदती राधूश्चापि वव्राज। तामवलोक्य हृदये महत्कष्टमभूत्। अहं धावन्ती भूत्वा राधूमङ्केऽस्थापयम्। मनस्यभूत् सत्यमेव हीमां यद्यहं न द्रक्ष्यामि, तदाऽन्यः को द्रक्ष्यति? पिता नास्ति, माताप्युन्मादिनी। मनस्येवं विचारयन्त्या मया निजांके तस्यां स्थापितायां पुरतः श्रीठाकुरो दृष्टः। तेनाभिहितम्—'इयमेव सा बालिका, एतस्या आश्रयं गृहीत्वा तिष्ठ, इयं 'योगमाया' अस्ति।' १९०० ईसवीयवर्षस्य जनवरीमासस्य २६ तारिकायामेतस्या जनुरभूत्।

ततो नरदेहत्यागतः पूर्वं यावत् श्रीमातुरिदं 'योगमायाश्रितं' जीवनमतिरहस्यमयमभवत्। एतस्या 'योगमायाया' अवलम्बनेन तदीयमसांसारिकं मानसमपि सांसारिकमिव जातम्। तदानीन्तनः संसारिणीरूपेण घोरमायाबद्धायाः श्रीमातुरभिनयो वस्तुतोऽत्यद्भुतो बभूव। अयमभिनयोऽस्या इयान् निर्दोषः सर्वाङ्गसुन्दरश्चासीत्, येन श्रीमातुस्त्यागिनः सन्ताना अपि—ये जीवितजगदम्बारूपेण तां पर्यपूजयन्—चकिताश्चक्रिरे।

मायाबद्धजीववत् श्रीमातुराचरणमवलोक्य संन्यासिन एकस्य मनसि सन्देह उदपद्यत। तेनैकवारं वारद्वयं वा श्रीमाताऽभिहिता—"भवत्या ईदृक् 'राधू राधू' कथं क्रियते? राधूपरि भवत्या अतिशयासक्तिर्विद्यते।" श्रीमात्रा प्रोक्तम्—"किं कुर्यां पुत्र, अहं स्त्रीजातिरीदृश्येव।" संन्यासिना तेनैकदा पुनरप्ययं प्रश्नः कृतः। तदानीं सहसैव मातुः स्वरे परिवर्तनमभवत्। सा किञ्चिदुत्तेजिता भूत्वा प्रोवाच—"त्वयैतत् सर्वं किमिव ज्ञास्यते?...मादृशी कामप्यन्विष्य निर्दिशतु।" इदमाकर्ण्य संन्यासिनः सन्तानस्य सन्देहो व्यपागमत्।

प्राकृतिके लीलामञ्चे पटपरिवर्त्तनवत् श्रीसारदादेव्या जीवने सहैव निवसन्तौ अन्धकारालोकौ महतीं मनोरमां छविमेकां प्रस्तुतां चक्रतुः। नित्यस्य लीलायाश्च कीदृक् सहज आगमो गमश्च! एकं पदं तया नित्ये स्थापितं, द्वितीयपदेन तु लीलानृत्याभिनयः प्रदर्शितः।

परन्तु आत्मीयानां दौरात्म्यात्याचाराभ्यामुत्तप्तीभूय श्रीसारदामाता जयरामबाट्यामेकदा स्वस्वरूपेङ्गितं कृत्वोक्तवती—"पश्यत, यूयं मामधिकं न पीडयत। अस्मिन्नन्तरे (स्वशरीरं लक्ष्यीकृत्य) यो विद्यते स यद्येकवारं कस्यचिदप्युपरि फूत्करोति तर्हि ब्रह्मविष्णुमहेशेषु न कोऽप्यलं तस्य रक्षायै।"

अन्यस्मिन्समये एकदा कोआलपाडायां राध्वा अत्याचारवार्तामुल्लिख्य साऽब्रवीत्—"अवलोकय वत्स, इदं शरीरं (स्वशरीरं निर्दिश्य) देवशरीरमिति जानीहि। तदिदं कथमधिकमत्याचारं सोढुं समर्थं भवेत्? भगवन्तं विना का मानवी तनुरेतादृशमत्याचारं सोढुं शक्नुयात्?...

दृश्यतां पुत्रि, मयि (अस्मिन्देहे) स्थितायां न कोऽपि मां याथार्थ्येन ज्ञातुं शक्ष्यति। परन्तु प्रयातायां मयि सर्वेऽपि मम स्वरूपं ज्ञास्यन्ति।"

कदाचित् तया स्वस्वरूपविषये इङ्गितं कृतमासीत्। जयरामबाट्यां राधूजननी उन्मत्ता सुरबाला मातरं प्रति अनेकशः कटुवचनान्युक्तवती। श्रीमाता मानपूर्वकं सर्वमसहत। अनन्तरं यदा सा कटुवचनपरम्परा मर्यादातिक्रमं कृतवती तदा श्रीमाता गम्भीरस्वरेण प्रोवाच—"त्वं मां साधारणव्यक्तिरूपेण मा भावय। त्वया मां प्रति पितृमातृनामोल्लेखपूर्वकमतिकटुवचनान्युक्तानि। किन्तु नाहं तवापराधं गणयामि। तानि कटुवचनान्यपि केवलं साधारणशब्दमात्रं मन्ये। यद्यहं त्वामपराधिनीं विचारयामि तर्हि किमस्ति तव कश्चिद्

रक्षोपायः? अहमस्मिन्नेव क्षणे सर्वं मायाजालं कर्तितुमपारयम्। ज्वलत्कर्पूर इव कस्मिन्नपि दिनेऽदृश्यतां गमिष्यामि। तदा त्वया मम वार्ताऽपि न लप्स्यते।" श्रुत्वैतदुन्मत्ता सुरवालाऽकस्मात्स्वकण्ठस्वरं मन्दीकृतवती।

* * *

श्रीमातुः राधूः वयस्का युवती बभूव। तस्या विवाहो जातः, एकः सन्तानोऽपि। योगमायया नानाविधमायाविस्तारेण श्रीसारदादेव्या मानसमाच्छादितम्। विक्षिप्तायाः पुत्री राधूश्चापि अर्धविक्षिप्तेव बभूव। एतेन श्रीमातुर्मनसि महत्यशांतिश्चिन्ता च प्रासरत्। मायापाशे समधिकबद्धेव जाता। अहिफेनमन्तरेण राधूकार्यं न चलति। सा उपविष्टा तिष्ठति, खादति, ददाति, सर्वमपि विदधाति। किन्तु यदि केनापि काचित् त्रुटिः क्रियते स्म तदानीं तस्या महान् मानोऽभिमानश्च समुदपद्यत। श्रीमातुरुपरि नित्यमसौ 'गाली' वृष्टिमकरोदत्याचारवर्षणं चापि। राधूः निजां मातरं 'मुण्डी मा' इत्यभ्यधात्, श्रीमातरं 'मा' शब्देनाह्वयत्। 'मा'-शब्देनाह्वानमाकर्ण्यैव तस्या मन आन्दोलितमबोभूयत। एकदा राधूः अहिफेनस्य कृते हठमकरोत्। श्रीमाता विकृतिं गत्वा जगाद—"राधु, न पुनरेवम्, उत्तिष्ठ! इदानीं न मया सोढुं शक्यते। तव हेतोर्मम सर्वं धर्मकर्म व्यत्यगच्छत्।" एभिर्मृदुरोषवाक्यै रुष्टा राधूः पुरस्थितपेटातो महद्वृन्ताकमेकमादाय वेगेन मातुः पृष्ठमताडयत्। 'गुम' शब्दोऽभूत्। वेदनया श्रीमातुः पृष्ठे किणमभवत्। त्वरितमेव पृष्ठे तत्र शोथो जातः। तदानीं श्रीमाता श्रीठाकुरचित्राभिमुखं पश्यन्ती करौ बद्ध्वा प्रोवाच—"ठाकुर, एतस्या अपराधो न गणनीयः, इयमबोधा विद्यते।"

तदैव स्वीयं पादरजो राधूशिरसि प्रक्षिपन्ती श्रीमाताऽगादीत्—"राधु, मां प्रति श्रीठाकुरः कदाप्येकं कठोरवाक्यमपि न प्राह—त्वं चेयत् कष्टं ददासि? त्वया किं परिज्ञायते,—मम स्थानं कुत्रास्ते?

यूयं किं जानीथ यदहं कथं युष्मदर्थमत्र तिष्ठामि ?" राधूः तदानी-मरोदीत्। मातुर्मनो द्रवीभूतमभूत्। यतो लीलाभिनयोऽयं प्राचलत्।

अन्यत्रापि कदा कदाचिन्माता स्वस्वरूपसम्बन्धे आभासं प्रादात्। राधूनिमित्तं कथं तदीयं मनो मायाच्छन्नमभवत्—एतस्यापि तथा संकेतो दत्तः। अस्या घटनाया अनन्तरमेकदा मात्राभिहितम्—"पश्यत, सर्वेऽभिदधते यदहं 'राधू राधू' कथयन्ती व्याकुलीभवामि। अस्या उपरि मम महती आसक्तिः। इयमासक्तिर्यदि मयि नाभविष्यत्, तर्हि श्रीठाकुरस्य शरीरत्यागानन्तरं शरीरमप्येतन्नास्थास्यत्। निजकार्यार्थमेव तेन "राधू राधू" व्याहृत्येदं शरीरं संरक्षितम्। यस्मिन् दिने मन-स्ततश्चलिष्यति, तस्मिन् दिने पुनरिदं शरीरं न स्थास्यति।"

इयमेकैव माया नानाभावेषु, दयाकरुणाविगलितस्नेहादिविभिन्न-रूपेषु च प्रकटिताऽभूत्। अस्या मायाया अवलम्बनमन्तरा तस्या जीवोद्धाररूपमहत्कार्यमपूर्णमेवास्थास्यत्। अस्या मायायाः कारणादेव तु तां सहस्रशो नरा नार्यश्च कन्या-भगिनी-भ्रातृजाया-प्रतिवेशिनी-जननी-गुरुरूपेण, दया-करुणा-सेवा-सान्त्वना-स्वरूपेण, स्नेह-ममता-भुक्ति-मुक्ति-रूपतश्च प्राप्नुवन्। एतां मायासक्तिं विना सर्वेऽपि वञ्चिता अभविष्यन्।

श्रीरामकृष्णजीवनमेतावदुच्चस्वरे निबद्धमासीत् यत् तेन सार्धं स्वस्वरसम्मेलनं साधारणमानवानां कृते सर्वथाऽसम्भवमेव। त्यागे, पवित्रतायां, परमोच्चाध्यात्मिकानुभूतौ, किम्बहुना, सर्वस्मिन्नेव विषयेऽसौ सर्वोच्चस्तरमासादयत्, यत् किल साधारणमानवगतेः सर्वथा परतरमासीत्। निरन्तरमसौ भगवत्येवावातिष्ठत—तस्मा-दीषदपि नासौ नीचैरवातरत्। तस्य जीवनं एवं तीव्रप्रकाशमयमि-वासीद् यो हि साधारणमानवचक्षूंषि चमत्कृतान्यकार्षीत्। वयमेवं पश्यामो यत् श्रीरामकृष्ण एतादृशमेकं जीवनमादाय समागच्छत्—यत्र

( श्रीमातुर्जीवने ) निखिलैरेव मानवैः—यद्वधि तेषां दृष्टिर्गच्छति स्म—पूर्णतैव दरीदृश्यते। संन्यासिनः, गृहिणः, बालकाः, बालिकाः, निम्नोच्चवर्णाः, पवित्रापवित्राः, अन्धखञ्जबधिराः, सबलदुर्बलाः सर्वे मनुष्या एव तत् ( मातुर्जीवनं ) परमात्मीयरूपेण निजान्तरंगभूतमिव प्राप्नुवन् ।

श्रीठाकुरो विषयासक्तानां सान्निध्यमपि सोढुं नाशक्नोत् । तेषां छायाऽपि यदि तदुपरि पतेत् , तदापि तेन कष्टमनुभूयते स्म । देवालयेषु देवदेवीसान्निध्ये स सदैव स्वजीवनं व्यतीयाय । एकतो यदा श्रीसारदादेवी श्रीरामकृष्णरूपदेवतामाश्रित्यातिष्ठत् , निर्विकल्पे समाधौ न्यमज्जत्—भावावेशे कदाचिदहसत् , कदाप्यरोदीत् , तदा सा स्वकीयानां बन्धुबान्धवानां, विक्षिप्ताविक्षिप्तानां, प्रतिवेशवासिनां च प्रयत्नपूर्वकं सानन्दं सपर्य्यामकरोत् । सा सर्वविधजनानां सम्बन्धबन्धने विद्यमानाऽपि निर्विकारा सती तस्थौ । पुनर्माता भागीरथीव सर्वानेव पावनान् धन्यांश्चाकार्षीत् । कल्याणरूपिण्याः स्पर्शेन सर्वे ऐहलौकिकं पारलौकिकं च कल्याणं प्राप्ता अभूवन् । स्वामिना प्रेमानन्देन प्रोक्तम्—यूयमपश्यत, राजराजेश्वरी भूत्वाऽपीयं स्वेच्छयाऽकिंचनेव गृहं लिम्पति, पात्राणि मार्जयति, सूर्पेण तण्डुलान् परिशोधयति, किमन्यत्—भक्तानामुच्छिष्टमपि स्वच्छं विदधाति । श्रीमाता जयरामबाट्यां चापि गृहस्थान् गृहधर्मं शिक्षितुमेवैतावत् कष्टमसहत। अस्यामसीमधैर्य्यम्, अपरिसीमदया, सर्वोपरि च—परिपूर्णमभिमानराहित्यमासीत् ।

श्रीठाकुर आसीदादर्शसंन्यासी। श्रीसारदादेव्या जीवने संन्यासस्य, सांसारिकतायाश्चापूर्वं सम्मिश्रणमभवत् । श्रीठाकुरः पणानि रूप्यकाणि न स्प्रष्टुमशक्नोत् करौ भुग्नतां गतौ बभूवतुः। परं श्रीमाता रूप्यकाणि 'मालक्ष्मी' रित्यवधार्य शिरसाऽस्पर्शयत्। अर्थ एव सर्वानर्थनिदानमिति तयाऽपि परिज्ञायते स्म । श्रीठाकुरेणैव तयाऽपि साधुरीत्याऽवधार्यते स्म । श्रीठाकुरस्य समीपे सर्वं मिथ्या, जगदपि

मिथ्यैवासीत्। स प्रोवाच—"अरे रामलाल, यद्यहं जगत् सत्यम-ज्ञास्यम्, तर्हि तदानीमेव कामारपुकुरं ग्रामं सुवर्णमण्डितमकरिष्यम्। मया ज्ञायते, सर्वमेतदसत्यम्—केवलमेकः परमात्मैव सत्यः।" किन्तु श्रीमातुर्निकटे सर्वं सत्यमिवाभूत्—एतादृश एव तस्या व्यवहारः। उभयोर्जीवनमापाततः परस्परविरोधिवत् प्रतीतम्, किन्तु तदन्योन्य-परिपोषकमेव बभूव। एकं यदि वेदरूपं, तर्ह्यपरं तद्भाष्यस्वरूप-मासीत्। द्वयमेवासीमगृहेऽन्योन्यसमीपे स्थितमिवाभूत्।

'अद्वैतज्ञानमञ्चले निबध्य' संसारे केन भावेन स्थातुं शक्यते, एतस्यादर्शः श्रीसारदादेव्या स्वचरित्रेण परिदर्शितः।

* * *

जयरामबाट्यां भक्तसम्मर्दो निरन्तरं परिववृधे। जयरामबाटी-महातीर्थमहत्त्वं यात्रिणां 'जय मातः' इति ध्वनिना समुदघुष्यत। महाशक्त्या दुर्वारेणैकेनाकर्षणेनाकृष्टाः संन्यासिनो गृहस्थाः, पुरुषाः, स्त्रियः, सर्वे दूरतः समाययुः। बहुदिवसेभ्यः पूर्वं सारदायाः किमपि सन्तानं नावलोक्य श्यामासुन्दरी सावसादं प्रायशोऽवोचत्—"एतादृश-विक्षिप्तजामात्रा साकं सारदाया मया विवाहः कारितः, हन्त! गार्हस्थ्यं न प्राचलत्, न कोऽपि मातृशब्दोच्चारणपरायणः सन्तानो जातः।" एकदा श्रीठाकुरस्य वृत्तान्तोऽयं कर्णगोचरीबभूव। तदा तेन प्रोक्तम्—"जननि, एतदर्थं त्वया दुःखिन्या न भाव्यम्, भवत्पुत्र्या एतावन्ति अपत्यानि भविष्यन्ति त्वया चानन्तरं द्रक्ष्यते—यत् चतसृभ्यो दिग्भ्यो 'मा-मा' इति ध्वनिमाकर्णयन्तीयं समुद्विग्ना भविष्यति।" श्रीराम-कृष्णस्य भविष्यवाणीयमक्षरशः सत्यरूपेण परिणमन्ती बभूव। यदि साधारणजननीव सा केवलं कतिपयसन्तानानां माताऽभविष्यत् तर्हि कथं सा 'विश्वजननी' अभविष्यत्?—सर्वे च किं तस्या अभयक्रोडे सुरक्षितं स्थानमध्यगमिष्यन्? अत एव तदानीं येऽपि समायातास्ते

सर्वेऽपि सारदादेवीं मातृस्वरूपं प्राप्तां भवतारिणीरूपमधिगतामपश्यन्। सा गुरुरूपेण निजान् संख्यातीतान् पंगुबालकान् दुस्तरभवाम्भोधेः पारं प्रापयत्। यस्या अभ्यन्तरे मातृत्वस्य देवीत्वस्य चापूर्वं सम्मिश्रणमभवत्।

जागतिकमातृत्वस्याभ्यन्तरे प्रतिदानस्य गुप्ताऽऽकाङ्क्षा तिष्ठति। एतदादानप्रदानाभ्यन्तरत एव एतस्य प्रेम्णोऽभिव्यक्तिः, परिपूर्णता च सम्पद्यते। परन्तु मातृतायामैश्यां केवलं दानं—दान एव तृप्तिः—'समर्थप्रेम्णः' परिपूर्णो विकासस्तिष्ठति। श्रीसारदादेव्याः सीमहीनेश्वरीयमातृत्वस्यास्य प्रचण्डशक्तिः सन्तानानामाश्रितानां प्राणानामपूर्णतां क्षुद्रत्वं दैन्यं च प्लावयन्तीव प्रतीयते। 'जननी अस्ति' इति ज्ञानस्वरूपो महामन्त्र एव सन्तानानां प्राणेषु दिव्यां चेतनामेकां प्रायच्छत्, उच्छ्वसितां परिपूर्णतां प्रादात्, अमोघशक्त्या, शिशुसुलभनिर्भरतया च तान् संयुक्तानकरोत्।

जयरामबाटी नाम स्थानमत्यन्तदुर्गमम्, तत्र गमनागमनं बहुकष्टसाध्यं व्ययसमयसापेक्षं चासीत्। प्रबलसमीहायां सत्यामपि बहवो मानवा जयरामबाट्यामागन्तुं नाशक्नुवन्। अत एव श्रीमाता अनेकासामसुविधानां सत्त्वेऽपि बहुवारं कलिकत्तामेवाध्युवास। १८९८ ईसवीयवर्षतः, १९०८ ईसवीय वर्षं यावत् यदा श्रीमाता कलिकत्तामागमत्, तदा सा बागबाजारे कस्यचन भाटकगृहीतगृहे, अथवा कदा कदापि च कस्यचन भक्तस्य गेहे न्यवात्सीत्। श्रीमातुर्जीवत्राणरूपं महाकार्यं शनैः शनैर्व्यापकत्वमवाप। युगावतारमहिम्नः तदीयमहोदारभावस्य देशे प्रसारेण साकमेव श्रीमातुः समीपं भक्तसन्तानानां गमागमावपि ववृधाते। सम्प्रति न केवलं वङ्गीया एव, प्रत्युत भारतस्य सर्वेऽपि जनाः श्रीमातुश्चरणदर्शनार्थं कृपाप्राप्त्यर्थं च समाजग्मुः।

श्रीमातुः कलिकत्तानिवासस्यैतामसुविधां दूरयितुं श्रीसारदानन्दस्याक्लान्तपरिश्रमस्य चेष्टायाश्च परिणामस्वरूपं बागबाजारे 'श्रीमातुः' कृते भवनमेकं निर्मितं कृतम् ( वर्तमान उद्बोधनकार्यालयः )। १९०९ ईसवीयमईमासस्य २३ तारिकायां ( १३१६ वंगाब्द-ज्येष्ठस्य नवमदिवसे ) श्रीमाता बागबाजारस्य नवीनभवने समाजगाम, तत्र च तया स्वहस्ताभ्यामेव श्रीठाकुरः प्रतिष्ठितः । अत्र भवने समागत्यासावात्मानमतिस्वच्छन्दमबुध्यत । स्वामिनः सारदानन्दस्यैकनिष्ठमातृसेवायज्ञः पूर्णतामिवागमत् । तस्य सेवेयमनागतानां कृते सुमहानुज्ज्वलादर्शोऽभवत् । सारदानन्दस्य सेवया परितुष्टा श्रीमाता तस्य नाम 'प्रियकारी' इति निर्दिदेश।

बागबाजारस्थिते श्रीमातुर्निवासस्थाने संख्यातीता ध्यान-जप-भाव-समाधयो बभूवुः। कियन्तो मानवाः श्रीमातुर्मुक्तिमन्त्रमधिगत्य धन्या अभूवन् । श्रीमातुरन्तिमलीलायाः स्थानं—महातीर्थं—श्रीमातुर्भवनमेवासीत् । तदानीं बागबाजारस्य नवीने भवने श्रीमाता प्रायशो मासषट्कं स्थित्वा शीतकालस्य प्रारम्भे जयरामबाटीमगच्छत् ।

एकदा श्रीमाता आश्रितसन्तानानां समक्षं प्रावोचत्—"इदानीं काले श्रीठाकुरो निर्धनधनिकानां, पण्डितमूर्खाणां समेषामप्युद्धाराय समागमत् । मलयानिलोऽतिप्रावहत् । यः कोऽपि 'पालं' प्रसारयति साग्रहं शरणागतो भवति च स एव धन्यतामागच्छति । एतर्हि वंशघासानपहाय अभ्यन्तरस्थितकिञ्चित्साराः सर्वेऽपि चन्दनायिता बभूवुः । युष्माकं का चिन्ता ?" श्रीठाकुरः स्वजीवोद्धाररूपकार्यभारं सम्प्रति श्रीमात्रे समर्पितवान् । अत एव हि सा निर्विचारं जीवोद्धारे परिव्यापृता । योऽपि 'मा' इति ब्रुवन् समाययौ, तस्योपरि कृपां विधाय सा श्रीठाकुरस्याभयचरणयोस्तं समर्पयाञ्चक्रे ।

एकदा कश्चिद्दीक्षितसन्तानः ध्यानजपाद्यनुष्ठाने आत्मनोऽसमर्थतां

प्रकटय्य दुःखं प्राकाशयत् । निरर्गल-स्नेहा श्रीमाता तस्मै अभयदानं प्रयच्छन्ती प्राह—"इदानीं यत्किमपि भवेत् तस्य तदर्थं न दुःखं कर्तव्यम्, अन्ते श्रीठाकुरेण समागन्तव्यमेव—युष्मान् नेतुम्। तेन स्वयमेवैतदुक्तम्, तस्य वचनं किं मृषा भवितुमर्हति ? सदैव युष्माभिरिदं स्मर्त्तव्यम् यदेकव्यक्तिः (श्रीठाकुरः) सदैव युष्माकं पृष्ठतो वर्तते।"

—*०*—

५

श्रीमातुर्दैनिकं जीवनमनुपममासीत्। सर्वदैव सा किञ्चित्कार्य-मकरोदेव। आलस्ये व्यर्थवार्तायां वा समयं यापयन्ती न कदाप्यसाव-दृश्यत। प्रतिदिनं रात्रौ प्रायशस्त्रिवादनकाले जागरणस्य तस्या दक्षिणेश्वरादेव अभ्यासोऽभवत्। शरीरस्य अस्वास्थ्येऽपि सम्भवतः कदापि नियमेऽत्र व्यतिक्रमो न दृष्टः। उत्थायैव सा प्रथमं श्रीठाकुरस्य दर्शनं, ततोऽपि च देवतानां प्रणाममकरोत्। ततश्चाऽसौ प्रातः-कृत्यादिभ्यो विनिवृत्ता श्रीठाकुरं शयनात् जागरयित्वा स्वयं जपं कर्त्तुमुपाविशत्। प्रातःकाले सम्प्राप्ते स्वहस्तेनैव सर्वान् पूजासम्भारान् संगृह्य अष्टवादनात्पूर्वमेवासौ पूजायामुपविवेश। पूजासमाप्तेरनन्तरं स्वहस्ताभ्यामेव साधुभ्यो भक्तसन्ततिभ्यश्च पत्रपुटकेषु प्रसादं प्रैषयत्। अस्याभ्यन्तरात् एव भक्तसमागमाः, दर्शनदानानि, दीक्षाप्रदानानि, धर्मोपदेशाः, शोकातुरेभ्यः सान्त्वना-प्रदानादीनि च प्राचलन्।

श्रीमातुः पूजाया विधानमवलोक्य सर्वे जना इदमालोचयन् यत् श्रीमाता श्रीठाकुरमूर्त्तिं न, जीवितठाकुरं यथा दक्षिणेश्वरे परिचार-यते स्म—तथैव पर्यचरत्। भोगगृहे अन्नादिसज्जीकरणानन्तरं यदा श्रीमाता श्रीठाकुरमन्यान्यदेवताश्चाह्वयते स्म, तदानीमेकं स्वर्गीयदृश्य-मुपतस्थौ। लज्जाशीलनववधूसमाना श्रीमाता श्रीठाकुरसमीपमुपस्थाय प्रार्थयत्—'भोजनार्थमागम्यताम्।' इति। पुनः बालगोपालमूर्ति-समीपमुपस्थायावोचत्—"आगच्छ गोपाल! भोक्तुमागच्छ।" एवं प्रकारेण भोजनार्थं सर्वानाहूय यदाऽसौ भोगगृहमगच्छत् तदा तदीय-भावमवलोक्यैतदविज्ञायत यत् सत्यमेव सर्वे देवा भोजनार्थं तत्पृष्ठतो

ययुः।...कदाचित् प्रसादे मिष्टान्ने समाप्तिं गते भक्तेभ्यो मिष्टान्नं देयमस्तीति श्रीमाता त्वरितमेकस्मिन् पत्रपुटके मिष्टान्नं गृहीत्वा श्रीठाकुरस्य पुरतः समागत्याब्रवीत्—"ठाकुर, भुज्यताम्।" दृश्य-मेतन्निभालयतः पुरुषस्य मनस्यभिनवभावस्यैकस्यान्दोलनमिव सम-भवत्। 'छाया काया' इति माता व्याहरत्। तस्याः समक्षे छाया सर्वदैव दिव्यकायारूपेण प्रत्यभासत।...

एकदा श्रीमाता कलिकत्तातो जयरामबाटीं गच्छन्ती बभूव। विष्णुपुरे दिनद्वयं विश्रामानन्तरं सा प्रातरेव वृषभशकटीभिः षड्भिः सर्वानपि सहैव नयन्ती प्रतस्थे। क्रोशचतुष्टयदूरे जयपुरचट्टीस्थाने मध्याह्नभोजनस्य व्यवस्थाऽभवत्। चुल्हिकायां मृद्भाण्डे भक्तं पाच्यते स्म। चुल्हीतोऽवतारणसमये सहसा हण्डिका भग्ना ओदन-फेनानि च भूमौ प्रसृतानि। किन्तु श्रीमाता तेन किञ्चिदपि न विचचाल। सा पलालस्यैकं गुच्छकमादाय फेनानि मार्जयितुमारेभे। ततश्च हस्तौ प्रक्षाल्य श्रीठाकुरस्य चित्रं पेटिकातो निस्सार्यैकत्रोपावे-शयत्। एकेन काष्ठेन ततः किञ्चिदोदनं पत्रोपरि स्थापयित्वा सूपं शाकं च दत्त्वा श्रीठाकुरस्याभिमुखं संस्थाप्य करौ बद्ध्वा श्रीमाता जगाद—"अद्य भवतैतत्प्रदत्तम्। तद्ध्येतदेव किंचिदुष्णं सत्वरं भुज्यताम्।" श्रीमातुरिमां लीलामवलोक्य सहवासिनो जहसुः। कीदृशी सहजसुंदरदेवसेवेयम्! सर्वथैवात्मवदास्ते। कीदृशी चाद्भुता समयोपयोगिनी व्यवस्था। श्रीरामकृष्णेन प्रोक्तम्—"यदा यादृशः समयस्तदानीं तादृशमेवाचरणीयं भवति।"

श्रीमातुर्जयरामबाटीजीवनं नितान्तं कर्ममयमासीत्। तत्र सर्वाण्यपि कार्याणि तया स्वहस्ताभ्यामेव व्यधीयन्त। बहुवारं तयैव पाचनं, परिवेषणं, किमन्यत् प्रकाशयन्त्रसम्मार्जनं च विधीयते स्म। तदीयजयरामबाटीजीवनस्य प्रधानमङ्गं भक्तसेवैवासीत्। प्रत्येकोऽपि

भक्तो जयरामबाट्यां श्रीमातरं स्वजन्मदात्र्या मातुरपेक्षया समधिकान्तरङ्गभावतः प्रापत् ।

तया यावन्ति विधेयानि व्यधीयन्त, तानि सर्वाण्यपि नवनवप्रीतिपरिपूर्णान्यनुष्ठितानि । श्रीमातुरिदं निरवच्छिन्नसेवामयं जीवनं संन्यासिनां, गृहिणां सर्वेषामेवादर्शरूपमभूत् । तया प्रोक्तम्—"सदैव किमपि कार्यं नूनमेवानुष्ठातव्यम् । कार्यानुष्ठानेन शरीरं मानसं च स्वस्थे भवतः ।" श्रीसारदादेव्या जीवनस्यैकं प्रधानमवदानमासीत्—"सेवा" । एकत्र ब्राह्मी स्थितिरपरत्र निरन्तरं कर्म—एतादृशसामंजस्यपरिपूर्णं जीवनमत्यल्पं दरीदृश्यते । साधनभजनसेवासु तस्या मनसि समज्ञानं समो भावश्चातिष्ठताम् ।··· श्रीठाकुरेण श्रीसारदादेव्या जीवनमीदृशं संगठितमासीत् यत् सा समग्रविश्वस्य स्त्रीजीवनविषये पूर्णादर्शरूपाऽऽसीत् ।

* * *

कतिचन मासान् जयरामबाट्यामुषित्वा श्रीमाता कलिकत्तां प्रत्यागमत् । तदानीमनेके भक्ताः श्रीमातुः कृपादीक्षामधिगत्य धन्यतमा अभूवन् । प्रायश एकवर्षं यावत् बागबाजारस्थे स्वभवने स्थित्वा स्वर्गीयबलराममहोदयस्य स्त्रिया विशेषाग्रहेण श्रीमाता तदीयभूस्वामितायाः 'कोठार' नामधेये स्थाने जगाम (१३१७ वंगाब्दीयाग्रहायणमासस्य एकोनविंशे दिवसे) मात्रा साकं मठस्य केचन संन्यासिनः, सेवकास्तदीया आत्मीयाश्चासन् । 'कोठार' स्थितिकाले श्रीमातुर्मनसि रामेश्वरगमनस्य पुरातनी समीहा बलवती बभूव ।

श्रीमातुरभिप्रायमवगत्य स्वामी रामकृष्णानन्दस्तस्या दक्षिणभ्रमणस्य पूर्णमुत्तरदायित्वं स्वस्योपरि गृहीत्वा मद्रासतस्तां न्यमन्त्रयत् । तदनुसारेण १९११ ईसवीयफरवरीमासे सेवकैः सङ्गिनीभिश्च साकं श्रीमाता 'कोठार'तो दक्षिणभारतप्रधानतीर्थं रामेश्वरं द्रष्टुं मद्रासं

प्रतस्थे। श्रीमातरि मद्रासमुपस्थितायां स्वामी रामकृष्णानन्दो देवीभावतः स्वागतं कुर्वाणो मलयापुरमठस्यातिनिकटस्थे भाटकगृहीतैकभवने साग्रहं सबहुमानं च कानिचिद्दिनानि श्रीमातरं निवासयाञ्चकार। तत्रानेके स्त्रीपुरुषा मातुर्मन्त्रदीक्षा जगृहुः। बहवश्च तस्याः पवित्र-दर्शनेन धन्या बभूवुः।

मद्रासतः स्वामी रामकृष्णानन्दः सङ्गिभिः साकं श्रीमातरं रामेश्वर-दर्शनार्थमानिनाय। मार्गे दिनमेकं मदुरायां तैर्विश्रामः कृतः। रामेश्वरं प्राप्य ते दिनत्रयं तत्र तस्थुः। रामेश्वरगर्भमन्दिरे प्रविश्य श्रीमात्रा स्वहस्तेन यथारीति पूजाप्रार्थनादिकं सम्पादितम्। सम्बन्धेऽत्र श्रीमात्रा विज्ञापितम्—"अहो! शशिना (स्वामिना कृष्णानन्देन) सौवर्णानि १०८ बिल्वपत्राणि मह्यं प्रदाय रामेश्वरस्य समर्चाऽनुष्ठापिता।"

श्रीमाता रामेश्वरात् मद्रासं प्रत्यावृत्ते। ततश्च बेङ्गलोरस्थश्रीराम-कृष्णमठाध्यक्षस्य विशेषाग्रहेण दिनत्रयमसौ बेङ्गलोरमध्यतिष्ठत्। बेङ्गलोरगमनसम्बन्धे श्रीमाता प्रोवाच—"अहो! कियतां जनानां सम्मर्द आसीत् बेंगलोरे। धूम्रयानादवतरणमात्रेणैव सर्वे जनाः पुष्पाण्यवर्षयन्। मार्गे कुसुमानां राशिरभवत्। श्रीठाकुरस्य भावः सर्वत्र प्रसृतः। अत एवैतावन्तो जनाः समागताः।"

बेङ्गलोरमठस्य प्राङ्गणे चन्दनद्रुमं लघुपर्वतं चैकमवलोक्य श्रीमाता नितरां प्रासीदत्। एकदा सन्ध्याकाले तत्र पर्वते समुपविश्य तया जपध्यानादौ समयो व्यतियापितः।

बेंगलोरतः श्रीमाता मद्रासमायाता। तत्र चैकं दिनं दिनद्वयं वा स्थित्वाऽसौ कलिकत्तामाययौ। मार्गे गोदावर्य्यां स्नातुं दिनमेकं राजमहेन्द्र्यामवततार। द्वित्राणि दिनानि पुर्य्यामपि न्यवात्सीत्।

रामेश्वरात्प्रतिनिवृत्य श्रीमाता एकमासतः किञ्चिदधिकमेव बागबाजारेऽतिष्ठत्। १३१८ वंगाब्दज्येष्ठमासतृतीयदिवसे (१९११

ईसवीयमईमासस्य १७ तारिकायां ) असौ जयरामबाट्यामायाता, तदनन्तरं च ज्येष्ठस्य २७ तमे दिवसे ससमारोहं स्वीयराधूपुत्रिकाया विवाहमचीकरत्। राधूमापादमस्तकमलङ्कारैः सुसज्जितामकरोत्, देयधनं चापि सा पर्याप्तमदात्। वारयात्रिकान्, गृहवासिनः, पार्श्ववर्त्तिग्रामीणसर्वसाधारणान्, दरिद्रान् दुःखिनश्च पर्याप्तभोजनमकारयत्। नृत्यगीतक्रीड़ाकौतुकादिभिर्जयरामबाटी मुखरिता बभूव। मातुरानन्दस्य तु सीमैव नासीत्।

इतः परं षट्सप्तमासानन्तरं श्रीमाता कलिकत्तां गमिष्यति। मार्गे—जयरामबाटीतः सार्धद्विक्रोशदूरे कोयालपाड़ा समापतति। तत्र कैश्चन भक्तैः श्रीठाकुरस्य नाम्ना एक आश्रमो निर्मितः। तदानीं समये स्वदेशीययुगमासीत्। आश्रमे वयनयन्त्रतर्कुचक्राणामेवाधिकं प्राधान्यमभवत्। कलिकात्तागमनात् कियद्दिनपूर्वं जयरामबाट्यां कोयालपाड़ाश्रमाध्यक्षाय श्रीमात्रा प्रोक्तम्—"पश्य पुत्र, त्वया श्रीठाकुरस्य कृते भवनमेकं मार्गे च मम विश्रामायैकं स्थानं निर्मितम्, तदाहमेतर्हि गमनसमये तत्र श्रीठाकुरं संस्थाप्य गमिष्यामि। सर्वमायोजनं पूर्णं विधेयम्। पूजानैवेद्यार्पणनीराजनादीनि सर्वाणि नियमेन विधातव्यानि। केवलं स्वदेशीयत्वेन किं सम्पत्स्यते? अस्माकं यत् किञ्चिदस्ति सर्वस्य मूले श्रीठाकुर एव विद्यते, स एवादर्शो वर्त्तते। यत् किमप्यनुष्ठातव्यं, सर्वं तन्नाम स्मृत्वा अनुष्ठीयताम्—सकलं सम्पन्नं भविष्यति।"

यथावसरं श्रीमाता कोयालपाड़ाश्रमे समाययौ। श्रीठाकुरस्य विशेषपूजादीनामायोजनं सम्पादितमासीत्। श्रीमात्रा स्वीयहस्ताभ्यां श्रीठाकुरस्य स्वस्य च चित्रे संस्थाप्य पूजादीनि समनुष्ठितानि, कांश्चित् संन्यासिनश्च सङ्गे समादाय होमादीनि सम्पादितानि।

१३१८ वंगाब्दाग्रहायणस्याष्टमे दिवसे (१९११ ईसवीयनवम्बरमासस्य चतुर्विंश्यां तारिकायाम्) श्रीमाता कलिकत्तामाजगाम। तस्याः-

कलिकत्तायामागमेन भक्तानां मध्ये महान् आनन्दकोलाहलः प्रादुर्भूतः। चतसृभ्यो दिग्भ्यः कृपार्थिनो भक्ताः समागन्तुं प्रवृत्ताः। श्रीमात्रा कृपाद्वारमुद्घाटितं कृतम्। कश्चिदपि दयावञ्चितो नातिष्ठत्। सहस्रशो जीवनानि स्पर्श-प्रस्तरस्पर्शेन सुवर्णमयान्यभूवन्।

भूमण्डलाय मातृभावस्य शिक्षां प्रदातुमेव श्रीसारदादेवी शरीर-धारणमकरोत्। सा तु पूर्वं माता ततो नु 'गुरु'रभूत्। तस्या मातृभावेन 'गुरु'भावः पराजितः। यश्च 'मा' शब्देन समाह्वयत्, तस्मै एव श्रीसारदादेवी स्वीयं स्नेहमयं क्रोडं प्रायच्छत्। तत्र सुश्री-कुश्री-पुरुष-स्त्री-बालक-बालिका-सबलदुर्बलानां कोऽपि भेदो नासीत्। 'मा' शब्दस्या-ह्वानं तस्या मनसि दुर्निवारमेकमान्दोलनमसृजत्। क्रोडे स्थापनं विना नासौ सुस्थिरतां प्रपेदे—केवलमेतदेव न, सन्तानान् क्रोडीकृत्यासौ भवसागरपारमपि नेष्यति। श्रीसारदादेव्या अभ्यन्तरे यो हि गुरुभाव-विकासः, सोऽपि मातृभावपरिणाम एवाभूत्। यमेकवारमसौ स्वक्रोडे-ऽस्थापयत्, तं पुनर्नावतारयितुमशक्नोत्। एतदेवासीत् तस्या गुरुरूपम्। गुरुरूपेण सा स्वसन्तानान् भवसागरतः पारमनयत्। तत्रापि माता, बालकाः! तत्रापि चिरमेलनम्। दिव्यस्तदीयो मातृस्नेहः।

आश्रितसन्तानेभ्यस्तस्या मनसि कीदृशी भावना, कीदृशी चोत्कण्ठा बभूव! समस्ता आपदः सा स्वकीये वक्षसि गृहीतवती। पक्षिमातेव स्नेहमयपक्षाभ्यां स्वसन्तानान् परिवेष्ट्य पर्यरक्षत्, 'रक्षाकाली'व विविधविपत्तिभ्यश्च तान् पर्यपालयत्। एकमाश्रितसन्तानं निराशम-वलोक्य श्रीमाता प्रोवाच—"यदि श्रीठाकुरः शरीरमिदं मामकीनं नारक्षिष्यत्, तदा युष्माकं किमभविष्यत्? तथापि येषां भारो मया गृहीतस्तेष्वेकस्मिन्नपि मुक्तिं विनावशिष्टे मयाऽवकाशो न प्राप्तुं शक्यते। एतैः सार्धमेव मया स्थास्यते, यतो मया तेषां शुभाशुभभारो-ऽङ्गीकृतः आस्ते!...आत्मीयत्वेन ये स्वीकृतास्तेषां परित्यागस्तु न मया कर्त्तुं शक्यते!..."

श्रीसारदादेव्या अन्तरे यो जगन्मातृत्वभावविकासः समजायत स न केवलं मनुष्यमात्र एव सीमाबद्ध आसीत्, अपि तु सर्वजीवधारिप्राणिष्वपि सः प्रकटितः समदृश्यत ।

कश्चित्संन्यासी शिष्यः श्रीमातुः समीप एकदा जिज्ञासितवान् "मातः, किं त्वं सर्वेषामपि जननी ?" श्रीमातोक्तवती "आम्"। पुनरनेनैव संन्यासिना पृष्टम्—"एतेषां मानवेतरप्राणिनामपि ?" श्रीमाता पुनरुक्तवती—"अथ किम् ? तेषामप्यहं जननी ।" तस्या दैनन्दिनजीवनव्यवहारेऽस्या उक्तेः सत्यताऽवालोक्यत ।

श्रीमातुर्गृहे कश्चिद् बिडाल आसीत्। स च दुग्धादिकं रहसि आस्वादयत्। अतस्तत्रत्याः सर्वे जना मार्जारोपरि क्रुद्धा अभवन्। परं श्रीमाता बिडालस्य शासनं कर्तुं नैच्छत्। अन्येषु च तत्ताडनतत्परेषु सत्सु श्रीमाता दयार्द्रहृदयाऽश्रुपूर्णनयना चाभवत् अब्रवीच्च—"चोरयित्वा दुग्धाद्यास्वादनं तु बिडालस्य धर्म एव। अन्यथा के जना एतमादरपूर्वकं भोजयन्ति ?" इति । अयं मार्जारोऽन्यान् ताडनतत्परान् विलोक्य नित्यं श्रीमातुः शरणमागतः। एकदा कञ्चित्सेवकं श्रीमाताऽब्रवीत्—"पश्य, मा ताडयतैनम्, तस्याप्यन्तरेऽहमेव निवसामि" इति । मानवेतरप्राणिष्वपि श्रीमातुः वात्सल्यं प्रेम कीदृशमासीत् एतद्विषये संख्यातीतघटनानामुल्लेखः कर्तुं शक्यते ।

श्रीसारदादेव्या जीवनान्तिमदिनेषु जीवत्राणस्य या दुर्वारोन्मुखताऽऽसीत् सा एकत एतादृशी गभीराऽविद्यत तादृश्येवान्यतः अतिविशालाप्यभवत्। श्रीरामकृष्णदेवो देहत्यागात्कतिचिद्दिनानि पूर्वं काशीपुरोद्यान एकस्मिन्दिने कलिकत्तादिश्यङ्गुलीनिर्देशपूर्वकं श्रीसारदादेवीमुक्तवान्—"पश्यसि ? लोकाः कथं कीटा इव संसारे दुःखानुभवं कुर्वन्ति। एतेषामुद्धाराय त्वया किमपि कर्तव्यं भविष्यति" श्रीसारदादेवी तमुत्तरयांचकार—"अहं त्वबला किं कर्तुं पारयिष्यामि" श्रीठाकुरोऽब्रवीत्—"न हि, न हि, त्वयैव कर्तव्यं भविष्यति। अहं तु अल्पशो

जीवोद्धारकार्यं कृतवान्। त्वया तु मदपेक्षयाऽधिकं कर्तव्यम्।" श्रीसारदादेवी श्रीठाकुरस्येङ्गितमधिगतवती, तथा श्रीठाकुरनिर्दिष्ट-जीवनत्राणकार्ये व्रतिनी चाभवत्। श्रीठाकुरो देहत्यागात् पूर्वं श्रीमात्रे कतिपयसिद्धमन्त्रान् प्रददौ तथा तेषां मन्त्राणां प्रयोगमपि तामशिक्षयत्। शास्त्रे भगवत्कृपा-साधुकृपा-गुरुकृपाणां समुल्लेखो विद्यते; एतद्विषये जनश्रुतिरूपेण श्रूयते च। किन्तु तस्य कृपात्रयस्य रहस्यं श्रीरामकृष्ण-श्रीसारदादेवीजीवनं प्रति दृक्पातेनैव ज्ञायते। आध्यात्मिकशक्ति-संक्रामणद्वारा मनुष्याणां जीवने धर्मभावोद्दीपनं तथान्येषां पापाना-मङ्गीकार एतद् द्वयं तयोर्जीवनस्य विशेषावदानम्। मन्त्रप्रदानविषये तथा शिष्यैनःस्वीकारविषये च श्रीसारदा देवी उक्तवती—"शिष्याय मन्त्रप्रदानेन तस्यान्तर आध्यात्मिकशक्तिसञ्चारो भवति तथा शिष्यस्य वृजिनं गुरोः शरीरे प्रविशति। अत एव मन्त्रप्रदाने पाप-संक्रामणेन शरीर एतादृशी व्यथा जायते। गुरुपदस्वीकारः अतीव कठिनं कार्यम्। यतः शिष्यस्य (जन्मान्तरविहितं) दुष्कृतं गुरुणा स्वीकर्तव्यम्।

साधारणगुरुसम्बन्धविषय इदं शक्यसम्भवं न वेति तु न वयं जानीमः। परन्तु श्रीरामकृष्णजीवने द्रष्टुं शक्नुमः यत् अनेकेषां जनानामेनःस्वीकारफलस्वरूपं तस्य शरीरेऽसाध्यव्याधिरुदपद्यत। अस्मिन्विषयेऽस्माभिरस्मिन्नेव ग्रन्थेऽन्यत्रालोचितम्। श्रीसारदादेवी-जीवनेऽपि द्रष्टुं शक्यते यत् अनेकजनदुष्कृतदुःखस्वीकारफलस्वरूपं तस्याः शरीरेऽपि विविधव्याधिसमुत्पत्तिरजायत। किन्तु सा तस्य न कामपि चिन्तां कृतवती। एकस्मिन्दिने सोक्तवती—"वत्स, अखिलं दिनं यावत् मया मल्लयुद्धमिव क्रियते—इदं भक्तवृन्दमागतम्। अनन्तरम-परं भक्तवृन्दं समागतम्। (दीक्षादानमुपदेश-प्रदानं च प्राचलत्) इदं शरीरमतः परमधिकभारवहनेऽसमर्थम्। श्रीठाकुरं संप्रार्थ्य 'राधु', 'राधु' इति (मायाश्रयं) विधाय मया शरीरे मनः स्थापितमासीत्।"

'बहुजनहिताय' सा सर्वाणि कष्टान्यसहत। एकदा कश्चिद् भक्तः श्रीमातुः शरीरस्यास्वस्थताविषयकमुल्लेखं विधाय प्रोवाच—"मातः, मया श्रुतं भक्तानां पापग्रहणहेतव एव भवत्याः शरीर एतादृशी रोगयन्त्रणा। ममैकं निवेदनमास्ते भवत्या मदर्थं न किमपि कष्टमनुभवितव्यम्; मद्दुष्कृतफलं मयैव भोक्तव्यम्।" करुणामयी श्रीमाता सावेगं तत्क्षणमेवाभिहितवती—"इदं किमुच्यते वत्स, किमिदमुच्यते। त्वं कुशली भव। मयैव सर्वं भोक्तव्यम्।" शिष्यस्य पापग्रहणफलस्वरूपं स्वकीयशारीरिकासत्यरोगयन्त्रणाविषये ज्ञानवत्यपि सा कृपावितरणे न कदापि विमुख्यासीत्। सा उक्तवती—"दयया मंत्रं दास्यामि, ते न मां परिहरन्ति, रुदन्ति च। एतदवलोक्य हृदयं दयार्द्रं भवति। अत एव सकृपं मन्त्रदानं विदधामि। नो चेत् को मम लाभः? मन्त्रदानात् शिष्यस्य समग्रं पापं स्वीकर्तव्यमेव। चिन्तयामि शरीरं तु क्षणभङ्गुरम्। अतो मन्त्रदानादेतेषां मुक्तिर्भवेदित्येवाभिलषामि।" अन्यत्रापि तयोक्तमासीत्—"एतदर्थमेवावयोः ( श्रीठाकुरस्य श्रीमातुश्च ) अत्रागमनम्।" जीवानां दुष्कृताङ्गीकारं विधाय तेषां मुक्तिसिद्धिरेव तयोर्देहधारणस्य प्रयोजनम्। अपरत्रापि श्रीमात्रैतद्विषये सकौतुकमभिहितमासीत्—"उच्यतां भोः! अपि भवन्तः श्रीठाकुरात् केवलं मिष्टान्नलाभार्थमायाताः?" तस्यागमनं तु जीववृजिनस्वीकारपूर्वकं तेषां मुक्तिप्रदानार्थमेव जातम्।

१९१६ ईसवीयवर्षे शारदीयदुर्गापूजनोपलक्षे श्रीमाता वेलुडमठे स्थिता। अष्टम्यां तिथौ बहवो भक्तजनास्तस्याश्चरणपूजां विदधुः। साऽपि तान्सर्वान्स्पर्शपूर्वकं स्वकृपापात्रमकरोत्। भक्तवृन्देषु प्रयातेषु काचिन्मातुः संगिनी दृष्टवती यन्माताऽसकृद् गङ्गाम्भसा स्वचरणक्षालनतत्पराऽऽसीत्। संगिनी मातरं पृष्टवती—"किमिदं विधीयते मातः! चरणयोरसकृच्छीतजलप्रक्षालनेन भवत्याः शरीरे शैत्यं ज्वरपीडा वा भवेत्।" श्रीमाताब्रवीत्—"वत्से! किमुच्यते? एकैकशो भक्तानां

प्रणामेन मया सर्वस्मिन् शरीरेऽग्निदाह इवासह्यकष्टमनुभूयते। अतः भागीरथीजलक्षालनेन सा ज्वाला किञ्चिदिवोपशाम्यति" इति। अनेन प्रकारेण तस्या जीवत्राणकार्यं प्राचलत्।

* * *

अस्मिन्नेव वर्षे ( १३१८ वङ्गाब्दे ) बेलुडमठे दशभुजाया दुर्गाया आराधनायोजनमभूत्। स्वामी प्रेमानन्दः श्रीमातुरनुमतिमाशीर्वादञ्च गृहीत्वा पूजाया आयोजने संल्लग्नोऽभवत्। प्रेमानन्दस्य विशेष-प्रार्थनया 'श्रीमात्रा पूजायाश्चतुःपञ्चदिनानि यावत् बेलुडमठे स्वीयो निवासः स्वीकृतः। आनन्दमयी समागमिष्यति। साधुभक्तानां मनसि आनन्दस्वरो निननाद।

उद्‌बोधनदिवसे मध्याह्नोत्तरं श्रीमाता बागबाजारतो बेलुडमठे समायास्यति। उत्तरदिक्‌स्थे उद्यानवति गृहे तस्या निवास-व्यवस्थाभवत्। सन्ध्या जाता। श्रीमातुरागमने विलम्बम-वलोक्य (स्वामी) बाबूराममहाराजो नितरामस्थिरो बभूव। मठस्य प्रवेशद्वारयोः कदलीस्तम्भौ मङ्गलकलशौ च न स्थापिताविति विलोक्य तेन प्रोक्तम्—"सम्प्रति मङ्गलघटस्थापनं तु न संवृत्तम्—कथमागमि-ष्यति माता ?"

देव्या उद्‌बोधने समाप्ते श्रीमातुः शकटी मठप्राङ्गणं प्राविशत्। कविभिश्चन सङ्गिनीभिः श्रीमातुः करौ गृहीत्वा शकटीतः सा अवतारिता। सर्वमालोक्य श्रीमाता प्रसन्ना भूत्वोवाच—"सर्वं समीचीनम्। अहमपि माता दुर्गेव सज्जीभूता समायाताऽस्मि !"

श्रीमातुः शुभागमनेन सर्वैरेव देव्याश्चिन्मयभावाविर्भावमनुभूय स्वीय आत्मा धन्यतां नीतः। पूजाया दिनत्रयं यावत् शतशो भक्तैर्जी-वितदुर्गायाश्चरणयोः प्रणामं कृत्वा स्वीयं जीवनं सफलीकृतम्। कैश्चिद् भाग्यवद्भिर्भक्तैर्मन्त्रदीक्षाऽपि समधिगता। पूजाया दिनत्रयं मठे

आनन्दप्रवाहः प्रावहत्। विजयादशम्यां नौकाद्वारा गङ्गायां प्रतिमा विसर्जिता। श्रीमाताऽप्युद्याने तिष्ठन्ती सर्वं ददर्श। एको भक्तो विभिन्नप्रकारेणाङ्गानि सञ्चालयन् प्रतिमाभिमुखमनृत्यत्। एतदवलोक्य श्रीमात्रा सुमहान् आनन्दः प्रकाशितः। कस्मैचिन्मार्जितरुचये ब्रह्मचारिणे नृत्यादिकं न रुरुचे। इदमाकर्ण्य श्रीमात्रा प्रोक्तम्—"न न, सर्वमिदं समीचीनं विद्यते। गानवादनरागरङ्गादिना सर्वप्रकारेण देवी प्रसादयितव्या।" मठस्थान् सर्वान् आशीर्भिरभ्यर्च्य विजयादशम्या आगामिनि दिने श्रीमाता कलिकत्तां प्रत्यागमत्।

ततः कतिचिद्दिनानन्तरं श्रीमाता काशीयात्रामकार्षीत्। तया सह सेवकाः, भक्ताः, भक्तिमत्यश्च बहव आसन्। काश्यां श्रीरामकृष्णाद्वैताश्रमे श्यामापूजाया आयोजनमभवत्। १३१६ वङ्गाब्दीयकार्त्तिकमासस्य विंशतितमे दिवसे एकादश्यां मङ्गलवासरे श्रीमाता सर्वैः साकं वाराणसीमाजगाम। आश्रमस्याभ्यर्णे भक्तस्यैकस्य नवनिर्मिते भवने श्रीमातुर्निवासस्य व्यवस्था बभूव। अद्वैताश्रमे कञ्चित्कालं विश्रम्य श्रीमाता स्वीयं वासस्थानमागमत्।

काशीधामनि श्रीमातुः शुभागमनमभूत्, अत्रानन्दमहोत्सवे योगदानाय श्रीठाकुरस्यान्तरंगपार्षदेषु स्वामी ब्रह्मानन्दः, शिवानन्दः, तुरीयानन्दः, सुबोधानन्दः, मास्टरमहाशयश्च सर्वे तत्र समुपतस्थिरे। अविमुक्तक्षेत्रे काश्यां विश्वनाथधामनि विश्वजनन्याः, भक्तानां च समावेशः! सर्वेषामभ्यन्तरे चैकस्याध्यात्मिकसमारोहस्य संचारो बभूव।

कालीपूजाया अग्रिमे प्रातःकाले श्रीमाता स्थानीयं सेवाश्रमं निरैक्षत। भ्रामं भ्रामं तस्यै सर्वं प्रदर्शितम्। सेवाश्रमस्य भवनम्, उद्यानम् व्यवस्थादींश्चावलोक्य सुप्रसन्ना श्रीमाताऽब्रवीत्—"अत्र श्रीठाकुरः स्वयं विराजते, माता लक्ष्मीः पूर्णतया चावातिष्ठत।" इतः पूर्वमपि श्रीमाता यद्यपि वारद्वयं काश्यामागताऽऽसीत्, किन्तु बहुदिनानि नात्र स्थातुमशक्नोत्। अस्मिन्नवसरे तु सा प्रायः सार्धमासद्वयं काश्याम-

तिष्ठत्। विश्वनाथान्नपूर्णादुर्गा-केदार-तिलभाण्डेश्वरादीनां नानादेवदेवीनां तया दर्शनमनुष्ठितम्। गङ्गायां स्नात्वा प्रतिमन्दिरं भ्रामं भ्राममसौ पूजनमकरोत्। श्रद्धापूर्वकं तया सम्पूर्णमेव काशीखण्डमाकर्णितम्। विख्यातवृद्धसाधोश्चमेलीपुरीमहोदयस्यापि तया दर्शनमकारि।

वाराणस्यामेकदा काश्चन स्त्रियो मातुर्दर्शनाय समागताः। तदानीं श्रीमाता राधू-भूदेवादिबालकानादाय परिव्यस्ता आसीत्। तदीयानि वसनानि विदीर्णानि, तेषां सीवनाय काश्चित् स्त्रियः समादिदेश। सर्वमिदमाकर्ण्यावलोक्य चागन्तुकस्त्रीषु कयाचित् प्रोक्तम्—"मातः, भवती तु घोरमायाग्रस्ता प्रतीयते।" अस्फुटस्वरेण तया प्रत्युक्तम्—"किं कुर्यां मातः! स्वयमहमपि मायैव।" श्रीमातुरिदं मायामयमावरणमेव तस्या जीवनस्य सर्वाभ्यर्हितं माधुर्य्यमासीत्।

काशीतः कलिकत्तायामागमनस्यैकमासाभ्यन्तर एव श्रीमाता जयरामबाटीं जगाम। किन्तु सप्ताष्टमासानन्तरमेव भक्तानामाकर्षणेन पुनरियं कलिकत्तामागमत्। इदानीमसौ पादोनवर्षद्वयं कलिकत्तायां प्रायशस्तस्थौ। बहुभिर्जनैस्तदीया दयाऽधिगताऽभवत्।

श्रीगीतायां भगवतोक्तम्—"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥" एवं जना भगवन्तं येन केनापि भावेन प्रार्थयन्ते तेनैव भावेन स तेषां मनोरथपूर्तिं विदधाति। एवमेव श्रीमातुः पार्श्वेऽपि सर्वे जनाः मुक्तिकामनयैव समायान्तीति न। बहवो मनुतनुजनुषो विभिन्नकामनावशीभूता मातुः पार्श्वमागच्छन्। केचन सन्तानस्य, अन्ये रोगविमुक्तेः, अपरे चैश्वर्यस्य कामनया मातुः समीपमावव्रजुः। श्रीमाताऽभिलषितवरप्रदानेन सर्वेषां मनोरथान् पर्यपूरयत्। अनेकधाप्यसौ परकीयशरीररोगानाकृष्य स्वशरीरे समस्थापयत्, तदीयदयाया अन्तः सीमा वा नासीत्। सन्तानस्य यत्र यदा वा वेदनाऽजायत, तत्र तदानीमेव स्वशान्तिमयकरस्पर्शेन सा तां दूरीचकार। कस्यापि दुःखमवलोक्य

श्रीमातुर्मानसमरोदीत्। व्याकुलीभूयासौ आगन्तुकानामपूर्णतामपूरयत्, स्वीयकोमलकराभ्यां तेषां नेत्रजलममार्जयत्।

बागबाजारे श्रीमातुर्गेहस्याभिमुखे परिसरे वसतिरासीदेका श्रमिकाणाम्। तत एकदिने कापि स्त्री स्वीयं रोगाक्रांतमर्भकं क्रोडे गृहीत्वा श्रीमातुः पार्श्वमाशीर्वादं ग्रहीतुमायाता। अहो! तां प्रति कियती कृपा, आन्तरिकता, सहानुभूतिश्च प्रादुरभूवन्। सा आशिषं प्रायच्छत्—"नीरोगो भविष्यति।" द्वे दाडिमफले, द्राक्षागुच्छकं च श्रीठाकुरस्य प्रसादरूपेण तस्या हस्तयोः समर्प्य तया प्रोक्तम्—"स्वीयं रोगिणमर्भकं भोजय।" अहो! दरिद्रायाः स्त्रिया आनन्दसीमा नासीत्। कृतज्ञतया सा वारं वारं श्रीमात्रे प्रणतिमकार्षीत्।

एकदा द्वे वध्वौ समागते। ताभ्यां सलज्जभावेन स्वीयमनसो भावो गुप्तरूपेण श्रीमात्रे निवेदितः। ते निःसन्ताने अभूताम्। मातृत्वमभिलषतः स्म। श्रीमातुर्मनसि दया समुद्वेलिता। तयोरभिलाषो मात्रा पूरितः। तया व्याहृतम्—"प्रार्थनापूर्वकं श्रीठाकुराय निजमनोभावो निवेदनीयः। दीनभावेन रोरुद्यमानाभ्यां युवाभ्यां स्वकीया हार्दिकी व्यथा तस्मै वक्तव्या। प्रष्टव्यम्, असौ नूनं युवयोरङ्कं पूरयिष्यति।...." श्रीमातुः कृपया तयोर्मनोरथः परिपूर्णोऽभवत्।

कदाचित्केचिज्जना रोगविमुक्तिकामनया समाययुः। एकदा चैका आङ्गलमहिला श्रीमातरं प्रणमन्ती स्वपुत्र्याः कठिनरोगमवर्णयत्। तस्या व्याकुलतामवलोक्य श्रीमाता दयार्द्रतामगच्छत्। किञ्चित्प्रसादपुष्पबिल्वपत्राणि हस्तयोर्धृत्वा तया स्वल्पकालं नयने निमीलिते, पुनरेकवारं श्रीठाकुराभिमुखमवलोक्य पुष्पबिल्वपत्राणि आङ्गलमहिलाहस्तयोर्दत्त्वा प्रोक्तम्—"एतानि स्वपुत्रीशिरसा संस्पर्शनीयानि।" श्रीमातुराशीर्वादेन बालिका रोगमुक्ता बभूव।...

आश्रितसन्तानेषु कश्चित्सुरेन्द्रनाथरायो बरिसाले ( पूर्वपाकिस्ताने ) असाध्यराजयक्ष्मणाऽऽक्रान्तः। नासीत्तस्य जीवितुं काप्याशा। मृत्योः

पूर्वमेकदा श्रीमातुर्दर्शनमाकांक्षमाणस्तस्याः समीपमागमनार्थं प्रार्थना-पत्रमेकं प्रेषितवान्। श्रीमाता स्वकीयमेकं चित्रम् "उद्बोधन" मासिक-पत्रिकाया वार्षिकानङ्कांश्च सम्प्रेष्य पत्रोत्तरे लिखितवती यत्तास्याः कृते एतावद्दूरपर्यन्तमागमनमसम्भवमिति। पत्रद्वारैवाशिषं दत्तवती 'न किंचिद्भयम्, व्याधिमुक्तो भविष्यसि' इति। सुरेन्द्रनाथो मातु-श्चित्र एव तस्या दर्शनं लब्धवान्। तच्च चित्रं तेन पर्यंके स्वशिरः-पार्श्वभागे स्थापितम्। क्रमशश्च स व्याधिनिर्मुक्तो जातः।

साधारणजनानां दुःखदारिद्र्यादिकं श्रीमातुरन्तःकरणं मथितमिवा-करोत्। सा एतादृशदुःखप्रतिकारार्थमतीव व्याकुलचित्ताऽभवत्। कदा कदाऽपि सा दैवीं शक्तिमवलम्ब्यापि दुःखनिवारणतत्परा बभूव। एकस्मिन् वत्सरेऽनावृष्टिकारणात् जयरामबाटीप्रभृतिग्राम-क्षेत्रेषु धान्यादिकं शुष्कतां गन्तुमारेभे। कृषका उपायाभावात् निराशतां गता दलबद्धरूपेण श्रीमातुः समीपमागत्य रोरुद्यमानाः प्रोचुः—"मातः, अस्मिन्वर्षे नास्त्यस्माकमपत्यानां कापि जीवितुमाशा। बुभुक्षया सर्वेऽपि यमसदनं गमिष्यन्ति" इति।

कृषकाणां कातरतामवलोक्य श्रीमातुरन्तःकरणं द्रवीभूतम्। सा कृषकैः सह क्षेत्रसमीपं गत्वा शुष्कधान्यावस्थां चावलोक्य व्याकुल-चित्ता जाता। तथा साश्रुनयनोर्ध्वमुखी साञ्जलिश्च सती प्रार्थना-मकरोत्—"हा ठाकुर! किमिदं कृतम्? किमेतैः सर्वैराहाराभावेन प्राणास्त्यक्तव्याः?" तस्यामेव रात्रौ प्रचुरा वृष्टिरभवत्, यत्फलस्वरूपं तस्मिन्संवत्सरे एतादृशं सुभिक्षं जातं यत् गतेषु कतिषुचिद्वर्षेष्वपि नाभवत्।

१३२५ वङ्गाब्दे आग्रहायणमासस्य घटनेयम्—श्रीमाता बाग-बाजारस्थोद्बोधनकार्यालय आसीत्। तस्मिन् समय एकस्यां रात्रौ दशवादनसमये जयरामबाटीनिकटस्थकोयालपाडानिवासी संभ्रांत-वृद्धः 'श्रीनफरचन्द्रकोले' तत्रोपस्थितो बभूव। तदा श्रीमातुर्दर्शनार्थं

सेवकैः स निवासस्थानोपरितले नीत आसीत्। श्रीमातुश्चरणद्वयग्रहण-पूर्वकं प्रणतो भूत्वा क्रन्दन् स उवाच—"मातः, अहमत्यन्तविपद्ग्रस्तो भूत्वा तव समीपमागतोऽस्मि। इन्फ्लुएंजाज्वरपीडिता मम काश्चित्पौत्र्य एकः पौत्रश्च पंचत्वं गताः। इदानीमपि मम कतिपयाः पौत्र्यस्तथैकाकी जीवितपौत्रश्चात्यन्तसंकटापन्नावस्थायां विद्यन्ते। अतो मातः, भवत्याऽऽशीर्वादो दातव्यो भवेत् येन न मम वंशोच्छेदो जायेत।" श्रीमातोत्तरयांचकार—"किमिदम् भवतैतादृश्याशंका किमर्थं क्रियते ? भवान् लक्ष्मीवान् भाग्यवांश्च"। नफरचन्द्रोऽब्रवीत्—"न हि न हि मातः ! मया न किमपि श्रोतव्यम्। मम जीवनस्यान्तिम-दिनेषु एतादृश एकमात्रपौत्रस्य वियोगशोको न मयानुभवितव्यः।" इति ब्रुवन् मातुश्चरणग्रहणपूर्वकमाकुलक्रंदनं कर्तुमारेभे। श्रीमाताऽ-भाषत—"मा भूरेतादृशोऽस्थिरचित्तः। अस्तु, अहं श्रीठाकुरं निवे-दयामि।" नफरचन्द्र एतेन वचनेन न सन्तुष्टः, मातुराशीर्वादमिच्छन् पुनस्तां प्रार्थयामास। अनन्तरं श्रीमाता निमीलितनेत्रा गम्भीर-स्वरेणाभयवचनदानपरोवाच—"न हि न हि, न भेतव्यम्, तव पौत्रः कुशलपूर्वकं स्थास्यति।" श्रीमातुराशीर्वादेन वृद्धस्य 'कोले'-महाशयस्याभिलषितं सफलीभूतम्। मातुर्जीवन एतादृश्य आर्तत्राणा-भयदानस्वरूपा अनेका घटना विद्यन्ते।...

* * *

यदा कदाऽपि दर्शनार्थिनः प्रणामानन्तरं श्रीमाता गंगाजलेन निज-जानुपर्यन्तं प्रक्षालनमकरोत्। सेवकैरेवंप्रकारपदप्रक्षालनसम्बन्धे जिज्ञासायां कृतायां श्रीमाता प्रावदत्—"कमपि जनं पादयोः शिरः संस्थाप्य प्रणामकरणान्निवारयत।" न ज्ञायते, कियन्ति पापानि मच्छरीरं प्रविशन्ति। मम पादौ प्रज्वलतः। पादप्रक्षलनात्परं कथञ्चित् शान्तिरासाद्यते। अत एव तु शरीरे व्याधिरुत्पद्यते। दूरतः प्रणामं कर्तुं नरा वाच्याः।" द्वितीय एव क्षणे करुणामयी पुनः प्रोवाच—

'शरदे वार्तेयं न वक्तव्या, अन्यथाऽसौ प्रणामानुष्ठानमेव वारयिष्यति।'... एवंप्रकारेण श्रीमातुर्जीवोद्धारकार्यं प्राचलत्। कृपाप्रदाने विरामो नाभूत्। न चासीत् तस्याः काचिदपि विरक्तिः।

सा विभिन्नजनानामेतावन्तं पापभारं स्वोपरि जग्राह, यद् व्यज्ञायत न पुनरसौ तं ग्रहीष्यति। 'सर्वसहाया' जनन्याः कृतेऽपि सर्वमेतदसह्यं प्रतीयते स्म। शरीरेऽसावसह्ययन्त्रणाज्वालामन्वभूत्। तस्या मनस्यपि दारुणा वेदना प्रादुर्बभूव। एकदा एवंप्रकारेण बहूनां प्रार्थनाः पूरयन्ती सा अस्थिराजायत। तदानीं रात्रिरपि बहु व्यतीयाय। सर्वेषां दर्शनार्थिनां गमनानन्तरं सम्पूर्णमपि गृहं गङ्गाजलेन प्रोक्षयितुमादिशत्। निम्ने संस्तरणे शयित्वा तया शरीरस्य वसनान्यवत्तारितानि, पृथक् प्रक्षिप्तानि च, तत एकस्या भक्तिमत्या हस्ते व्यजनं दत्त्वा कथितम्—"वातं कुरु मातः! शरीरे दाहो भवति, नमस्कारं च करोमि मातः! कलिकत्तायै। कश्चित्कथयति ममेदं दुःखम्, अपरश्च वक्ति ममैतत्कष्टम्। अधुना न सोढुं शक्यतेऽतः परम्। कश्चित् कतिदुष्कृतान्यनुष्ठायागच्छति, अन्यश्च पंचविंशतिबालकेषु दशानां मृत्युना रोदिति। नैते नराः—पशव एव, साक्षात्पशवः सन्ति। नास्ति संयमः, न वा किंचिदन्यत्।" द्वितीयदिने पुनस्स एव दर्शन-प्रार्थनापूरणकृपावितरणक्रमः प्राचलत्।

  

प्रायश एकवर्षमष्टौ मासांश्च कलिकत्तायां स्थित्वा श्रीमाता जयरामबाट्यामाव्रजत्। भक्तसमागमदीक्षादानादिषु दैनन्दिनवृद्धिरबोभूयत। श्रीमातरमतिघनिष्ठभावेन प्राप्तुं, शरीरेण ,मनसा च तस्याः सेवासंगसुयोगमधिगन्तुं चानेके भक्तास्तस्याः समीपे जयरामबाट्यामाजग्मुः। अनेके जना जयरामबाट्यां तस्या आगमनस्य प्रतीक्षां चक्रुः। इदानीं यावत् श्रीमाता स्वीयभ्रातृगृह एव आसीत्, किन्तु सेवकसेविकाभिर्भक्तैश्च सह भ्रातृगेहनिवासे तस्या महदसौविध्यमासीदेव,

किन्तु नास्ति कश्चनान्य उपायः। अतः कष्टमनेकं सोढ्वाऽपि श्रीमाता तेषां मध्य एवावसत्। तस्याः कष्टमिदं दूरीकर्त्तुं स्वामी सारदानन्दः, अन्ये च भक्ताः प्रयत्नपूर्वकं जयरामबाट्यां प्रायो द्विसहस्रमुद्राव्ययेन श्रीमातुः कृते पृथगेकं मृत्तिकागृहं भक्तानां च कृते निवासस्थानादिकं निर्मापितवन्तः। १३२३ वंगाब्दे ज्येष्ठमासे (१९१६ मई) श्रीमाता सेवकैः सह नवीनगृहं समाजगाम। मुक्तिकामिनां संन्यासिनां संसारतापसन्तप्तगृहमेधिनां शान्तिलाभाय स्थानमेकं निर्मितमभूत्।

श्रीमातुराभ्यन्तरिको विश्वमातृत्वप्रकाशः सर्वानेव चमत्कृतानकार्षीत्। सन्तानानामकुण्ठसेवायां श्रीमात्रा कियती तृप्तिः कियांश्चानन्दोऽन्वभूयत। केचन संन्यासिनो भक्ता भोजनानन्तरं स्वोच्छिष्टपात्राणि स्वयं प्रक्षालयितुं नयन्ति स्म। श्रीमाता मार्गं रुंधाना तस्थौ, अवोचच्च—"न, अहमेव नेष्यामि।" संन्यासिन आश्चर्यचकिता बभूवुः—"कीदृशीयं वार्ता। किमिदम्? भवत्याः प्रक्षालनेन न मम महदकल्याणं भविष्यति"—कम्पितकण्ठेन साधुना प्रोक्तम्। तदानीं श्रीमाता साश्रुनयना प्रोवाच—'पश्य, मातुरंके बालका मूत्रं पुरीषं च कुर्वन्ति। अहं तव कृते किमकरवं पुत्र।' संन्यासी शिरो नमयन् तस्थौ। तस्य नेत्रे सजले बभूवतुः।

श्रीमात्रा चैकदा प्रोक्तम्—"अहं सतोऽसतश्च माताऽस्मि।" 'आमजाद तुँते' क्रूरो मुहम्मदीयश्चौरो लुण्ठकश्चासीत्। जयरामबाटीसन्निकटे शिरोमणिपुरे तस्य गृहमभूत्। श्रीमातुर्नवीनगृहनिर्माणकार्ये यदाऽसौ दुष्टो मुहम्मदीयः संलग्नस्तदा प्रथमं तु ग्रामवासिभिर्महद्भयमनुभूतम्। अनन्तरं तैरुक्तम्–'अरे !! श्रीमातुः कृपया लुण्ठका अपि भक्ता बभूवुः।'

एकस्मिन् दिने श्रीमात्रा आमजादः स्वगृहोपप्रकोष्ठे भोजनार्थमुपवेशितः। तस्या भ्रातुष्पुत्री नलिनी पर्यवेषयत्। तां दूरादेव प्रक्षिप्य परिवेषयन्तीमवलोक्य श्रीमात्रा प्रोक्तम्—"एवमवज्ञया प्रदत्तवस्तु-

भोजनेन मानवस्य क आनन्दो भविष्यति ? त्वं समीचीनरीत्या परिवेषयितुं न शक्नोषि चेदहं परिवेषयामि ।" आमजादस्य भोजनानन्तरं श्रीमात्रा स्वयमेव तदुच्छिष्टस्थानं परिमार्जितम् । एतदवलोक्य—"अये पितृभगिनि, तव जातिर्गता" इति जल्पन्ती नलिनी कोलाहलमकरोत् । श्रीमात्रा निर्भर्त्स्य सा प्रोक्ता—"यथा शरत् मम बालकस्तथैव आमजादोऽपि ।" यतोऽसौ माता आसीत् ।

तस्या दिव्यमातृस्नेहेन इतरे प्राणिनो न वञ्चिता अभूवन् । तैरपि श्रीमाता स्नेहमयमातृरूपेण समधिगता बभूव । श्रीमातुः पार्श्वे शुक एक आसीत् । तया तन्नाम 'गंगाराम' इति संरक्षितम् । स्वीय 'गंगाराम' कृते तदीयः कीदृशः स्नेहः समादरश्चासीत् । कदाचिदसौ 'राधाकृष्ण' 'राम राम' चेति तमपाठयत् । सर्वान् "मा मा" इति भाषमाणानाकर्ण्य गंगारामोऽपि मातरं 'मा मा' इत्यभिधायाह्वयितुमशिक्षत । सा ताम्बूलमभक्षयत् । तदानीं गङ्गारामेण 'मा मा' इति प्रोक्तम् । ततश्च सा स्वरसनास्थं ताम्बूलं गङ्गाराममभक्षयत् । श्रीमाता पूजाया अनन्तरं बहिरागच्छत् । गंगारामश्च 'मा मा' इति शब्देनाह्वानमारभते स्म । पूजाया अनन्तरं श्रीमाता स्वहस्तेन गंगारामं फलं मिष्टान्नं चाभक्षयत् । गंगारामं प्रति श्रीमातुरियन्तमादरमवलोक्य कोऽपि भक्त ईर्ष्यया व्याहरत्—"अहमपि गंगारामो भवितुं शक्नुयाम् ।"

श्रीमातुरेका पालिता बिडाली आसीत् । एकदा तया ब्रह्मचारिण एकस्य विष्टरे प्रसवः कृतः । श्रीमात्रा तदैतद् दृष्टं तदा त्वरितमेव फेनकेन ब्रह्मचारिणो विष्टरवस्त्रादिकं सर्वं धौतीकृत्य परिष्कृतम् । तथापि भयमेतदासीत्, यदनन्तरमेतत्परिज्ञाने सति कदाचिद् ब्रह्मचारी बिडालीं हन्यात् । तेन ब्रह्मचारिणा साकं साक्षात्कारे जात एव श्रीमात्रा प्रोक्तम्—"बिडाली किमपि न वक्तव्या । सा तिष्ठत्यत्रैव, भुङ्क्ते चात्रैव, तदा प्रसवं कर्तुं कुत्र गमिष्यति ?"

जयरामबाट्यामेकदा प्रत्यूष एव धेनुवत्स एकः सातिशयं नर्दति स्म। नर्दनमाकर्ण्यैव श्रीमातुर्मनो व्याकुलीबभूव। सा "आयामि शीघ्र-मायामि। अहं द्रुतमेव त्वां मुञ्चामि"—इति जल्पन्ती अस्तव्यस्त-भावेन धावन्ती समागत्य वत्सममुञ्चत्।

*　　　*　　　*

जयरामबाट्यां सहजघनिष्ठभावेनैकदिनमपि यः श्रीमातरं प्राप्नोति, स एव ज्ञातुं पारयति यत् श्रीमातुर्मनसि स्वीयान् सन्तानान् प्रति कीदृशोऽपारः स्नेह आसीत्। एतादृशीनां लघीयसीनां घटनानां मधुमयो स्मृतिर्भविष्यत्कालाय पाथेयरूपा भूत्वा जीवनपर्यन्तं भक्तानां हृदि निरन्तरमतिष्ठत्। दिनमेकं, दिनद्वयमेव न हि, प्रत्युत यो वर्षाणि यावन्मातुः सन्निधावतिष्ठत्, स किलैकक्षणं कदापि तदीयोद्वेलितस्नेह-ममत्वादिषु न्यूनतां नाध्यगच्छत्! स एव स्नेहो विभिन्नरूपेण—लघुलघुघटनां द्वारीकृत्य अभिव्यक्ततामगच्छत्। सन्तानानां स्नेहपूर्वक-सपर्यानुष्ठाने श्रीमात्रा कियती तृप्तिरान्तरिकी प्राप्ता—इत्यस्य परिज्ञानं श्रीमातुः सन्तानसेवां विलोक्यैव भवितुमर्हति।

एकदा गिरीशमहोदयो जयरामबाटीमुपडुढौके। एकस्मिन् दिवसे तेन विलोकितं यत् श्रीमाता विष्टरवसनानि शिरोधानावरणानि च गृहीत्वा तत्प्रक्षालनाय पुष्करिणीघट्टं प्रयाति। रात्रौ शयनकाले गिरीश-महाशयः स्वकीयमेव विष्टरं दुग्धवत् श्वेतमपश्यत्। मातुरेवेदं कृत्य-मवधार्य गिरीशमहोदयमनसि यावत् कष्टमभूत् श्रीमातुः स्नेहमय-व्यवहारमालोच्य तावानानन्दोऽपि जातः।

जयरामबाट्यां श्रीमातुर्भवनं निरमीयत। एकः सेवको गृहकार्याय प्रातरेव समीपस्थग्रामेऽगच्छत्। शीतकालस्य ऋतुः। परावर्त्तने तस्य विलम्बोऽभवत्। सूर्यास्तगमनस्यैकहोरापूर्वं यदाऽसौ समागतस्तदानीम-पश्यत् यत् श्रीमाता भोजनपानमन्तरेणैव बुभुक्षितसन्तानं प्रतीक्षते।

विस्मितः सेवकोऽभियोगस्वरेणावोचत्—"मातः, भवत्याः स्वास्थ्यं समीचीनं नास्ति, भवति ! सन्ध्यासमयपर्यन्तं भोजनं विनैव तिष्ठति ?" श्रीमात्रा उत्तरितम्—"यदि त्वया न भक्षितं, तदाहं कथं भक्षयितुं शक्नोमि ?" अतः परं किमस्ति वक्तव्यम् ? सेवको निःशब्दं नतमस्तको भूत्वा भोक्तुमुपाविशत् ।

सर्वजयी भवति मातृस्नेहः । सा केवलं कथनमात्रेणैव माता नास्ति । एकस्य सेवकस्य करयोः कठिनश्चर्मरोगोऽभवत् । स स्वकीयेन हस्तेन भोक्तुं नाशक्नोत् । श्रीमाता द्विसन्ध्यमेव तं निजहस्तैनैव द्विदल-भक्तादीन्यभोजयत् । तदीयमुच्छिष्टं पत्रपात्रमपि सा स्वयं प्राक्षिपत् ।··· घटनेयमतिसामान्यरूपा, किन्तु श्रीमातुः स्नेहेन सिक्ता सैवासाधारणरूपं दधानाऽमरतां प्रपेदे ।

—:*:—

जयरामबाट्यां भक्तैः सेवकैश्च साकं चतुरः पञ्च वा मासान् नवीने भवने स्थित्वा श्रीमाता पुनः कलिकत्तामगमत्।

१९१६ ईसवीये मठे दुर्गोत्सवोऽभूत्। स्वामिनः प्रेमानन्दस्य विशेषप्रार्थनया श्रीमाता सप्तमीपूजादिवसे मठमागत्य पूजायाः कतिचिद्दिनानि उत्तरदिशि विद्यमाने उद्यानेऽतिष्ठत्। पूजाया आनन्दो महोत्सवानन्दे परिणतो बभूव। अनेके मानवा मातुः कृपामासाद्य धन्याः समभूवन्।

कलिकत्तायां निवसन्त्या श्रीमात्रा प्रायः प्रतिदिनं दीक्षा दीयते स्म। द्विसन्ध्यमेव भक्तैर्दर्शनार्थमागम्यत। दिनपर्यन्तं भक्तिमतीनां गमागमौ प्राचलताम्। इतश्च शनैः शनैस्तदीयं स्वास्थ्यं विगुणायमानमभूत्। तस्या दिव्यं शरीरमिदानीमधिकं पापभारमुद्वोढुमसमर्थमिवाभूत्। एतर्हि जीवनेऽन्तिमे मातृभावस्य गुरुभावस्य च परिपूर्णः प्रकाशः श्रीमातुः सम्पूर्णा सत्तां पर्यवेष्टयदिव।

श्रीमातुरेका महती दुर्बलताऽऽसीत्। सा किल कस्यचिदपि नयनयोर्जलं द्रष्टुं नाशक्नोत्। कस्याप्यश्रूणि तन्मातृहृदयमेतावदुद्वेलयन्ति, येनासौ नितरामधीरतां प्रत्यपद्यत। अश्रुबिन्दुद्वयविनिमयस्वरूपमेव तस्याः पार्श्वतः निर्वाणमुक्तिरासाद्यत—"मातः" इति शब्दोच्चारणेनैव तदीये मनसि एतावदान्दोलनमसृज्यत, येनासौ लोकान्तरीयेव संववृते। तस्याः सन्निधौ पात्रापात्रविचारो नासीत्। देशकालसीमतोऽप्यसौ परस्तादभूत्। "मातः" शब्दमुच्चार्य तिष्ठन्तं जनमियं स्वीयेऽभयप्रदेऽङ्के समाकर्षत्। एतदर्थं गोपालसुन्दर्यो

एकस्मिन् दिवसे मातुः समीपेऽभियोग इवानुष्ठितः! श्रीमाता शान्ति-पुरस्सरं सर्वमाकर्ण्य प्रोवाच—"किं करोमि गोपाल, 'मातः' शब्देन यदा कश्चिदाह्वयति तदाऽहं स्वात्मनो न प्रभवामि।"

एका कुलीनमहिलाऽऽसीत्। परकीयवञ्चनेन सा पथभ्रष्टाऽभवत्। अनन्तरं च स्वदोषे परिज्ञाते मर्माहता सत्यन्वतपत्। आश्रयं शान्ति चाधिगन्तुं श्रीमातुश्चरणशरणमुपाढौकत। मन्दिरप्रवेशे सङ्कोचमञ्चन्ती देहलीपार्श्वे स्थित्वा रोरुद्यमाना स्वीयामखिलामपि पापकथां व्याहरन्ती मातरमुवाच—"मातः, अस्ति मदर्थं कोऽप्युपायः? अहं भवत्याः पवित्रे मन्दिरेऽत्र प्रवेष्टुं योग्या नास्मि।" श्रीमाता स्वयमेव पदद्वयमग्रे गत्वा महिलां तां कण्ठे समाश्लिष्य सस्नेहमुवाच—"एहि पुत्रि, गृहे समागच्छ। पापं किमस्ति, त्वया ज्ञातम्। एतदर्थमनुतपसि। एहि, अहं तुभ्यं मन्त्रं दास्यामि—श्रीठाकुरस्य चरणसरसीरुहयोः सर्वः समर्पयस्व, कुतो भयम्?" पतितोद्धारिण्या मात्रा पतितायाः कर्णे तदेव तारक-ब्रह्मनामोपदिष्टम्। या धूलिः मृत्तिका च देहसंलग्नाऽऽसीत् तां परिष्कृत्य निजाङ्कमारोप्य सस्नेहादरेण तया सा आप्यायिता।

* * *

परवर्त्तिनि माघमासे श्रीमाता पुनः जयरामबाटीमागता, एक-वर्षतोऽप्यधिकं तत्र तस्थौ।

श्रीमातुर्मनसि कृपाया आपूर इव प्रावहत्। स उच्छलन् निर्विचारं सर्वमपि प्रवाहयामास। तदानीं श्रीमातुः प्रायो ज्वरो भवति स्म, शरीर-मपि नितरां दुर्बलं बभूव। 'शरत्' महाराजेन यदैतत् परिज्ञातं तदानीं तेन किञ्चित्समयकृते भक्तसमागमदर्शनादीनां निरोधाय निर्देशः कृतः। तदानीमेव काले सुदूरतो बरिसालात् (अधुना पूर्वपाकिस्तानतः) एको भक्तो जयरामबाटीमागत्योपतस्थे। व्याकुलो भूत्वा श्रीमातुर्दर्शनाय, तत्कृपाधिगमाय च समायातोऽस्ति। किन्तु सेवकः कथमपि मातुर्दर्शनं

नानुज्ञातवान्। भक्तस्य व्याकुलप्रार्थनाया अपि कोऽपि प्रभावः सेवके नापतत्। भक्तसेवकमध्ये वृत्तान्तमिममाश्रित्य वार्ता प्रचचाल। कोलाहलमाकर्ण्य अन्तर्यामिणी श्रीमाताऽस्तव्यस्तभावेन सहसा बहिर्द्वारमागता खिन्ना च भूत्वा सेवकमगादीत्—"त्वमस्यागमनं कथं निरुणत्सि ?" सेवक उत्तरमदात्—"शरत्-महाराजो न्यषेधीत्। अस्वस्थशरीरतो दीक्षादानेन भवत्याः शरीरमधिकतरमस्वस्थं भविष्यति ?" श्रीमाता किञ्चिदुत्तेजिता प्रोवाच—"शरत् किं कथयिष्यति ? एतेषां कृत एव तु ममागमनम्। अहमेतस्मै दीक्षां दास्यामि।" अनन्तरमसौ समागतं भक्तं सम्बोध्य प्रोवाच—"आयाहि पुत्र, अद्य त्वं किञ्चिद् भुक्त्वा पीत्वा विश्रामं कुरु। श्वस्तुभ्यं दीक्षां दास्यामि।" याचनात् प्रागेव प्राप्तिः। श्रीभगवतः समीपे किमपि याचनं न भवति। स तु, अस्त्यन्तर्यामी–हार्दिकत्वादसौ याचनमन्तरेणैव सर्वमभावं परिपूरयति।

शीतज्वरेण श्रीमातुः शरीरं शनैः शनैरेतावद्दुर्बलतां गतं, येन सर्वे चिन्तिता अभूवन्। विवशो भूत्वा स्वामी सारदानन्दः कलिकत्तात एकं डाक्टरमानयत्, यदा च मातुर्ज्वरोऽल्पतां गतस्तदानीं तां कलिकत्तामगमयत्। १९१८ ईसवीयमईमासस्य सप्ततारिकाया वृत्तान्तोऽयमास्ते।

एकस्मिन् दिवसे बागबाजारमठे संन्यासिना सन्तानेनैकेन श्रीमाता प्रोक्ता—"भवती इयद्भ्यो जनेभ्यो मन्त्रं प्रयच्छति, किंतु तेषां चिन्तनं तु न कदापि करोति।... गुरुः शिष्यस्य परिज्ञानं सर्वविधं परिरक्षति—सदैव पश्यति यत् शिष्यस्य साधने काऽपि समुन्नतिर्भवति न वा ? अतोऽहं मन्ये भवत्येयद्भ्यो लोकेभ्यो मन्त्रदीक्षा न दातव्येति !" इदमाकर्ण्य श्रीमाता किञ्चिद् गम्भीरा भूत्वा प्रोवाच—"भारमस्याहं श्रीठाकुरस्योपरि समर्पितवती, प्रतिदिनं मयाऽसौ निवेद्यते, यद् भवता येऽपि यत्र सन्ति तेषां सर्वविधं निरीक्षणं परिरक्षणं च सर्वदैव कर्त्तव्यम्।

इदमपि त्वयाऽवधेयं यदिमे मन्त्राः श्रीठाकुरेण प्रदत्ताः सन्ति, एते सिद्धमन्त्रा मह्यं तेनैव दत्ता विद्यन्ते ।''...

एवंविध एव श्रीमातुरसीमस्नेहस्य, अपारकरुणायाश्चैकोऽन्यदिनं प्रसङ्गो वर्तते । पुत्री 'योगेन्द्रा' हसन्ती श्रीमातुरभिमुखं निरीक्ष्य जगाद—''श्रीमाताऽस्मासु स्निह्यति, परन्तु न तथा यथा श्रीठाकुरः स्नेहमकरोत् । बालकशिष्यान् प्रति तस्य मनसि कियती व्याकुलता, कियांश्च प्रेमभाव आसीदित्यहं किं ब्रवीमि ?'' श्रीमाता स्मितमुखी प्रोवाच—''बाढम् । परंतु तेन केचित् साधीयांसो बालकाः संगृहीताः । स किलात्रामुत्रापि निरीक्षणं परीक्षणं च विधत्ते । परमिमामकिञ्चनभक्तपरंपरां पिपीलिकाश्रेणीमिव मत्पार्श्वेऽसौ प्रस्थापयामास ।'' सत्यं ठाकुरसमीपस्थभक्ततुलनायामेते सर्वे पिपीलिकश्रेणीस्वरूपा एव ।

दीक्षादानप्रसङ्गेऽत्र श्रीमाताऽन्यदा भक्तमेकं प्राह—''मया यत् किञ्चिदनुष्ठेयमासीत्, ) पापक्षयो मुक्तिश्च ) तत् सर्वमेकस्मिन्नेव समये (दीक्षाकाले) शिष्याभ्यन्तरमाध्यात्मिकशक्तिसंक्रमणक्रमेण समनुष्ठितम् । यदि सद्यः शान्तिमधिगन्तुमिच्छसि साधनभजनमनुतिष्ठ । अन्यथा मृत्योरनन्तरमेव शान्तिर्लप्स्यते ।''

* * *

गिरीशमुक्तिभारः श्रीठाकुरेण स्वशिरसि गृहीतः । अन्तिमरोगकाले काशीपुरोद्याने चैकदा कल्पतरुर्भूत्वासौ भावाविष्टः सन् स्पर्शनेन अनेकान् भक्तान् लब्धचैतन्यानकरोत् । गिरीशमुक्तिभारस्वीकारः श्रीठाकुरस्य जीवोद्धारकार्यस्यैका साधारणी घटना । श्रीठाकुरेण अन्येषामपि संख्यातीतभक्तानां भारो गृहीतः, नानाभावैश्च तेषां चैतन्यसम्पादनमनुष्ठितम् ।

स्वस्योपरि परकीयभारग्रहणभावस्य पूर्णो विकासः श्रीमातुर्जीवने परिदृश्यते । श्रीठाकुरस्य समीहया तया बहूनामाश्रितसन्तानानां भारो

गृहीतः। अनेके तया प्रोक्ताः—"न युष्माभिः किमपि करणीयमास्ते, युष्माकं कृतेऽहमस्मि कर्त्री।" पुनश्चानेकेभ्यः श्रीमाता 'त्रिसत्य' रूपं शपथं कृत्वाभयदानमकरोत्। फलतः सर्वदैव तेषां मनो भयमुक्तमभूत्।

शरणागतिः पूर्णस्यात्मनिवेदनस्य साधनमास्ते। यथा शिशुः सर्वदा सर्वथा च मातरमेव निर्बिभर्त्ति, तथैव श्रीमात्रा पूर्णरूपेण शिशूनां सर्वविधोऽपि भारः स्वस्योपरि गृहीतः। शिशुः स्वीयां मातरं विहाय कमप्यन्यं न जानाति। एकमात्रं मातुरेव तस्य चिन्ता भवति। तथैव भक्ता अपि पूर्णरूपेण भगवते सर्वं समर्प्य, सर्वथा तच्चरणयोरात्मानमर्पयन्तः प्रभोः समीहायां निर्भराः सन्तस्तिष्ठन्ति। भक्तानां सर्वा अपीच्छाश्चेष्टाश्च भगवति विलीयन्ते।

एकदा श्रीमात्रा निजाश्रितसन्तानाः प्रोक्ताः—"सदैव युष्माभिः स्मरणीयमिदं यदेको (महापुरुषो) निरन्तरं वः पृष्ठगो वर्त्तते। मातुरङ्के शिशुर्निर्भयो भूत्वा तिष्ठति। अहं तु वर्त्ती एव। पुनः कुतो-भयमस्ति ?"—इयमेव श्रीमातुरभयवाणी।" अन्ते च गिरीशस्य "अहम्भावः" श्रीरामकृष्णस्याभ्यन्तरे व्यलीयत। गिरीशसत्ता श्रीठाकुरे विलीनतामापद्यत। तस्य समस्तास्वपि चिन्तासु श्रीठाकुरो व्याप्नोत्। तस्य प्रत्येकश्वासप्रश्वासे श्रीठाकुरस्यैव स्मृतिर्बोभूयते स्म। स च (गिरीशः) व्याजहार—"य एष श्वासः प्रचलति। सोऽपि श्रीठाकुरस्ये-च्छयैव।" गिरीशोऽन्तिमदिने निर्भररूपेण साधनामनुष्ठाय शरणागत्या सिद्धिं प्राप्नोत्।

एकदा श्रीमाता कोयालपाड़ामागच्छत्। एक आश्रितः सन्तानो मनसो दारुणामशन्तिं निवेद्य कल्याणरूपिणीं प्रोवाच—"मातः, साधनं भजनं च न किमपि सम्पद्यते।" तया आश्वासनं ददत्या प्रोक्तम्—"न त्वया किमपि कर्त्तव्यम्, विधेयं मयैव विधास्यते।" एतादृशस्या-श्वासनस्य नासीदाशा भक्तस्य। सन्तानेन प्रश्ने कृते श्रीमात्रा पुनरपि

तदेवाभयवचनं द्विरुक्तम्—"न, त्वया किं करिष्यते ? यत् किमपि कर्त्तव्यमहमेव करिष्यामि।" अपरस्य कस्यचन सन्तानस्य कष्टमाकर्ण्य श्रीमाता अभयदानं ददती प्रोवाच—"यद्यहं श्रीठाकुरस्य समीपं यास्यामि, तदा निश्चयमवधारयत, यद् यूयमपि नूनं यास्यथ।..." तया समस्ताश्रितसन्तानानां भारः स्वस्योपरि संस्थापितः। येनापि श्रीरामकृष्णचरणौ शरणीकृतौ, तेन श्रीमातुरभयप्रदस्याङ्कस्याश्रयो नूनमेवाधिगतः।

*   *   *

१९१८ ईसवीये बागबाजारस्थितभवने महता समारोहेण श्रीमातुर्जन्मोत्सवः सम्मानितः। अतीतसंख्यैर्भक्तैः श्रीमातुर्दर्शनं स्पर्शनं च समनुष्ठितम्। अनेके च तदीयचरणसमर्चनं कृत्वा तस्या आशीर्वचनं च सम्प्राप्य स्वीयमात्मानं धन्यतां नीतवन्तः। सर्वेषां पुष्पाञ्जलिसमर्पणानन्तरं श्रीमात्रैकः सेवकः प्रोक्तः—"पुष्पपात्रेऽत्र यत् कुसुमचन्दनाद्यवशिष्यते, तत्सर्वं हस्तयोर्गृहीत्वा. ये बालकाः शिशवोऽत्र न समागताः, तेषां नामभिः पुष्पाञ्जलिं समर्पयत।" सेवकाः श्रीमातुश्चरणयोः पुष्पाञ्जलिमर्पयितुं प्रावर्त्तन्त, श्रीमात्रा च राखाल-तारक-खोका-प्रभृतीनां नामानि स्मारितानि। अवशिष्टा ये बालका यत्र यत्र आसन् तेषां सर्वेषां कल्याणकामनया तया स्वचरणयोः पुष्पाञ्जलयो दापिताः। चरणयोर्जवाकुसुमानि, बिल्वपत्राणि चार्पितान्यभूवन्। श्रीमाता नेत्रे निमील्य उपविष्टाऽऽसीत्, सर्वेषां बालकानां कृते आशीर्वादान् प्रायच्छत् प्रार्थनां चाकार्षीत्। श्रीमातुः सैव दक्षिणामूर्त्तिश्चिराय भक्तहृदयानां ध्यानवस्तु बभूव।

श्रीमातुर्जन्मतिथौ बहवो भक्ता बहुविधपूजासामग्रीमानीतवन्त आसन्। अनेकैर्भक्तैस्तच्चरणयो रूप्यकाणि समर्प्य प्रणामः कृतः। नूतनवस्त्राणां फलमिष्टान्नादीनां बहूनां वस्तूनां राशिरेकत्राभवत्। जीर्णशीर्णवस्त्रं धारयन्नेको भक्तः समागत्य हरीतकीमेकामर्पयित्वा श्रीमातुश्चरणौ

ववन्दे । श्रीमात्रा तस्मै पुष्पकला आशीर्वादाः प्रदत्ताः, भक्तानां गमनानन्तरं तया सेवक एकः प्रोक्तः—'हरीतकीमेतामुत्थाप्य रक्ष । कर्त्तयित्वा किंचिन्मह्यमपि देयम् । अहो ! कियत्या भक्त्या समर्पितेयम् ।…' सा भक्तेरेव रसास्वादनमकरोत् ।

जयरामबाट्यां श्रीमात्रा जगद्धात्रीपूजनमायोजितम् । सन्ध्यायाः किञ्चित्कालात्पूर्वमेव पूजा समाप्ताऽभवत् । बहवो जनाः श्रीमातुश्चरणयोर्विकसितकमलपुष्पाणि समर्प्य भक्त्यञ्जलिमर्पयांचक्रुः । श्रीमाता भावस्था भूत्वा सर्वेषां समर्चामग्रहीत् । अनेकेषां हनुस्थानं स्पृष्ट्वा स्नेहचुम्बनमकरोत् । बहूनां शिरसि हस्तं भ्रामयित्वा आशिषः प्रायच्छत् । ततश्च श्रीमाता सेवकमेकं प्राह—"कानिचिदन्यानि पुष्पाणि समानय । राखाल-तारक-शरत्-खोका-योगेन्द्रगोपालादीनां नामभिः पुष्पाणि समर्पय । मम ज्ञाताज्ञातानां सर्वेषां बालकानां कृते पुष्पाणि समर्पय ।" सेवकैः पुष्पांजलयः समर्पिता अभूवन्, पुण्यमयी श्रीमाता च करौ बद्ध्वा श्रीदेव्या मूर्त्तेरभिमुखं निरीक्षमाणा समुपविष्टा । एतेनैव स्थिरभावेनोपविष्टायास्तस्याश्चिरकालो व्यत्यगच्छत् । अनन्तरं च तया प्रोक्तम्—'सर्वेषामैहलौकिकं पारलौकिकं च मङ्गलं भूयात् ।"

श्रीमातुर्जन्मतिथिसम्बन्धिन्याः पूजायाः कतिचिद्दिनानन्तरं (२७-जनवरी १९१९) सा राधूमादाय स्वग्रामाभिमुखं प्रतस्थे । राधूः अस्वस्था आसीत् । पत्तनस्य कोलाहलस्तया न सोढुं शक्यते स्म । अतः श्रीमाता राधूमादाय सेवकैः सह षण्मासान् निर्जने विशुद्धे च ग्रामीणवातावरणे कोयालपाड़ास्थे जगदम्बाश्रमेऽतिष्ठत् ।

श्रीमातुरस्मिन् विजननिवाससमयेऽपि दूरदूरादनेके भक्तास्तस्याः कृपाधिगतये समायान्ति स्म । तया न कश्चिदपि विमुखीक्रियते स्म । तस्या अयाचितकृपावितरणमवलोक्य जनानां मनस्येतदेव समुदियाय यदियं नरलीलामुपसंहर्त्तुं समीहते । बहुवारमसौ गम्भीरभावस्था बभूव । एकेन करेण राधूसेवापरिचर्यायोगमायामहाजालम्, द्वितीय-

करेण निरन्तरं कृपावितरणं च प्राचलत्। कदाचिदस्माभिर्दृश्यते यदियमस्तव्यस्तभावेनान्यमनस्का सती असीमाभिमुखं निरीक्षमाणा समुपविष्टा वर्तते।

एकदा सन्ध्यानन्तरं श्रीमात्रे भक्ताप्रेषितदनिकपत्राणि पठित्वा श्राव्यन्ते स्म। नयने मीलयित्वाऽसौ स्थिरभावतः पत्राण्यश्रृणोत्। मध्ये मध्ये प्रार्थनामप्यकरोत्—"ठाकुर, एतेषां लौकिकं पारलौकिकं च कल्याणं क्रियताम्।" श्रीमातुः कण्ठस्वरे कियती व्याकुलताऽऽसीत्! पत्रपठनसमाप्तेरनन्तरं तया प्रोक्तम्—"केवलं संसारिक-दुःख-कष्ट-शोक-सन्तापाभावादीनामेव चर्चां कुर्वन्ति, एतेभ्यः परित्राणं वाञ्छन्ति, भगवन्तं न कोऽपि समीहते।…श्रीठाकुरं प्रार्थयामि—'ठाकुर, एतेषामिह लोके परलोके च भवानेव रक्षां करोतु।' माता भूत्वा अहं किं कथयामि? कियन्तो जनाः साधुरीत्या तत्समीहां कुर्वन्ति? तादृशी व्याकुलता कुत्र? इयन्तो भक्तिबहुला आग्रहग्रहिलाश्च सन्ति, परमेकं सामान्यभोगवस्तु प्राप्यैव ते सन्तुष्टा जायन्ते। व्याहरन्ति—'अहो! कियती दयास्त्येतदीया।…"

—:*:—

कोयालपाड़ायां राधूः एकं तनूजं प्रासोष्ट ( २४ वैशाखे १३२६ )। श्रीमात्रा तदीयं नाम रक्षितं—'वनविहारी।' प्रेम्णा सा तं 'बनू' नाम्ना समाह्वयत्। सार्धद्वयमासावस्थामधिगते शिशौ श्रीमाता राधूमपरांश्च गृहीत्वा जयरामबाटीमागमत् ( ४ श्रावणे )। राधूशरीरं तदानीमत्यन्तं दुर्बलमासीत्—एकप्रकारेण शय्याशयनदशाऽभूत्। राध्वाः सर्वविधसेवाव्यतिरिक्तं श्रीमातुरेकमपरं महत्त्वपूर्णं कार्यमभवत्—राधूशिशोर्लालनपालनम्। प्राय ऊनविंशतिवर्षेभ्यः पूर्वं यथाऽसौ राधूमुत्थाप्य निजमङ्कमारोपयत्, तथैवेदानीं 'बनू' विषयेऽपि कर्त्तव्यमापतत्। इयमासीद् योगमायाया लीला। श्रीमातुः शरीरं शनैः शनैः क्षीणतामापद्यत। इदानीमधिकसहनमसह्यतामगमत्। तथापि नवनवैर्भावैर्योगमायामात्मीयामकरोत्। विक्षिप्ता, ( राधूमाता ) राधूः, 'बनू'श्चेति त्रयो मिलित्वा श्रीमातरं मायाजाले ग्रस्तामिवाकुर्वन्।

* * *

जयरामबाट्यामागमनानन्तरमेव मध्ये मध्ये श्रीमातुः शीतज्वर आयाति स्म। ज्वरे वृद्धिं गते साऽशेत, पुनरुत्थाय सांसारिके कार्यजाते भक्तपरिजन सेवायां च संलग्ना बभूव। दीक्षार्थिनः समागमन्—तेभ्यो दीक्षादानमपि न निरुद्धमकरोत्। श्रीमातुः स्वास्थ्यदृष्ट्या जयरामबाट्यां तस्या निवासो न हितकरो भविष्यति। परन्तु राधूश्चापि तस्मिन काले नितरां दुर्बलाऽऽसीत्। स्वीयेन पौरुषेण स्थातु-

मपि नाशक्नोत्। राधूनिमित्तमेव श्रीमात्रा जयरामबाट्यां निवासः कृतोऽभवत्।

१३२६ वंगाब्दे स्वजन्मतिथावेव (२७ आग्रहायणे) मध्याह्नोत्तर-समये श्रीमातुरल्पो ज्वरोऽभूत्। कानिचन दिनानि एवं प्रकारेण ज्वरोऽतिष्ठत्। अन्तरेऽन्तरेऽसौ किञ्चिन्निज्वराऽभवत्। किन्तु पुनर्ज्वरः प्रत्यावर्वृते। एवमेवास्वस्थायास्तस्याः शनैः शनैः शरीरमत्यन्तं क्षीणमभूत्। किन्तु अस्मिन्नस्वस्थतासमयेऽपि तया दीक्षादानं न निरुद्धम्, यतो भक्ता महतीमाशामादाय दूरदूरतरात् समागता अभूवन्। बहुवारमियं निजामस्वस्थतां गुप्तामकार्षीत्। यतः सम्भवतो भक्तानां दर्शनादीनि निरुद्धानि स्युः, तदर्थं सेवकाश्च चिन्ताग्रस्ता भवेयुः।

श्रीमातुः सर्वदा रुग्णतासंवादमाकर्ण्य स्वामिना सारदानन्देन चिकित्सार्थं तस्याः कलिकत्तागमनव्यवस्थां चक्रे। १३२६ वंगाब्द-फाल्गुनस्य पंचदशे दिवसे श्रीमाता कलिकत्तामाययौ। तस्याः कङ्कालमात्रावशिष्टं देहं दृष्ट्वैव भक्तिमत्यः प्रोचुः—"युष्माभिः कीदृशी माता समानीता? एतानि तु युष्माभिः केवलं चर्मास्थीनि समानीयोप-स्थापितानि। अस्माकमनुमानमप्येतन्नासीत् यन्मातुः शरीरमेता-दृशमस्वस्थं सम्भवितुं शक्ष्यति।" स्वामिना सारदानन्देन नितरां तत्परतया श्रीमातुश्चिकित्सायाः सुप्रबन्धो विहितः। होमियोपैथिकी आयुर्वेदिकी एलोपैथिकी च चिकित्सा क्रमेण एकस्या अनन्तरमेका प्रचचाल। कलिकत्तायाः ख्यातनाम्नां चिकित्सकानां चिकित्सा प्राचलत्। आन्तरिकसपर्यायां पथ्यादिषु च काचित् त्रुटिरासीदेव न हि। प्रथमतः श्रीमातुः स्वास्थ्ये काञ्चिदुन्नतिमालोक्य सर्वे आशास-मन्विता अभूवन्। प्रागिव साम्प्रतमपि सा शनैः शनैः स्वास्थ्यं प्राप्स्यते—इत्याशया साहसमनुष्ठाय सर्वे सेवकाः सेविकाश्च सेवायां संलग्ना बभूवुः। ··

श्री मातुः शरीरं नितरामस्वस्थमिति निर्दिश्य दर्शनादौ भक्ता निरुद्धा बभूवुः। तदानीमपि यदा श्रीमाता आत्मानं किञ्चित् स्वस्थ मन्वभवत्, बहुभ्यो जनेभ्यो विशेषरूपेणाशिषं प्रायच्छत्। एकस्मै द्वाभ्यां वा दीक्षां चापि प्रादात्। ··तस्याः शरीरं शनैः शनैरतिदुर्बलतां क्षीणतां चागच्छदासीदिति निभाल्य साधवो भक्तसन्तानाश्च नीरवमश्रूण्यमुञ्चन्।

चैत्रमासस्यारम्भे श्रीमातुः शरीरमतिनिर्बलमवलोक्य संन्यासिना सन्तानेनैकेन नितरां दुःखं प्रकाशितम्। श्रुत्वेदं श्रीमाता प्रोवाच— "आम् पुत्र, अति दुर्बलं त्विदं जातम्। चिन्तयामि—शरीरेणैतेन यत् श्रीठाकुरेण कारयितव्यमासीत्, तत् पूर्णतां गतम्। इदानीं मनः सर्वदा तमेव समाहृत। अन्यत् किंचिदपि मह्यं न रोचते। एतदेव पश्य, राधूं प्रति मम इयती प्रीतिरासीत्। इदानीं तस्याः सम्मुखमागमनमपि मे न रोचते। सा कथं सम्मुखमागत्य मदीयं मनो नीचैराक्रष्टुं चेष्टते। श्रीठाकुरेण स्वीयं कार्यमनुष्ठातुं शरीरमेतद् दत्त्वा एतावद्दिनानि मनो नीचै रक्षितम्। अन्यथा तस्य गमनानन्तरं ममावस्थानमत्र किं सम्भवम्?"

श्रीठाकुरस्याह्वानमिदानीं श्रीमातुः कर्णगोचरतां गतमिवाभूत्। सापि महाप्रयाणाय प्रस्तुताऽभवत्। एकदा प्रायशः सार्धैकवादने द्विवादने वा तदीयो ज्वरो वर्धितुमारेभे। सेवको नित्यमिव तस्या आस्तरणसमीपे समुपविश्य वातमकुर्वन्। श्रीमाता सेवकस्य वक्षसि पृष्ठे च हस्तं भ्रामयन्ती तस्य शुष्कं मुखं निरीक्षमाणा सकरुणं प्रोवाच—"मया ज्ञायते यत् एतद्देहे गते युष्माभिमहत्कष्टमनुभूयते।" सेवकस्य नेत्रे सजले अभूताम्। आत्मानं स्थिरीकृत्य निम्नाननेन तेन प्रोक्तम्—"मातः, किमिदं सर्वं किमुच्यते भवत्या? औषधेन यद्यनुरूपं फलं नोत्पद्यते तदा भवती श्रीठाकुरस्य सेवायाम् स्वशरीरस्य कृते किंचित् निवेदयतु, तदा सर्वं निरुपद्रवं भवेत्।"

श्रीमात्रा मन्दं मन्दं हसन्त्या प्रोक्तम्–"कोयालपाडायाम् एतावान् ज्वर आयाति स्म यदहमबोधा सती विष्टरेऽपतम। किन्तु बोधे जाते शरीरस्यैतस्य कृते यदैवाहं तमस्मरं तदैव तस्य दर्शनमभवत्।... युष्माकमुपरि अवधानं दत्त्वा मध्ये मध्ये शरीरस्यैतस्य कृते श्रीठाकुराय मया किं न निवेदितम्? किन्तु शरीरार्थं यदाहं तं संस्मरामि तदा कथञ्चिदपि तस्य दर्शनं न लभ्यते। बुध्यते मया यदेतत् शरीरमधिकं रक्षितुं तस्य समीहा नास्ति। शरत् स्थास्यति।"

क्रमशः सर्वविधामपि चिकित्सां व्यर्थीकुर्वन् रोगो दिनानुदिनं ववृधे। दिने वारत्रयं वारचतुष्टयं च ज्वरोऽभवत्। ज्वरस्य पित्तप्राधान्यात् शरीरेऽसहनीया ज्वालाऽऽसीत्। सा प्रोवाच—"जलपर्णीसमाच्छन्नपुष्करशीतलजले गत्वा मज्जयेयम्।" सेविका हिमखण्डं स्वहस्तोपरि संस्थाप्य पुनस्तमेव हस्तं तस्याः शरीरे भ्रामयांचक्रुः। एतादृशकष्टप्रदरोगस्याक्रमणेऽपि सर्वैरेव तदीयस्नेहस्पर्शः प्राप्यते स्म। रोगस्य विवरणं परिज्ञातुं सेवकाः श्रीमातुरभ्यर्णमुपतस्थुः। प्रातरेव वैद्यपार्श्वे गन्तव्यं भविष्यति। श्रीमात्रा स्नेहसम्भृतस्वरेण प्रोक्तम्—"भुक्त्वा गन्तव्यम्। विलम्बो भविष्यति।" डाक्टराः, वैद्याश्चागच्छन्। सा स्वयमेव सर्वेभ्यः फलं मिष्टान्नं च प्रादापयत्। आरामबागस्य भक्ताः समागताः सन्ति। अतिक्षीणस्वरेण, विरम्य विरम्य, शनैः शनैः श्रीमात्रा ते पृष्टाः—"स्वस्तिमन्तः स्थ पुत्राः? किमपि भोक्तुं न शक्यते। अतिदुर्बलतां गतास्मि। वरदाप्रसन्नो (मातुर्भ्राता) ममार।" ग्रामस्य वृत्तान्तमपृच्छत्—"वृष्टिरभवत् किम्? अत्र प्रसादं भोक्ष्यथ?" कियद्दिनेभ्यः पूर्वम् आरामबागस्य भक्तैः रमणीनाम्न्या एकस्याः स्त्रियो हस्तेन कानिचित् आमतालफलानि प्रेषितानि। तत्सम्बन्धे श्रीमात्रा प्रोक्तम्—"रमणी कदा समायाता, किमपि न परिज्ञातम्—ज्वरे बोधो नासीत्। एतत् तस्यै वक्तव्यम्, येन सा दुःखिनी न भवेत्।"

एतादृश्यां रुग्णावस्थायामपि कस्यापि सेवाग्रहणे श्रीमाता कुण्ठिताऽबोभूयत । स्वीयसेवायास्तया कस्मैचिदवसर एव न प्रदीयते स्म। श्रीमातुर्मध्याह्नपथ्यं सम्पन्नमासीत् । तां शाययितुमेकः सेवको वातमकरोत् । चतुःपञ्चक्षणानन्तरमेव श्रीमात्रा प्रोक्तम्—"इदानीमधिकं न, तव हस्तयोः कष्टं भविष्यति ।"

सेवकः प्रोवाच—"नहि मातः, एतत्तु साधारणं व्यजनम्, मम हस्ते किञ्चिदपि कष्टं न भवति ।" नेत्रे निमील्य मात्रा पुनः प्रोक्तम्—"अधुना पुत्र, तव करयोः कष्टमापतिष्यति । त्यज, स्वयमहं शये ।"···कियत्कालं शान्ता भूत्वा पुनरसौ प्रोवाच—"पुत्र, त्वदीयकरयोः कष्टं जायते, इदमवधार्य मम निन्द्रा नायाति । त्वया व्यजनं निरुध्यतां, तदाहं निश्चिन्ता शयिष्ये ।" विवशतया व्यजनमवरुद्धमक्रियत ।···

कस्या अपि चिकित्सायाः किमपि फलं नावलोक्य सर्वे म्रियमाणा इवाभवन् । आहारे श्रीमातुर्विशेषाऽरुचिरुदपद्यत । शरीरं नितरां क्षीणतामगच्छत् । गृहस्य काष्ठचतुष्कीमपसार्य भूमावेव तस्या आस्तरणमास्तीर्णम् अक्रियत । इतश्च श्रीमाता शनैः शनैः सातिशयमन्तर्मुखत्वं प्रपन्नाऽभूत् । प्रायशश्चक्षुषी निमील्य शयाना तस्थौ । उपायान्तरमनवलोक्य स्वामी सारदानन्दो दैवप्रतिकारस्य चेष्टामकरोत् । अनेकदिनानि बहुविधानां शान्तिस्वस्त्ययनादीनामनुष्ठानमभूत् । किन्तु श्रीमातुः स्वास्थ्ये न काचिदुन्नतिरदृश्यत ।

शनैः शनै रक्तहीनतया हस्तपादेषु शोथो व्यलोक्यत । दुर्बलताधिक्यात् उत्थातुमपि शक्तिर्नासीत् । विष्टर एव शौचादीनि कारितान्यभूवन् । प्रतिदिनं द्विवारं त्रिवारं च ज्वरोऽभवत् । हस्तपादेषु ज्वलनमसह्यमबोभूयत । प्रायशो माता प्रावोचत्—"गङ्गातटं मां नयत । गङ्गायाः समीप एवाहं शीतला भविष्यामि ।" किन्तु डाक्टरैरस्यामवस्थायां तस्याः शरीरस्य दोलनहिण्डनं निवारितम् ।

नरलीलासंवरणस्य केभ्यश्चित् दिनेभ्यः पूर्वं श्रीमात्रा सेवक एकः प्रोक्तः—"त्वं राधूप्रभृतीन् सर्वान् जयरामबाटीं प्रापय।" तदीयमादेशमिममाकर्ण्य सर्वे नितरां चिन्तामापेदिरे। शरत्-महाराजः श्रुत्वेदं श्रीमातरं नानाभावैः प्रत्यबोधयत्—"भवत्याः शरीरमिदमस्वस्थमवलोक्य ताः प्रस्थाने कष्टमनुभविष्यन्ति। भवत्यां किञ्चित्स्वस्थायां सत्यामिमाः सर्वा गमिष्यन्ति।" श्रीमाता किञ्चिन्मौनमवलम्ब्य पुनर्जगाद—"तासां प्रेषणमेव समीचीनमासात्। अस्तु, ता मम समीपे नागच्छन्तु। इदानीं तु तासां छायामपि द्रष्टुमीहा नास्ति।"··· श्रीमातुर्भवने सर्वत्र विषादस्य घनान्धकार इव परिव्याप्तोऽबोभूयत।

एकदा मध्याह्ने राधूः पार्श्वस्थिते प्रकोष्ठे शयानाऽभवत्। तस्याः पुत्रः श्रीमातुः प्रियो 'बनू' जानुबलेन रिङ्गमाणः श्रीमातुर्विष्टरसमीपमागत्य तस्या वक्षसि समारोढुमचेष्टत। इदमवलोक्य तं च लक्ष्यीकृत्य श्रीमाता प्रोवाच—"युष्माकं माया मया पूर्णरूपेण कर्त्तिता। गच्छ गच्छ, नेदानीमधिकम्।" पार्श्वे समुपविष्टं सेवकमगादीत्—"एनमुत्थाप्य बहिः स्थापय। सर्वमेतन्न रोचते मह्यम्।" सेवको बालकं नीत्वा तस्य मातामहीपार्श्वे पर्यत्यजत्।···

* * *

श्रीमात्रा न कदापि काचिदिच्छा प्रकाशिता। साऽपि तु यन्त्रवत् श्रीठाकुरस्य समीहानुसारं प्रचलति स्म। श्रीठाकुरस्यैवेच्छया नरदेहे निवासः नरलीलानुष्ठानं च तस्या अभवत्। अन्तसमयेऽपि "यदा श्रीठाकुरो नेष्यति तदैवाहं गमिष्यामि"—इति भावे निमग्ना बभूव। एकदा श्रीमात्रा प्रोक्तम्—"स्वकीयकार्यार्थमेव 'राधू राधू' ब्रुवन्तं तदाश्रितं मदीयं देहमसावरक्षीत्। यदा तत्तो मनः पराङ्मुखं भविष्यति तदाऽयं देहो न स्थास्यति।" अस्मिन् समये प्रायशः श्रीमातुः सा वार्ता जनानां स्मृतिपथमगच्छत्।

श्रीमातुः स्वधामप्रस्थाने षट् सप्त वा दिनान्यशिष्यन्त। शुष्कमाकारं विधाय 'राधू:' समागत्य तत्समीपे तस्थौ। श्रीमाता नितान्तोपेक्षास्वरेण प्रोवाच—"पश्य, त्वं जयरामबाटीं प्रयाहि। इदानीमधिकमत्र न तिष्ठ।" निकटवर्त्तिनीं सेविकां लक्ष्यीकृत्य जगाद—"शरदं ब्रूहि, स सर्वानेतान् जयरामबाटीं प्रापयेत्।" सेविकामुखान्मातुरिममादेशमाकर्ण्य शरत्-महाराजः, अन्ये च सर्वे सातिशयं विचेलुः। पुत्री योगेन्द्रा श्रीमातुः पार्श्वमागत्य करुणस्वरेण जिज्ञासामकरोत्—"किं, मातः, तान् सर्वान् प्रहातुं भवती कथमादिशति ?" श्रीमात्रा सुस्पष्टस्वरेणोच्चरितम्—"योगेन्द्र इतः परं ते सर्वे तत्रैव स्थास्यन्ति। मनो मया पृथक् कृतम्। इदानीं तैः सह न किमपि मम प्रयोजनम्।" भक्तिमत्यैकया कातरस्वरेण प्रोक्तम्—"एतादृशीं वार्तां न कथय, मातः! भवत्या मनसि पृथक् कृते कथं वयं स्थास्यामः ?" श्रीमाता दृढतयोत्तरं ददे—"योगेन्द्रे, माया विच्छेदिता। इदानीमधिकमस्मिन् चंक्रमणे स्थातुं नैव समीहे।" भक्तिमत्या तया किंचिदधिकं नोच्चार्य शरत् महाराजाय सर्वं तन्निवेदितम्। श्रुत्वा हताशो भवन् स उक्तवान्—"तर्हीदानीं माताधिकं स्थापयितुं न शक्यते। यदा राधूतोऽपि तदीयं मनः पृथग् भूतं, तदाऽधिका आशा नास्ति।"

शरत्-महाराजस्यादेशेन सेवकाः सेविकाश्च राधूपरि श्रीमातुर्मनः समानेतुं बहुशश्चेष्टाः समारभन्त, परन्तु चेष्टासहस्रैरपि किमपि फलं नाभूत्। एकदा श्रीमात्रा तीव्रस्वरेण व्याहृतमेव—"पृथग्भूतं मनो नेदानीं पुनर्नीचैरागमिष्यति—इदं समीचीनरीत्यावधारयत।"

रोगवृद्धिफलस्वरूपं श्रीमाता रुग्णशय्याया उत्थातुमसमर्थाऽऽसीत्। देहत्यागाद्दिनपञ्चकपूर्वं भक्तान्नपूर्णाजननी श्रीमातुर्दर्शनार्थमागता। किन्त्वन्तः प्रवेशनिषेधं निशम्य देवालयप्रवेशद्वार एव स्थिताऽविद्यत। अकस्मात् श्रीमाता पार्श्वपरिवर्तनं कुर्वन्ती स्त्रीभक्तामवलोक्य समीपमागन्तुमिङ्गितमकरोत्। सापि समीपमागत्य प्रणाम-

पूर्वकं क्रन्दन्ती अब्रवीत्—"मातः ! मम जीवनस्य कीदृशः परिणामः भवेत् ?" करुणाविगलितचित्ता श्रीमाता क्षीणकण्ठेनाभयदानपूर्वकं शनैरुवाच—"भयं किम् ? त्वं श्रीठाकुरं दृष्टवती। अतस्तव न किमपि भयकारणम्।" क्षणानन्तरं पुनर्मृदुस्वरेणाब्रवीत्—"तथापि किंचिन्मया वक्तव्यं विद्यते, यदि शान्तिमभिलषसि तर्हि पुत्रि, न कस्यापि दोषस्त्वया चिन्तनीयः। केवलं स्वदोष एव द्रष्टव्यः। अखिलं जगत् स्वीयमिवावधारयितुं शिक्षस्व। न कोऽपि तव परः, वत्से तवैवेदं जगत्।" येषां कृते विगलितचित्तीभूयाभयरूपिणी श्रीमाता देहस्वीकारपूर्वकमशेषयंत्रणाभोगं स्वयं कृतवती तान् आर्तान् प्रत्ययमेव श्रीमातुरन्तिमोपदेशः।

देहत्यागस्य दिनत्रयात्पूर्वं शरत्-महाराजं स्वपार्श्वमाहूय श्रीमाता जगाद—"शरत्! साम्प्रतमहं गच्छामि। योगेन्द्रगोपालप्रभृतयः स्थास्यन्ति, एतेषां निरीक्षणमामरणं कर्त्तव्यम्।"

अन्तिमं दिवसद्वयं सा गम्भीरे समाधाविवातिष्ठत्, प्रशान्ता स्थिरा च। प्रशान्तिमिमां भग्नां कर्त्तुं कस्याऽपि साहसं, समीहा वा न बभूव।

श्रीठाकुरेण साकं चतुस्त्रिंशद्वर्षाणां लौकिको वियोगोऽवसानं गतः। १३२७ वंगाब्दश्रावणस्य चतुर्थे दिवसे रात्रौ सार्धैकवादने शिवयोगे सप्तमासाधिकषट्षष्टिवर्षावस्थायां श्रीमाता चिरकालाय परमशिवस्वरूपे श्रीरामकृष्णे सायुज्यमवाप।

—:*०*:—

# श्रीरामकृष्णसारदादेवीस्तोत्राणि

## जगद्गुरुश्रीरामकृष्णस्तोत्रम्

ॐ नमो भगवते रामकृष्णाय ।

लोकनाथश्चिदाकारो राजमानः स्वधामनि,
कलिकल्मषमग्नानामुत्तारण-चिकीर्षया ।
मायाशक्तिं समाश्रित्य योऽवतीर्णो महीतले,
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥१॥

सद्ब्राह्मणकुले जातो दिव्यदेहं समाश्रितः,
बाल्ये यो दिव्यभावेन वयस्यैः सह मोदयन् ।
विरक्तो यौवने तीव्रं मायापाश-विवर्जितः
नित्यमुक्तस्वभावोऽपि लोकानुग्रहकामतः ॥२॥

लोकानामेव शिक्षार्थं तपस्तप्त्वा सुदुस्तरम्,
निद्रासनं परित्यज्य वर्षाणां द्व्यधिकान् दश ।
स्वस्वरूपं समाधाय सच्चिदानन्दविग्रहम्,
दयामूर्तिः सदानन्दो जिज्ञासूनुपदिष्टवान् ॥
तेषामज्ञाननाशाय लाभाय च परात्मनः,
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥३॥

सत्यबोधतया साक्षात् सर्वधर्मान्समाचरन्,
धर्ममात्रं तु सत्यं वै येन सम्यक् सुनिश्चितम् ।
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥४॥

योे भक्तान् भक्तिमार्गे तु निनाय लोकनायकः,
आकृष्य मानसं तेषां भक्तिसिंचितया गिरा।
दर्शयित्वा महाभावं परमानन्ददायकम्।
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥५॥

ज्ञानिनो ज्ञानमार्गे च येन सम्यक् प्रवर्तिताः,
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥६॥

यैर्मतैर्धार्मिका यस्मिन् धर्ममार्गे व्यवस्थिताः,
तेषां तन्मतमादृत्य भक्तिस्तत्र दृढीकृता।
प्रोत्साहिता यथान्यायं येन तत्साधेनष्वपि,
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥७॥

पूजिता येन वै शश्वत् सर्वेऽपि साम्प्रदायिकाः,
सम्प्रदायविहीनो यः सम्प्रदायं न निन्दति
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥८॥

शश्वल्लीलाविलासेन येन सर्वमिदं ततम्।
लीलारूपं सदानन्दं रामकृष्णं नमाम्यहम् ॥९॥

सर्वधर्मप्रणेतारं धर्मग्लानिविनाशकम्।
साधुमित्रं शिवं शान्तं रामकृष्णं नमाम्यहम् ॥१०॥

अज्ञानतिमिरे यस्तु ज्ञानालोकप्रदीपकः,
विमलानन्ददानाय प्रादुरासीन्महीतले।
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥११॥

संसारार्णवघोरे यः कर्णधारस्वरूपकः।
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ॥१२॥

त्वं हि विष्णुर्विरिंचिस्त्वं त्वं च देवो महेश्वरः,
त्व चैव शक्तिरूपोऽसि निर्गुणस्त्वं सनातनः।

त्वां स्तोतुं कोऽत्र शक्तः स्याद्भावातीतमनामयम् ।
भगवन् सर्वभूतात्मन् रामकृष्ण नमोऽस्तु ते ॥१३॥

सर्वाय सर्वपाराय सर्वभावस्वरूपिणे ।
सर्वभावविहीनाय रामकृष्णाय ते नमः ॥१४॥

महामायास्वरूपाय महामोहविनाशिने,
मायातीताय शान्ताय रामकृष्णाय ते नमः ॥१५॥

निरञ्जनं नित्यमनन्तरूपं,
भक्तानुकम्पाधृतविग्रहं वै ।
ईशावतारं परमेशमीड्यं,
तं रामकृष्णं शिरसा नमामः ॥१६॥

इति श्रीमदभेदानन्दस्वामिना विरचितं जगद्गुरु-
श्रीरामकृष्णस्तोत्रमिदं समाप्तम् ।

## अथ श्रीमद्रामकृष्णाष्टकं प्रारभ्यते

श्रीमद्रामकृष्णपादाब्जसुधापानोन्मत्ता रसिका
भावुकाः पिबन्तु सर्वकल्याणकरं तन्नामामृतं मुदा ।

विश्वस्य धाता पुरुषस्त्वमाद्यो
ऽव्यक्तरूपेण ततं त्वयेदम् ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥१॥

त्वं पासि विश्वं सृजसि त्वमेव,
त्वमादिदेवो विनिहंसि सर्वम् ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥२॥

मायां समाश्रित्य करोषि लीलां
भक्तान्समुद्धर्तुमनन्तमूर्तिः ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥३॥

विधृत्य रूपं नरवत्त्वया वै,
विज्ञापितो धर्म इहातिगुह्यः ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥४॥

तपोऽथ ते त्यागमदृष्टपूर्वं
दृष्ट्वा नमस्यन्ति कथं न विज्ञाः ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥५॥

श्रुत्वात्र ते नाम भवन्ति भक्ता
दृष्ट्वा वयं तन्न तु भक्तियुक्ताः ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥६॥

सत्यं विभुं शान्तमनादिरूपं
प्रसादये त्वजमनन्तशून्यम् ।
हे रामकृष्ण त्वयि भक्तिहीने
कृपाकटाक्षं कुरु देव नित्यम् ॥७॥

जानामि तत्त्वं न हि दैशिकेन्द्रं,
किं वा स्वरूपं कथमेव भावम् ।
हे रामकृष्ण त्वयि भक्तिहीने,
कृपाकटाक्षं कुरु देव नित्यम् ॥८॥

इति श्रीमदभेदानन्दस्वामिना विरचितं
श्रीमद्रामकृष्णाष्टकं समाप्तम् ।

## श्रीरामकृष्णषट्कम् *

विशुद्धविज्ञानमगाधसौख्यं,
विश्वस्य बीजं करुणापयोधिः।
अनाद्यनन्तं प्रकृतेः परस्ता-
त्तत्त्वमेकं भुवि रामकृष्णः ॥१॥

न नेति मिथ्या श्रुतयो वदन्ति,
वदन्ति साक्षान्न च यं कदाचित्।
चिदेकरूपः शिव ईश्वराणां,
महेश्वरोऽसौ भुवि रामकृष्णः ॥२॥

यं नित्यमानन्दमनन्तमेकं
शिवेति नाम्ना श्रुतयो गृणन्ति।
तस्यावतारो नररूपधारी
कृपासुधाब्धिर्भुवि रामकृष्णः ॥३॥

विज्ञानपीयूषनिमग्नमूर्तिः
पस्पर्श यान्यान्दयया करेण।
ते कामिनीकांचनरिक्तचित्ताः
सद्यो बभूवुर्भुवि रामकृष्णः ॥४॥

प्रेमाब्धिगम्भीरतरंग-भंगै-
रान्दोलितो यो भगवद्विलीनः।
भक्तिर्विशुद्धा स्वयमाविरासीत्
पुंविग्रहोऽहो भुवि रामकृष्णः ॥५॥

---

* वंगाब्द १३३६ श्रावणमासस्य "उद्बोधन"-पत्रिकायाः ३४तमवर्षीय-सप्तमसंख्याया गृहीतम्।

तमद्भुतं कञ्चिदचिन्त्यशक्तिं
वन्दे प्रशान्तं परिपूर्णबोधम् ।
ज्ञानस्य भक्तेश्च विशुद्धमूर्तिं
द्विमूर्तिमेकं भुवि रामकृष्णः ॥६॥

## श्रीरामकृष्णस्तोत्रम्

लोकान्विलोक्य नवभौतिकभोगलग्ना-
न्मग्नांश्च नास्तिकविचारपरम्परासु ।
भक्त्या विहीनहृदयांश्च समुद्दिधीर्षुः,
श्रीरामकृष्णभगवान्स्वयमाविरासीत् ॥१॥

वैराग्यबोधभजनत्रयसंगमेन,
सच्चित्सुखार्थमनपायमुपायरूपम् ।
सन्देशमौपनिषदं विशदीविधातुं,
श्रीरामकृष्ण-भगवान्स्वयमाविरासीत् ॥२॥

कान्तासु विश्वजननीमवलोकयन्तं,
तुल्याश्मकांचनमतिं सदसद्विवेकम् ।
नित्यं करामलकसिद्धसमाधियोगं,
श्रीरामकृष्णचरणौ शरणं प्रपद्ये ॥३॥

विद्याविलासविदुषोऽपि जगत्यनेका-
नेकान्तमद्भुतरसानकरोत्स्वकीयान् ।
कृच्छ्रान्वितेषु करुणावरुणालयः सन्,
श्रीरामकृष्णभगवान् द्युतिमातनोतु ॥४॥

अद्वैतमार्गममलं चिरशान्तिबीजं
संस्थापयन्नतुलयत्नपरः परार्थः ।

वन्दे तमन्धतमसावृतजीववृन्दे
प्रज्वालितो जगति येन विवेकदीपः ॥५॥

स्तोत्रमिदं साहित्याचार्य-एम. ए. श्रीभण्डारकरोपाह्वेन
त्र्यंबकशर्मणा विरचितम्।

—०-०—

## श्रीरामकृष्णस्तुतिः

नमः श्री रामकृष्णाय रामकृष्णस्वरूपिणे।
नरान् भवाम्बुधेः पारं नेतुं नौरिव यः स्थितः॥ १

सर्वगस्सर्वसाक्षी यः सर्वधर्ममयः प्रभुः।
स्वभावतः कृपासिन्धुरिन्दुश्चिन्तानलोष्मणः॥ २

ससंतोषोऽकिञ्चनत्वे समहेमाश्ममृत्तिकः।
मातुराराधनासक्तो विहितेश्वरदर्शनः॥ ३

निष्कामलोकसत्कार्यपरः परमतत्त्ववित्।
कृतकृत्यो नरेन्द्रोऽभूद्यस्य सङ्गतिमात्रतः॥ ४

वितृष्णस्संसृतौ रामकृष्णस्तु भगवान्स्वयम्।
सर्वदेवमयः पूर्णः सर्वज्ञो विश्वपूजितः॥ ५

मानवस्य स्वरूपं हि नित्यं शुद्धं तथामलम्।
विश्वस्य [शान्तये सर्वनरैकत्वमतोऽब्रवीत्॥ ६

सद्वस्तुनः प्रकाशेन सर्वधर्मसमन्वयात्।
यत्कीर्तिर्देशमर्यादामतिक्रम्याभितो ययौ॥ ७

स्तुतिरियं साहित्याचार्य-एम्.ए. श्रीभंडारकरोपाह्वेन
त्र्यंबकशर्मणा विरचितम्।

—:❀:—

## श्रीरामकृष्णस्तोत्रम्

स्वयं निर्मलं निर्मलीकर्तुमन्या-
नलं ः सिद्धमप्युच्चसिद्धिप्रयासम् ।
प्रपन्नार्ति-नाश-प्रसन्नान्तरं तं,
भजे रामकृष्णं परब्रह्मरूपम् ॥ १

सदान्तर्लसत्सर्वसद्भावभावं,
जगच्छान्तये विश्वधर्मप्रकाशम् ।
मुदान्तः प्रविष्टाखिलास्वप्नवृन्दं,
भजे रामकृष्णं परब्रह्मरूपम् ॥ २

अविद्यान्धकारा - पहार - प्रहारं
स्वभक्तानुकम्पाप्रसक्तान्तरङ्गम् ।
अवस्थागुणादिव्यतीतस्वरूपं
प्रभुं रामकृष्णं शिवं सन्नतोऽस्मि ॥ ३

स्मृतिः केवलं तेंऽहसां नाशहेतुः
स्तुतिर्मानसं मानसम्मोद-पूर्णम् ।
करोति; ध्रुवं दर्शनस्पर्शनादेः
फलं भाषितुं कोऽस्त्यलं देवदेव ॥ ४

विवस्वत्प्रकाशाः पयोधेस्तरङ्गा
यथाकाशगास्तारकाः सन्त्यमेयाः ।
असंख्यास्तथा यद्गुणानां गणास्तं
भजे रामकृष्णं परब्रह्मरूपम् ॥ ५

विकारहेतावपि निर्विकारं
साकारमप्याकृतिशून्यभावम् ।
ज्ञानोपदेशैः सुकृतोपकारं,
श्रीरामकृष्णं शिरसा नतोऽस्मि ॥ ६

"यथाम्बुधिं यान्ति विभिन्न गंगा-
स्रोतांसि, धर्मा अपि देवदेवम्"।
येनोपदिष्टं निजसाधनाभि-
स्तं रामकृष्णं शिरसा नतोऽस्मि ॥ ७

त्वमेव साक्षाज्जगदात्मरूप-
स्त्वमेव कार्यं परकारणं वा।
अनुग्रहैकार्थपरं परात्मन्
करोम्यभीक्ष्णं शरणं कमन्यम् ? ॥ ८

स्तोत्रमिदं साहित्याचार्य-एम्.ए.-श्रीभण्डारकरोपाह्वेन
त्र्यम्बकशर्मणा विरचितम्।

## श्रीरामकृष्णप्रशस्तिः

अभूत् त्रेतायुगे रामः कृष्णो यो द्वापरे तथा।
रामकृष्णतया काले कलावत्र बभूव ह ॥१॥

युगप्रवर्तकत्वेन युगाचार्याख्यया पुनः।
स्वामी विवेकानन्दोऽतः प्रणमन्नाह सादरम् ॥२॥

"स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे।
अवतारवरिष्ठाय रामकृष्णाय ते नमः" ॥३॥

मतभेदेन मार्गाणां भेदो नास्त्यत्र संशयः।
विभिन्नसाधनासूतानुभूतिः कल्पना न हि ॥४॥

विश्वधर्मप्रतीकोऽभूद्रामकृष्णो न संशयः।
सर्वेषामेव धर्माणां साधना यत्समादृताः ॥५॥

तद्रहस्यमिदं ज्ञेयं, सर्व एव हि मानवाः।
सन्तानभूता जगतः स्रष्टुर्हि परमात्मनः ॥६॥

इति निर्णीय विश्वस्मिन् भ्रातृत्वे सुप्रतिष्ठिते ।
विश्वबन्धुत्वसंसिद्धिर्मैत्र्युत्कर्षाद्भवेदिति ॥७॥

अत्यन्तबाल्यकाले षड्वर्षावस्थस्य योगिनः ।
भावावस्था स्वतो जाता रामकृष्णस्य भूम्न्यहो ॥८॥

कस्य साधारणस्यैवं दृष्टं केनापि कर्हिचित् ।
ततः परं समग्रे हि जीवने परमेशितुः ॥९॥

सगुणत्वागुणत्वाभ्यां ध्याननिष्ठो बभूव सः ।
सत्यं भगवतो रूपमसत्यं यत्ततः परम् ॥१०॥

इति नूतनया भंग्या ख्यापयामास दुस्तरे ।
सन्देहानि कुतर्कोत्थनास्तिकत्वाकुले युगे ॥११॥

क एवमन्यः पुरुषो लभ्यः साधारणे जने ।
रामकृष्णविनिश्चित्या दृढयाऽसंख्यमानवे ॥१२॥

भगवल्लाभविषये दृढेच्छा जागरं गता ।
इष्टदर्शतया श्रीमद्रामकृष्णं दधाति यः ॥१३॥

तस्यैव जन्म साधीयस्तदाश्वासनवागिति ।
जातिधर्मविशेषार्थमागतिस्तस्य नैव हि ॥१४॥

समग्रविश्वकल्याणप्रसवार्थं तदागमः ।
इयं विचित्रता तस्य स्पर्शमात्रेण केवलम् ॥१५॥

समाधिस्तर उन्नीतं बहु साधारणं मनः ।
स्वीयाध्यात्मिकशक्तेर्हि कृत्वा संक्रमणं परे ॥१६॥

चैतन्योद्बोधनेनासौ तं मुक्तिद्वारमानयत् ।
अहैतुक्यां तत्कृपायां सीमा भौगोलिकी न हि ॥१७॥

ततस्तस्य कृपालाभे सर्वं एवाधिकारिणः ।
जन्मापि नाभवत्तत्र बाधकं कुत्रचित्ततः ॥१८॥

अन्त्यजाद्या अपि कृपालाभात्तस्य न वंचिताः ।
नातीतभूपतेर्मुद्रा वर्तमानेऽर्थसाधिनी ॥१९॥

उपादानैक्यसत्त्वेऽपि चिह्नवैचित्र्ययोगतः ।
सर्वप्रसिद्धमेवैतत् तद्वदेतत्प्रबुध्यताम् ॥२०॥

युगधर्मश्चिह्नितोऽद्य रामकृष्णचरित्रतः ।
रामकृष्णावतारस्य वैलक्षण्यमिदं महत् ॥२१॥

सन्त्यज्य सकलैश्वर्यं दीनवेषे समागमः ।
त्यागस्तपश्च वैराग्यमीश्वराश्रयता परा ॥२२॥

रामकृष्णावतारेऽत्र भावैश्वर्यमुदाहृतम् ।
गार्हस्थ्यमपि संन्यासो द्वयं हि समपेक्षितम् ॥२३॥

इत्यप्यदर्शयद्रामकृष्णस्तद् द्वयमाश्रयन् ।
जीवनाद्रामकृष्णस्य तत्तदाश्रमजीवने ॥२४॥

प्रपतन्नूतनाऽऽलोकः संकेतं प्राप निश्चितम् ।
सत्ययोर्देवदेव्योस्तु मूर्तिपूजापि नानृता ॥२५॥

द्वैतं विशिष्टाद्वैतं चाद्वैतं सर्वं हि शोभनम् ।
शैवाश्शाक्ता गाणपत्या बौद्धाः खृष्टानुयायिनः ॥२६॥

यावनाश्च समे धर्माः शाखाभूताः स्तरात्मकाः ।
किं वा वेदान्तधर्मस्य विततामितशाखिनः ॥२७॥

तासां तासां साधनानां विधानेनोपदेशतः ।
इत्येव ख्यापयामास रामकृष्णः प्रभुः परः ॥२८॥

पत्नीं देवीस्वरूपेण सम्पूज्यादाद् बृहत्तराम् ।
मर्यादां मातृजात्यै हि तद्देवत्वं स्थिरीकृतम् ॥२९॥

गच्छामि शरणं श्रीमद्रामकृष्णपदाम्बुजम् ।
तस्मात् सदैव हृदये समुदे तु स एव हि ॥३०॥

न्यायाचार्य-पण्डित-'आनन्दझा' इत्येतेन विरचितम् ।

## श्रीश्रीरामकृष्णस्तोत्रम्

जगज्जातं त्यक्तं हिमगिरिसुतापादकमले
शरीराद्याः प्राणा बलय इव येनार्पणमगुः ।
त्रिवर्गो यच्छ्रद्धाविमलगुरुभक्त्या हि सुलभो
नुमो रामकृष्णं सुरनुतपदं भेदरहितम् ॥१॥

स्वयं त्यक्तं प्रोक्तं हृदयकरशाखोल्लिखनतः
पुरा रामात्कृष्णः समभवदनन्यो नहि परः ।
इदानीमायान्तं नयनविषयत्वं जनिभृतां
प्रविष्टो देहेऽस्मिन्निति कनककामातिगतया ॥२॥

यदद्वैतं शान्तं सततमघमायाविरहितं
चिदानन्दं शुद्धं प्रकृतिसहितं प्रेमवशगम् ।
त्वमेवाविर्भूतं करणविषये दुर्लभतरं
जगज्जीवैः क्रीडन्महदमितवीर्यं रसतमम् ॥३॥

त्वमेव श्रीरामो मधुरिपुहरिर्गोपतनयः
स्वयं भूतश्चाद्यः परमपुरुषो नाथ रमण ।
विवादं धर्माणां शमयितुमनाश्चिन्मयवपुः
प्रसन्नो लोकानां प्रकटितमकार्षीः पुनरिह ॥४॥

त्वदीयाङ्घ्रिद्वन्द्वक्षरितमकरन्दं प्रतिदिशं
सदा पायं पायं कलितभवभीतिं प्रशमयन् ।
भजन्साम्यानन्दं विमलहृदयो याति परमां
जनानां संघोऽयं निखिलभुवि शान्तिं मुहुरहो ॥५॥

समाधावानन्दं पुनरति विशुद्धं हरिकथा-
प्रसङ्गादुद्बुद्धं करणगणरोधं प्रविवहन् ।
नराणां भक्तानां हृदयपुलकानां प्रतिदिनं
समाधानं चक्रे य इह शरणं मेऽस्तु सततम् ॥६॥

ध्रुवा मूर्तिर्गंगा तटपरिगता या गुणमयी
गुणातीतापि स्यान्ननु लसति दक्षेश्वरमणिः।
व्रजन्ती गायन्ती भवतरणिमातुर्गुणकथाः
सदा स्वान्ते सा मे स्फुरतु रमणीया द्युतिमयी ।७।।

कृपापीयूषाम्भःपतितमधिकं पातकिजने
दयासिन्धो मन्दे रसिकचतुरप्रीतरसिके।
दरिद्राणां बन्धो! तव विदुरगेहे सुखलवाः
समर्थो निर्णेतुं क इह महिमानं ननु बुधः ।।८।।

समुद्धर्तुं लोकान् स्वयमधिगतिस्ते प्रतिगृहं
क्व देवेन्द्रादीनां वसति भवनं क्व इह शशभृक्।
गुणानां साधूनां त्वयि निवसनं भो गुणधर
स्मरामो नित्यानामपि निरभिमानं निरुपमम् ।।९।।

नियन्ता जीवानामपि शिशुवदेवानुनटसि
स्वतन्त्रः सर्वेषामिव चरसि देवीपरगतः।
अभिज्ञाता विश्वं भणसि ननु मूर्खाभिध इति
प्रियां ते जानीमो निजसकलगुप्तिं नटवर ।।१०।।

नमो रामैक्यायामितमधुरदेवीमयतनू-
भृते कृष्णैक्याय श्रुतपरमहंसाय यतये।
नमश्चन्द्रामण्या प्रियतनय देवाय गतये
नमः सर्वस्वाय प्रणयिखुदिरामस्य मणये ।।११।।

इयं स्तुतिकथा पूजा रामकृष्णे परे गुरौ।
अर्पिता तेन देवेशः प्रीयतां परमेश्वरः ।।१२।।

इति श्रीश्रीरामकृष्णस्तोत्रम् ब्रह्मचारिमेधाचैतन्येन विरचितम्।

## श्रीरामकृष्णारार्तिकम् *

भवबन्धन भयखण्डन ! शुभवन्दन ! वन्दे ।
गतरञ्जन ! भवभंजन ! निहितनयन ! मन्दे ॥

गुणमयवर ! निर्गुणनर ! नवमानवरूपिन् ।
अघदूषण गणमोचन ! जगभूषणरूपिन् ॥

ज्ञानांजन विमलनयन ! वीक्ष्य मोहनाशिन् ।
भास्वरभाव सागरमग्न शशिसुविशदहासिन् ॥

भक्तार्चितचरणयुगल ! भवसागरतारक ।
जृम्भितयुग ! ईश्वर ! जगदीश्वर ! नयकारक ॥

तव कृपया प्राप्तसमाधानमनाः पश्यन् ।
अस्मि कर्मकाठिन्यं करुणाघन ! हृष्यन् ॥

भवतारण-प्राणार्पण ! भयहर ! कलिकृन्तन ।
अतिनिन्दितकरणराग-वंचन कामकांचन ॥

त्यागीश्वर ! हे नरवर ! देह पदामोह ।
निर्भय ! गतसंशय ! दृढनिश्चय गतलोह ॥

निष्कारण भक्तशरण ! त्यक्तजातिमान ।
सम्पन्मम तव चरणं भवगोष्पदमान ॥

प्रेमार्पणसमदर्शन ! दुःखमेतु विलयम् ।
तव गानं गतमानं विलसत्वाविलयम् ॥

---

* वङ्गभाषायां श्रीस्वामिविवेकानन्दविरचितश्रीरामकृष्णारार्तिकस्य न्यायाचार्येण पण्डित-'आनन्दझा' इत्येनेन कृतः संस्कृतनुवादः ।

नमो नमोऽवाङ्मानसगोचर
मतिवचनैकाधार ।
ज्योतिर्ज्योतिषोऽपि हृत्कन्दर-
तमसो वर संहार ॥
धिक् तान् धिक् तान्वदति मृदङ्गो
ये न पदे ते प्रणताः
गायन्त्येते भक्तजनास्ते
ह्यारार्तिकं प्रविनताः ॥

जयतु जयत्वारार्तिकमेतत्
तव शम्भो ! शिव ! हर ! हर !
आनन्देनानूदितमभवत्
गानमिदं ते शंकर ॥

## श्रीरामकृष्णस्तुतिः

ज्योतिरेकं निराकारमचिन्त्यं शाश्वतं परम् ।
अद्वितीयं चिद्घनं च बालरूपं दधत् पुरा ॥१॥
आगत्य परमे धाम्नि महर्षिव्रातमण्डिते ।
ऋषिमेकं समाधिस्थं कण्ठाश्लेषमुवाच ह ॥२॥
लोकानामुपकाराय प्रागहं यामि भूतले ।
ततो नु भवता नूनमागन्तव्यं तपोधन ॥३॥

* * *

पितॄन् समुद्धर्त्तुमनाः खुदिरामः कदाचन ।
उपस्थाय गयाधाम्नि पितृभ्यः पिण्डमाहरत् ॥४॥

गयाधिष्ठातृदेवो यो गदाधर इति श्रुतः ।
पितॄणां दिव्यदेहानां पुरः स्वप्ने तमब्रवीत् ॥५॥

प्रीतोऽहमस्मि ते विप्र ! पितृभिः प्रार्थितोऽनघ ! ।
तव पुत्रो भविष्यामि नान्यथा मम भाषितम् ॥६॥

कामारपुकुरग्रामसन्निधौ शिवमन्दिरे ।
गतायाश्चन्द्रमण्यास्तु शिवो ह्युदरमाविशत् ॥७॥

हंसारूढोऽपि भगवानेकदा परितोषितः ।
श्रीलां चन्द्रमणिं देवीं दयादृष्ट्या व्यलोकयत् ॥८॥

* * *

हुगलीमण्डले वंगे कामारपुकुराभिधे ।
ग्रामे ज्योतिश्चयो बालो जन्म जग्राह सत्कुले ॥९॥

माता चन्द्रमणिस्तस्य खुदिरामोऽभवत् पिता ।
आस्तां तदीयौ पितरौ भूसुरान्वयदीपकौ ॥१०॥

गदाधरलसन्नाम्ने रामकृष्णस्वरूपिणे ।
नामरूपविहीनाय देवदेवाय ते नमः ॥११॥

ब्राह्मकल्पेनोपनीतो ब्रह्मचर्यव्रते स्थितः ।
स्वाध्याये नानुरक्तोऽपि सहजातमहामतिः ॥१२॥

भावावेशः, समाधिश्च, ज्योतिर्देहे च संस्थितिः ।
यस्यासन् सहजा धर्माः, रामकृष्णाय ते नमः ॥१३॥

स्वोद्वाहार्थं सचिन्ते च स्वजने व्यग्रतां गते ।
स्वयमेव समाधिस्थः सारदां सहधर्मिणीम् ॥१४॥

षड्वार्षिकीं कोमलाङ्गीं शारदं शर्वरीश्वरम् ।
परिपूर्णं ह्रेपयन्तीं स्वाकलङ्काननश्रिया ॥१५॥

निर्दिदेश, ततस्तस्याः पाणिं जग्राह धर्मवित् ।
निःसंगादर्शरूपाय गृहस्थाय च ते नमः ॥१६॥
देवदर्शनमेलायां शिशुः श्रीसारदाऽपि च ।
स्वजनैर्नीयमाना सा हस्तावुद्यम्य पूर्वतः ॥१७॥
यं वरेण्यं महाभागं देवमानवरूपिणम् ।
पतिं चक्रेऽप्रबुद्धाऽपि रामकृष्णाय ते नमः ॥१८॥
जामाता रासमण्यास्तु राण्याः कोटिपतिः स्वयम् ।
तस्या वसूनां सर्वेषां नियमेनाधिकारवान् ॥१६॥
सुप्रसन्नः सम्प्रदातुं ग्रामान् क्षेत्राणि चैहत ।
श्रुत्वैतत् क्रोधताम्राक्षो यष्ट्या तु तमताडयत् ॥२०॥
राणी रासमणिश्चापि दक्षिणेश्वरमागता ।
कालीसम्मुखमास्थाय ध्यानाभिनयतत्परा ॥२१॥
चिन्तयामास तत्रेयमभियोगफलाफलम् ।
ताडयित्वा चपेटाभिः सावधानां चकार ताम् ॥२२॥
एकदा मरुदेशीयो लक्ष्मीनारायणो धनी ।
मुद्राणां दशसाहस्रं भक्त्याऽर्पयितुमागतः ॥२३॥
तृणाय मत्वा न स्पृष्टं तद् धनं येन साधुना ।
श्रीमात्राऽपि च तत्पत्न्या प्रत्याख्यातं तथैव च ॥२४॥
रूप्यादिधातुपात्राणां स्पर्शात् सर्वांगसम्भवः ।
कम्पः प्रजायते यस्य नमस्ते त्यागरूपिणे ॥२५॥
तत्तद्धर्मोपास्तिकाले तत्तद्धर्मप्रवर्त्तकाः ।
ईसामुहम्मदाद्याश्च स्वयं दृष्टिपथं ययुः ॥२६॥

अनन्तरं च ते सर्वे यस्य देहं समाश्रिताः ।
सर्वधर्मस्वरूपाय रामकृष्णाय ते नमः ॥२७॥
ब्रह्मविष्णुशिवाद्याश्च ये देवाः श्रुतिसंगताः ।
रामकृष्णादयः सर्वे ह्यवतारास्तथैव च ॥२८॥
वाणीलक्ष्मीकालिकाद्या या देव्योऽनन्तशक्तयः ।
सीताराधाप्रभृतयः शक्तयश्चावतारिणाम् ॥२९॥
निवसन्ति सदाऽऽश्रित्य यस्य देवस्य विग्रहम् ।
सर्वदेवनिवासाय रामकृष्णाय ते नमः ॥३०॥
तीर्थभ्रमणकामेन दृष्टा वाराणसी पुरी ।
पुण्यैर्धवलिता शश्वद् विमला विमलात्मनाम् ॥३१॥
शम्भोस्त्रिशूले तिष्ठन्ती चञ्चच्चामीकरोपमा ।
ददाति मुक्तिं प्रेतेभ्यो यस्यां स सशिवः शिवः ॥३२॥
तस्यां प्रविष्ट एवाऽसौ शैवं कार्यं विलोकयन् ।
समाधिमभजत्तूर्णं शिवध्यानपरायणः ॥३३॥
तैलङ्गं स्वामिनं जीवन्मुक्तमन्यांश्च सत्तमान् ।
महता भक्तिभावेन दर्शं दर्शमपूपुजत् ॥३४॥
पुर्यामस्यां सुनिवसन् धर्मभीरुर्जितेन्द्रियः ।
यो न चक्रे मलं मूत्रं तस्मै धर्मात्मने नमः ॥३५॥
वृन्दावने प्रयागे च यत्रैव समुपस्थितः ।
तत्पुण्यधाम्नो माहात्म्यं स्वाचारैः पर्यपोषयत् ॥३६॥
तीर्थाटनस्य समये योऽन्येष्ववसरेषु च ।
सर्वथाऽतोषयद्दीनान् तस्मै दीनात्मने नमः ॥३७॥

बहूनां दासभक्तानां पापतापान् जहार यः ।
स्वयं च क्लेशभाग् भूत्वा तं नुमः करुणानिधिम् ॥३८॥
तान्त्रिको वैष्णवो धर्मः संन्यासः शांकरस्तथा ।
सम्यक् संसाधितो येन रामकृष्णाय ते नमः ॥३६॥
ब्रह्मानन्दशिवानन्दौ विवेकानन्द एव च ।
निरंजनानन्द उत प्रेमानन्दो महामतिः ॥४०॥
तुरीयानन्द-त्रिगुणातीतानन्दौ बुधोत्तमौ ।
अभेदाखण्डयोगाद्याऽऽनन्दाः संन्यासिसत्तमाः ॥४१॥
अन्ये च बह्वस्त्यागतपस्यायोगविश्रुताः ।
संन्यस्तकाम्यकर्माणो यस्य शिष्यत्वमागताः ॥४२॥
नमस्ते प्रेमरूपाय सर्वधर्मात्मने नमः ।
नमः परमहंसाय प्राणिमात्रप्रियाय च ॥४३॥
कालीपरमभक्ताय कालिकाऽभेदरूपिणे ।
सर्वावतारगुरवे सर्वतेजोमयाय च ॥४४॥
सशक्तिकाय महसां निधये शाश्वतत्विषे ।
परात्पराय महते नमः श्रीवेदमूर्त्तये ॥४५॥

पण्डितश्रीगोपालचन्द्रचक्रवर्ति-वेदान्तशास्त्रिविरचिता
श्रीरामकृष्णस्तुतिरयं समाप्ता ।

## स्तुतिकुसुमाञ्जलिः

त्रेतायां रामचन्द्रोऽशुभशतदलने शक्तिपूजां वितेने
तत्पश्चात् कृष्णचन्द्रः शमलकवलने द्वापरे प्रेम मेने ।

तावास्तां राम-कृष्णः कलिमलहरणे प्रेम-शक्ति-प्रचारी
विश्वेशः शास्ति धर्मं युगमनु तनुभृद् धर्मबाधान्तकारी ॥१॥
शिवे लग्ना शक्तिः शिवमय-शिवानी शिवनुता
जगन्माता नित्यं सुततति‌हितैकप्रसविनी ।
महामाया साध्वी पतिपदरता भाति सतत-
मिमं सारं शक्तेरधिगमयितुं साऽऽगमदिह ॥२॥
ससारदं रामकृष्णं सारदं विहितांजलिः ।
प्रपन्नोऽस्मि सदा भक्तं भक्तैकशरणं विभुम् ॥३॥
काव्यतीर्थ-न्यायाचार्येण पण्डित-श्रीसिद्धेश्वरभट्टाचार्येण विरचितः
स्तुतिकुसुमाञ्जलिः समाप्तः ।

## श्रीसारदादेवीस्तोत्रम्

### अथ श्रीमत्याः सारदादेव्याः स्तोत्रं प्रारभ्यते

प्रकृतिं परमामभयां वरदां,
नररूपधरां जनतापहराम् ।
शरणागत-सेवक-तोषकरीं,
प्रणमामि परां जननीं जगताम् ॥१॥
गुणहीन-सुतानपराध-युतान्,
कृपयाऽद्य समुद्धर मोहगतान् ।
तरणीं भवसागरपारकरीम्,
प्रणमामि परां जननीं जगताम् ॥२॥
बिषयं कुसुमं परिहृत्य सदा,
चरणाम्बुरुहामृतशान्तिसुधाम् ।
पिब भृङ्ग मनोभवरोगहरां,
प्रणमामि परां जननीं जगताम् ॥३॥

कृपां कुरु महादेवि, सुतेषु प्रणतेषु च ।
चरणाश्रयदानेन कृपामयि, नमोऽस्तु ते ॥४॥

लज्जापटावृते नित्यं सारदे ज्ञानदायिके ।
पापेभ्यो नः सदा रक्ष कृपामयि, नमोऽस्तु ते ॥५॥

रामकृष्ण-गत-प्राणां तन्नामश्रवणप्रियाम् ।
तद्भावरञ्जिताकारां प्रणमामि मुहुर्मुहुः ॥६॥

पवित्रं चरितं यस्याः पवित्रं जीवनं तथा ।
पवित्रतास्वरूपिण्यै तस्यै कुर्मो नमो नमः ॥७॥

देवीं प्रसन्नां प्रणतार्त्तिहन्त्रीं,
योगीन्द्रपूज्यां युगधर्मपात्रीम् ।
तां सारदां भक्तिविज्ञानदात्रीं,
दयास्वरूपां प्रणमामि नित्यम् ॥८॥

स्नेहेन बध्नासि मनोऽस्मदीयं,
दोषानशेषान् सगुणीकरोषि ।
अहेतुना नो दयसे सदोषान्,
स्वाङ्के गृहीत्वा यदिदं विचित्रम् ॥९॥
प्रसीद मातर्विनयेन याचे,
नित्यं भव स्नेहवती सुतेषु ।
प्रेमैकबिन्दुं चिरदग्धचित्ते,
विषिञ्च चित्तं कुरु नः सुशान्तम् ॥१०॥

जननीं सारदां देवीं रामकृष्णं जगद्गुरुम् ।
पादपद्मे तयोः श्रित्वा प्रणमामि मुहुर्मुहुः ॥११॥

इति श्रीमदभेदानन्दस्वामिना विरचितं श्रीमत्याः सारदादेव्याः स्तोत्रं समाप्तम् ।

## श्रीसारदामातृस्तुतिः

श्री—रामकृष्णमयजीवनसर्वसारा,
सारावनाखिलजनेषु दयाप्रसारा।
लोकप्रसूर्विजितजैत्रमनोविकारा,
श्रीसारदा विजयते जगदात्मरूपा ॥१॥

सा—त्वां नितान्तमिह सत्त्वगुणप्रधानां,
भक्त्या स्वयं भगवता परिपूजितां च।
दीक्षाप्रदानविमलीकृतभक्तचित्त-
चिन्तासहस्रपरिहारपरां नमामः ॥२॥

र—मां केशवस्याप्युमां शूलपाणेः
परां मुक्तिदां भक्तिमार्गप्रचाराम्।
सदाचारमूर्तिं शिवां विश्ववन्द्यां
नमामीश्वरीं सारदां शारदां ताम् ॥३॥

दा—क्षिण्यभावपरिपूरितनिर्मलान्तां,
तां लोकसंग्रहकृते सगुणस्वरूपाम्।
लोकातिगां स्वयमजातिगुणप्रकारां,
सन्मातरं मुहुरहं शिरसा नतोऽस्मि ॥४॥

मा—र्तण्डदीप्तिरथदाहकशक्तिरग्नेः,
स्वाधारतो न पृथगर्हति गन्तुमेवम्।
एकात्मतामुपगताऽखिलकार्यजाते,
मातः स्वयं भगवतोऽस्य पृथक्प्रकृत्या ॥५॥

तृ—ष्णात्रयज्वलनशोषितमानसानां,
नानाविधानकरणैरनिशं जनानाम्।

या नित्यसान्त्वनपरा विपदो हरन्ती,
तां सारदामभयदां शिरसा नमामः ॥६॥

स्तु—वन्ति मात"र्निखिलाश्रमाणा-
मादर्शभूता त्वमिहैकवारम्" ।
स्त्रीभिस्तवांशानुकृतिः कृता चे-
त्तज्जीवनं स्यात्सफलं रसायाम् ॥७॥

ति—ग्मं गृहीत्वा दुरितं परेषां,
कष्टान्वितान्यान्सुखिनः करोषि ।
अलौकिकं ते चरितं जगत्सु,
स्वयं शिरस्त्वच्चरणे नतं नः ॥८॥

स्तुतिरियं साहित्याचार्य-एम्.ए.-भण्डारकरोपाह्वेन त्र्यम्बक-शर्मणा विरचिता ।

—:❀:—

## श्रीसारदादेवीस्तुतिः

श्रीरामकृष्णः प्रावोचत् सारदे ! हे सरस्वति !
शक्तिर्मम त्वं जगते ज्ञानदानार्थमागता ॥१॥

श्रीसारदैकदा प्राह ठाकुरः स्वदिवं गतेः ।
परं मामत्र मातृत्वप्रचाराय नियुक्तवान् ॥२॥

परमा प्रकृतिः साक्षात् शक्तिरूपेण भूतले ।
देवश्रीरामकृष्णस्य गुप्तलीला समागता ॥३॥

सिद्धा वा साधिका वाऽपि नासीत्साधारणी हि सा ।
मानवं देहमासीना या साक्षाद्भवतारिणी ॥४॥

विविधाः साधनास्तस्या जपो वा लक्षसंख्यकः ।
नासीत्स्वफललाभाय जगत्कल्याणहेतवे ॥५॥

उवाच बहुशो देवी दुर्लभं नेशदर्शनम् ।
सकृच्चक्षुर्मुद्रणे तत् शक्यं कर्तुं न संशयः ॥६॥

परवर्तिनि काले तु चक्षुरुन्मीलनेऽपि सा ।
सर्वत्रैवाकरोद्देवी निश्चलं ब्रह्मदर्शनम् । ७॥

असंख्यनरनारीणां गणं समवतारयन् ।
धृतहस्ताऽमृताम्भोधेस्तीरं श्रीरामकृष्णवत् ॥८॥

मातृनाम्ना तदाह्वानं श्रवणे तत्सुचेतसि ।
सविशेषोर्मिमालायाः सृष्टिः प्रभवति स्म वै ॥९॥

ये मातरिति तां देवीं सम्बोध्योचुः सभक्तिकाः ।
मुक्तिव्यवस्था तेषां तु कृतेऽकारि तया ध्रुवम् ॥१०॥

संन्यासिनी हि तपसे साधनायै तथा न च ।
पर्वतारोहणं चक्रे पतिसेवापराऽनिशम् ॥११॥

'मातृदेवो भवे'त्युक्तं 'पितृदेवो' भवेत्यपि ।
शास्त्रे तत्र तया प्रोक्तं 'पतिदेवाः' स्त्रियो मताः ॥१२॥

धार्मिके जीवने पत्युः कृत्वा साहाय्यमद्भुतम् ।
इत्यस्य ख्यापनं चक्रे पत्नी हि सहधर्मिणी ॥१३॥

सदाऽऽक्षरिकभावेन स्वाम्यादेशस्य पालनम् ।
आसीत्तस्याः कृते नूनं जीवनस्य परं व्रतम् ॥१४॥

स्त्रीभिः कथमवस्थेयं संसारेऽस्मिन्नदर्शयत् ।
आदर्शरूपमास्थाय समग्रे जीवने निजे ॥१५॥

श्रीमत्याः सारदादेव्या जीवनं निर्मलं महत् ।
विश्वे समग्रे स्त्रीजातेः श्रेष्ठादर्शो न संशयः ॥१६॥

आदर्शपुत्र्यादर्शस्त्री सादर्शप्रतिवेशिनी ।
आदर्शमाता चादर्शगुरुर्नैवात्र संशयः ॥१७॥

सीता श्रीरामचन्द्रस्य राधाकृष्णस्य या मता ।
सैव श्रीरामकृष्णस्य सारदैक्यं त्रिषु स्थिरम् ॥१८॥

न्यायाचार्य-पण्डित-'आनन्दझा' इत्येतेन विरचिता ।

—:०-०:—

## श्रीश्रीसारदाषट्कम्

धवलवसनवेषा मूर्तकारुण्यदेहा
सुरनरमुनिवन्द्या रामकृष्णार्चिताद्या ।
सकलगुणयुता नो वेष्टितांगा सलज्जा
जननमरणभङ्गा सारदा पातु दिव्या ॥१॥

विमलगगनशुद्धा सर्वलोकार्थचिन्ता
विगतविषमदृष्टिश्चिन्मयी शांतिदात्री ।
त्रिभुवनजनधात्री मंगला मर्त्यभूमा-
ववतरति परेशे स्वेच्छयाविर्भवन्ती ॥२॥

त्रिपुरदहनकान्ता रामचन्द्रस्य कन्या
निखिलभुवनकर्त्री मार्जनीहस्तमृष्टिः ।
भवनिगडविमुक्तिर्याद्य माया विमुग्धा,
नरपतिगणशास्त्री दैन्यदुःखे धरित्री ॥३॥

प्रलयसमयघोरा रोषसंघातदेहा
स्तनितभयविधात्री कालिका विश्वहर्त्री ।
अमरनिकरवन्द्या देवदेवोरुवासा
नटनहसनलास्या सारदा भिन्नरूपा ॥४॥

दशभुजदशशस्त्रा दिव्यमोदा सुहास्या
गुहगणपतिमाता दक्षकन्या शरण्या ।
विनतभयविहन्त्री पार्वती राज्यलक्ष्मी-
र्विधिहरिभवपात्रं सारदा भूतधात्री ॥५॥

जपनभजनहीना किंनु पुत्राः कुपुत्रा
व्यसनगणनियुक्ताः किंनु हेया जनन्या ।
इति गुणततिशून्यान् सारदे त्रायतां नो
विदितसकलदोषा नैव माता जहाति ॥६॥

सर्वदेवात्मिकां वन्दे सर्वदेवमयीं भजे ।
सारदां प्रार्थये भक्तिं तत्पादाम्बुरुहद्वये ॥७॥

ब्रह्मचारिमेधाचैतन्येन विरचितं श्रीसारदा-
षट्कं समाप्तम् ।

## श्रीसारदास्तवः

"बाँकुडा"-मण्डले वंगे "जयरामाख्यवाटिका" ।
ग्रामस्तत्राग्रहीज्जन्म "सारदा" शारदा स्वयम् ॥१॥

"रामचन्द्रः" पिता, "श्यामा-सुन्दरी" जननी तथा ।
आद्यसन्तानरूपेण तयोरेषा ह्यभूत् सुता ॥२॥

कदाचिज्जननी तस्या देवदर्शनवाञ्छया ।
जगाम "शिहडे" ग्रामे पतिभक्तिपरायणा ॥३॥

परावर्त्तनकाले तु स्वग्रामनिकटस्थिते ।
देवालये गता चैकवृक्षच्छायां समाश्रिता ॥४॥

विचित्रः पवनस्तस्या उदरं प्रविवेश ह ।
तयाऽनुभूतं तत्रैव गुरुत्वं स्वोदरस्य तु ॥५॥

तदोपविष्टा सा देवी साश्चर्येदं व्यलोकयत् ।
एका षड्वर्षदेशीया बालिका चातिसुन्दरी ॥६॥

कौशेयवस्त्रं बिभ्राणा वृक्षशाखात आगता ।
स्वकीयौ कोमलौ हस्तौ तस्याः कण्ठे समार्पयत् ॥७॥

प्रोवाच—"मातस्ते गेहमागमिष्याम्यहं ध्रुवम् ।"
निशम्येति भयार्त्ता सा मूर्छिता न्यपतद् भुवि ॥८॥

तामुत्थाप्य समानिन्युः स्वगृहं तत्कुटुम्बिनः ।
सुन्दरी बालिका सैव तस्या उदरमाविशत् ॥९॥

दिवसेभ्यः कतिभ्यश्चित् पूर्वं निद्रावशंवदः ।
ऋषिकल्पः पुण्यकर्मा रामचन्द्रसुधीरपि ॥१०॥

स्वप्ने ददर्श—"हेमाङ्गीं बालिकां चातिनिर्मलाम् ।
कण्ठे तस्य समाश्लिष्टां बिभ्रतीं रूपमद्भुतम्" ॥११॥

देवीं तां मन्यमानोऽसौ रामचन्द्रोऽतिविस्मितः ।
पप्रच्छ—"बाले काऽसि त्वं ममानन्दविवर्धिनी" ॥१२॥

अधरीकृतसद्वीणास्वरेण स्वस्वरेण सा ।
जगाद तं महात्मानमतिविस्मयसंयुतम् ॥१३॥

"अहमस्मि महाभाग ! लोकमाता समुद्रजा ।
आगता तव गेहेऽहं लोककल्याणकारिणी" ॥१४॥

विदुषो रामचन्द्रस्य गृहे प्राप्य निजं जनुः ।
ववृधे शनकैर्बाला शुभ्रेव शशिनः कला ॥१५॥

एकदा "शिहड़े" ग्रामे धार्मिको ह्युत्सवोऽभवत् ।
देवः श्रीरामकृष्णोऽपि तत्राभूत् समुपस्थितः ॥१६॥

उत्सवं द्रष्टुकामैश्च स्वजनैर्दैवयोगतः ।
अजातदन्ता बालेयं नीयमानाऽभवत्तदा ॥१७॥

विनोदार्थमसौ पृष्टा—"कः पतिस्ते भविष्यति ?" ।
प्रसार्य बाहू सा शिश्वी रामकृष्णमदर्शयत् ॥१८॥

शनैः प्रवर्धमानायास्तस्या विविधकर्मसु ।
नित्यं साहाय्यमाचेरुर्विचित्रा देवकन्यकाः ॥१९॥

षष्ठे वर्षे प्रविष्टाया रामकृष्णेन वै सह ।
मैथिल्या इव रामेण तस्या जातः करग्रहः ॥२०॥

दृशां विचित्रामाकर्ण्य युवती सा जनेरिताम् ।
पत्युः श्रीरामकृष्णस्य चैकदा खिन्नतां गता ॥२१॥

गंगास्नानमिषेणैषा समागाद्दक्षिणेश्वरम् ।
अध्वश्रमपरीताऽभूत् ज्वरवेगप्रपीडिता ॥२२॥

रात्रौ स्वप्ने समागत्य तदानीं भवतारिणी ।
तस्याः शिरसि पस्पर्श कोमलेन करेण च ॥२३॥

तदाऽपृच्छदसौ "का त्वं ?" तामुवाच महेश्वरी ।
"तवाऽस्मि भगिनी, त्वां च नीरोगां कर्तुमागता" ॥२४॥

ततः प्रातः प्रसन्ना सा पित्रा सार्धं शुचिस्मिता ।
दक्षिणेश्वरमागत्य ददर्श नीरुजं पतिम् ॥२५॥

पतिप्रिया पतिप्राणा पतिसेवापरायणा ।
स्वपुत्रानिव सद्भक्तान् सेवया पर्यतोषयद् ॥२६॥

बहुधा स्नानकाले तु बालिकाभिर्वृता पथि ।
"का इमा" इति सन्देहे "देव्यस्ता" इत्यमन्यत ॥२७॥

इत्थं बहुषु कालेषु देवीभिर्याऽऽवृताऽभवत् ।
तां नमामो वयं मूर्ध्ना "सारदां" शारदोपमाम् ॥२८॥

कदापि षोडशीं मत्वा कदा त्रिपुरसुन्दरीम् ।
श्रीरामकृष्णदेवेन बहुशो दक्षिणेश्वरे ॥२९॥

सर्वोपचारैः संपूज्य स्तुतिभिर्या प्रसादिता ।
तां वयं "सारदां देवीं" मातरं सादरं नुमः ॥३०॥

पत्युः प्रयाणेऽपि च या तदाज्ञावशवर्त्तिनी ।
परित्राणाय भक्तानां स्वां तनुं पाञ्चभौतिकीम् ॥३१॥

विससर्ज न, सूक्ष्मेण देहेन समवस्थितम् ।
पतिं सर्वत्र पश्यन्ती तां देवीं प्रणता वयम् ॥३२॥

"विवेकानन्द"-प्रभृति शिष्या ये लोकविश्रुताः ।
यस्याश्चरणजां धूलिं वन्दयित्वा स्वमस्तकैः ॥३३॥

सर्वत्रैवात्र संसारे संप्राप्ता विजयश्रियम् ।
महता भक्तिभावेन तां देवीं "सारदां" नुमः ॥३४॥

"या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः" ॥३५॥

पण्डितश्रीगोपालचन्द्रचक्रवर्तिवेदान्तशास्त्रिणा विरचितः
श्रीसारदास्तवः समाप्तः ॥

—०❀०—

# श्रीरामकृष्णोपदेशद्विशती ❀

## ॥ आत्मज्ञानम् ॥

'कोऽहं' परिचयादेव विद्यान्नारायणं नरः ।
शुद्धचैतन्यमेवैकं 'नाहं' किमपि विद्यते ॥१॥

अपक्वः स्यान्नरः सक्तः पुत्रदारगृहादिषु ।
'नित्यशुद्धोऽहमीशस्य दासोऽहं'मिति पक्वता ॥२॥

संक्षेपतो ज्ञानहेतुमुपदेशं यदीच्छसि ।
"ब्रह्म सत्यं जगन्मिथ्या" 'धारणे'त्यवधारय ॥३॥

यावद्देहस्थितिस्ताव'दहन्ता' नापगच्छति ।
जीवन्मुक्तस्य पुंसस्तु न सा बन्धनकारणम् ॥४॥

'अहं' पदार्थबोधेन 'त्वं' पदार्थोऽपि बुध्यते ।
पुण्येन बुध्यते पापमालोकेन तथा तमः ॥५॥

उपानद्गूढपादेन कण्टकोपरि गम्यते ।
सुखं चरति संसारे तत्त्वज्ञानावृतं मनः ॥६॥

विष्णूपरि स्थितो विष्णुर्विष्णुः खादति विष्णुना ।
कथं हससि रे विष्णो ! सर्वं विष्णुमयं जगत् ॥७॥

साधोः सिद्धस्य शुद्धस्य ध्यानं नित्यमपेक्षितम् ।
अनिशं मार्जनं नो चेत्कलसी मलिना भवेत् ॥८॥

---

❀ उद्बोधनकार्यालयप्रकाशित-स्वामिब्रह्मानन्दसंकलितात् 'श्रीश्रीरामकृष्णोपदेशग्रन्थात्' संगृहीता ।

## ॥ ईश्वरः ॥

नारी जवनिकान्तःस्थाऽन्यं पश्यति न तां जनः ।
स्वान्तस्थो भगवानेवं सर्वद्रष्टा न दृश्यते ॥९॥

चौर्यं दीपप्रकाशे चेद्दीपदोषो न विद्यते ।
असत्कार्यं नरः कुर्यादीशदोषः कथं भवेत् ॥१०॥

माया ब्रह्मद्वयं नास्तीत्येकमेव द्विधोच्यते ।
ब्रह्म कर्तृत्वशून्यं तु, माया कर्तृत्वमाश्रिता ॥११॥

ईश्वरः कल्पवृक्षोऽयं येन भावेन तं नरः ।
उपेयात्तमनुप्राप्य सुखी दुःखी स्वयं भवेत् ॥१२॥

अकर्तुं कर्तुमीशोऽलं अन्यथा कर्तुमीश्वरः ।
जपाकुसुमशाखायां रक्तं श्वेतं सुमद्वयम् ॥१३॥

निराकारात्सदाकारं भिन्नं यद्वज्जलाद्धिमम् ।
हिमरूपं तु साकारं जलरूपं निराकृति ॥१४॥

यत्स्मृतेर्दुःखमोक्षः स्यात्स जातः पार्थसारथिः ।
तथापि चिन्ता पार्थस्यातर्क्यं हि चरितं हरेः ॥१५॥

ईशैकत्वानुभूतिः स्याद्ध्यानमग्नेन चेतसा ।
सविचारेण मनसा तस्यानेकत्वकल्पना ॥१६॥

भक्त्या भवेत्स साकारो ज्ञानेन च निराकृतिः ।
शैत्येऽम्भो हिमतामेति हिममर्केण नीरताम् ॥१७॥

## ॥ माया ॥

अमलं खं, क्षणान्मेघैस्तमश्छन्नं प्रभञ्जनात् ।
मेघा नष्टा, निर्मलं खमीशमायेयमीदृशी ॥१८॥

सत्संगेन विचारेण माया दूरं विलीयते ।
जलपर्णी यथा दूरमेति वंशापसारिता ॥१९॥
माया नाम समासक्तिर्दारापत्यगृहादिषु ।
'हरिः सर्वेषु भूतेषु' भावना तु दयोच्यते ॥२०॥
पंकिलेऽम्भसि सूर्यस्य प्रतिबिम्बं न दृश्यते ।
'अहं ममे'ति भावेन नरो नात्मानमीक्षते ॥२१॥
विषं विषधरस्यास्ये न तद्बाधाकरं भवेत् ।
बाधतेऽन्यं तथेशस्य मायास्मान्मुग्धतां नयेत् ॥२२॥
सर्वप्रकाशकः सूर्योऽप्यभ्रखण्डावृतो भवेत् ।
तथा मायावृतः सर्वव्यापी सच्चित्सुखः प्रभुः ॥२३॥
'भूतेन पीडितोऽहं' चेज्ज्ञानं भूतः पलायते ।
'मायया बाधितोऽहं' चेज्ज्ञानं माया विनश्यति ॥२४॥
विद्याविद्या द्विधा माया सदसत्फलदायिका ।
विवेकादिस्वरूपाद्या कामक्रोधादिकाऽन्तिमा ॥२५॥

## ॥ अवतारः ॥

लोकभारान्यथा स्थानं नयत्यग्निरथेंजिनम् ।
अवतारास्तथा मर्त्यान्मोचयन्ति सहस्रशः ॥२६॥

## ॥ जीवः ॥

उपधानावृतिभिन्नवर्णैकस्तूल आन्तरः ।
नरः कृष्णोऽथ गौरो वा सर्वेष्वेकः परेश्वरः ॥२७॥
जनाः केचिच्छूर्पतुल्याः सारग्रहणतत्पराः ।
चालनीसदृशाः केचिदसारग्रहणे रताः ॥२८॥

गोमयान्तःस्थकीटाय गोमयं रोचतेऽनिशम् ।
सांसारिकेभ्यो जीवेभ्यो रोचन्ते विषयास्तथा ॥२९॥

केचिद् बद्धाः स्वयं जालेऽन्ये जालान्मोक्तुमिच्छवः ।
छिन्नबन्धास्तथा केचिज्जीवा मीना इव त्रिधा ॥३०॥

गृहकार्यपराप्यास्ते सती जारगतान्तरा ।
तथा सांसारिकोऽपि स्याद् भगवद्गतमानसः ॥३१॥

(युग्मम्) शिरोन्यस्तानेककुम्भा नारी काचिद्यथाध्वनि ।
यात्यन्याभिः प्रजल्पन्ती कुम्भदत्तान्तराऽनिशम् ॥३२॥

तद्वद्धर्मस्य पथिको मनो धर्मे निवेशयेत् ।
यदवस्थासु सर्वासु तन्नाधः पतितं भवेत् ॥३३॥

मकरस्य शरीरे चेत्क्षिप्तमस्त्रं वृथा यथा ।
संसारासक्तजीवस्य वृथा धर्मकथा तथा ॥३४॥

सर्वत्राकाशवस्तुल्याः स्वच्छे त्वधिकदीप्तिदाः ।
सर्वस्मिन्भगवानास्ते साधौ तस्याधिका प्रभा ॥३५॥

विषयासक्तचित्तस्य प्रियं न विषयात्परम् ।
मत्स्यगन्धः प्रियो दाश्याः कुसुमानां न सौरभम् ॥३६॥

द्विविधा मक्षिका पक्वव्रणासक्ता मधुप्रिया ।
विषयी ~ भगवद्भक्तिसमासक्तो द्विधा नरः ॥३७॥

शृणोति न स्वयं नाम सहते न परैः श्रुतम् ।
हसति ध्यानकर्तारं मूर्खो निन्दति धार्मिकान् ॥३८॥

मोदकावृतिरेकैव पूरणं विविधं पुनः ।
एकरूपा नराः सर्वे तथापि गुणभिन्नता ॥३९॥

अश्नाति कण्टकान्नित्यमुष्ट्रः कष्टकरानपि ।
तथैव जीवः संसारी विषयानेव सेवते ॥४०॥

'सर्वं देव' इति श्रुत्वा गजमभ्येषि चेत्सर' ।
इत्थमाधोरणवचः प्रमाणीकुरुषे न किम् ? ॥४१॥
व्याघ्रेऽस्तित्वं भगवतस्तत्संगो नोचितः परम् ।
एवमीशः खलेष्वास्ते वासस्तैः सह नोचितः ॥४२॥

## ॥ गुरुः ॥

सवाद्या वरयात्रा वा लोका वाऽऽयान्तु यान्तु च ।
लक्ष्ये बद्धमना व्याधोऽवधूतस्य गुरुः परः ॥४३॥
अन्तेवासी दुर्लभः स्याद् गुरवस्तु सहस्रशः ।
यत्र तत्रोपदेष्टारः क्वचिदादेशपालकः ॥४४॥
यदि तीव्रानुरागः स्याद् भक्तो भजनसाधनः ।
चिन्तितः स्वहिते नो चेत्सद्गुरुं लभते ध्रुवम् ॥४५॥
उपदेशप्रदः कश्चित्कश्चिच्छिष्यशुभेच्छुकः ।
बलादपि हितः कोऽपि गुरवस्त्रिविधा मताः ॥४६॥
मध्वेवालिर्यतो नित्यं मीनं तु बकधीवरौ ॥
पश्यन्ति नान्यत्किमपि ध्यानाचार्यास्त्रयोऽप्यतः ॥४७॥
चञ्चूधृतझषः कश्चिच्छ्येनोऽन्यैरनुधावितः ।
त्यक्तमत्स्यः शान्तिमाप सोऽवधूतगुरुः परः ॥४८॥

## ॥ धर्मः ॥

सच्चित्सुखागमे जाते वृथा शास्त्रविचारणा ।
यथा मधुरसास्वादपर्यन्तमलिगुंजनम् ॥४९॥
खे गृध्रोऽपि प्रयात्युच्चैरामिषासक्तमानसः ।
कामकाञ्चनसक्तस्य शास्त्र-पाठो निरर्थकः ॥५०॥

चेद्वैराग्यविवेकौ न ग्रन्थानां परिशीलनम् ।
केवलं ग्रन्थितुल्यं तद्दम्भाहङ्कारकारणम् ॥५१॥

आत्मबोधो भवेन्नूनमेकेन वचसा गुरोः ।
परं तर्कवितर्काणां शतैरपि न जायते ॥५२॥

तावच्छब्दायते कुण्डी यावत्सा पूर्यतेऽम्भसि ।
पूर्णे पात्रे कुतः शब्दो ज्ञाते तत्त्वे न जल्पनम् ॥५३॥

कत्याम्राः कति वाम्राणि कियन्मूल्यं च कः प्रभुः ।
वृथेदं तत्त्वमास्वादो ब्रह्मास्वादोऽपि तादृशः ॥५४॥

हट्टाद् बहिः स्थितो 'हो हो' शब्दमात्रं शृणोति ना ।
विना धर्म-प्रवेशेन धर्मबोधोऽप्यसम्भवः ॥५५॥

संसारे सर्वमुच्छिष्टं वेदशास्त्रादिकं, पुनः ।
केवलं ब्रह्म नोच्छिष्टं यत्केनापि न वर्णितम् ॥५६॥

अनभिज्ञस्य बालस्य रतेरनुभवः कुतः ।
संसारासक्तचित्तस्य ब्रह्मानन्दो न जायते ॥५७॥

केवलं रटनं व्यर्थं 'शिवोऽहं'मिति निष्फलम् ।
सेव्यसेवकभावेन शिवे न वरमेकता ॥५८॥

## । संसारः साधनं च ॥

क्रीडायां 'चोर-चोरे'ति स्थाणुं स्पृष्ट्वा न चौर्यभाक् ।
पादपद्मं परेशस्य स्पृष्ट्वा बद्धो न जायते ॥५९॥

संसारो बन्धको न स्यात्संल्लग्ने मनसीश्वरे ।
हस्ते नित्यं दत्तचित्ता यथा पृथुककारिणी ॥६०॥

संसारे विद्यमानेऽपि साधको वीरसाधकः ।
मूर्ध्नि भारे स्थिते धीरो यथा दिक्स्वाहितेक्षणः ॥६१॥

हस्तेन वादयन्वाद्यं गायत्यास्येन गायकः ।
कुर्वन्संसारकार्यं त्वं हरिनाम जपं कुरु ॥६२॥

यथा पङ्कगतो मत्स्यः पङ्कलिप्तो न जायते ।
तद्वन्निर्लिप्तभावेन संसारे साधकः स्थितः ॥६३॥

तुलातुल्यं मनोऽस्माकं सवैराग्यं शिवं नमेत् ।
अधो गच्छति संसारे स्यादासक्तियुतं यदि ॥६४॥

गर्तेषु विद्यमानेषु क्षेत्रे न प्रसरेज्जलम् ।
मनो विषयगर्तेषु लग्नं गच्छति नेश्वरम् ॥६५॥

अन्तर्बहिर्यथा पश्येन्नरः काचगृहे स्थितः ।
नरोऽप्यधिगतज्ञानः स्वं जगच्चावलोकते ॥६६॥

मनः पुण्यं मनः पापं ज्ञानमज्ञानमेव च ।
पुण्यं मुक्तं ज्ञानमयं चेल्लग्नं तद्यदीश्वरे ॥६७॥

न क्षतिश्चेज्जले नौका नौकायां चेज्जलं क्षतिः ।
मनो वरं भवजले भवो न मनसि स्थितः ॥६८॥

शुको जल्पेद्धरेर्नाम चीत्कुर्यादोतुना धृतः ।
सुखेच्छुः कुरुते पुण्यं यमाक्रांतस्तु विस्मरेत् ॥६९॥

हस्तयोस्तैलमालिप्य पनसं भंजयेन्नरः ।
संसारपनसं भंक्तुं ज्ञानतैलमपेक्ष्यते ॥७०॥

नरं दशति धर्तारं नरेन्द्रं न दशत्यसौ ।
कथं विवेकमंत्रज्ञं दशेद्भवभुजंगमः ? ॥७१॥

हृदये यस्य यो भावो बहिः स प्रकटीभवेत् ।
साधुसंगेऽपि संसारी करोति विषयस्तुतिम् ॥७२॥

## ॥ साधनस्याधिकारी ॥

देवताराधने योग्यं फलं काकाद्यदूषितम् ।
पवित्रं बालहृदयं सुयोग्यं धर्मसाधने ॥७३॥

बालस्य षोडशकलमर्धमूढस्य पुत्रिणः ।
तदर्धं धनमात्रादिविभक्तं मानसं पुनः ॥७४॥

कण्ठरेखोद्भवं यावच्छक्यं स्याच्छुकपाठनम् ।
न जायते मनो लग्नं वृद्धस्येश्वरसाधने ॥७५॥

जलशून्यस्य पयसः पायसं त्वरितं भवेत् ।
बालो न विषयेच्छावान्संलग्नः क्षिप्रमीश्वरे ॥७६॥

वंशोऽपक्वो नमेत्तूर्णं भग्नश्चेत्पक्वतां गतः ।
बालकः सुखसाध्योऽस्ति वृद्धो ध्यानात्पलायते ॥७७॥

उत्तमं नवनीतं चेत्प्रत्यूषे मथितं दधि ।
बाल्येऽनुरागो यद्यस्ति दृढतामेति स क्रमात् ॥७८॥

अग्निं शुष्कशलाकैका नार्द्राः कुर्युः शतान्यपि ।
एकं वचो मनः शुद्धं सिद्धं कुर्यान्न चान्यथा ॥७९॥

कपेः शिशुरिव ज्ञानी लक्ष्यार्थं स्वयमुद्यतः ।
भक्तो बिडालशिशुवज्जन्मदातृसमाश्रितः ॥८०॥

यथैकः कस्यचिद्भ्राता जनको वाथ मातुलः ।
तथा भक्तोऽपि मधुरदास्यवात्सल्यभाववान् ॥८१॥

यथा भावस्तथा लाभस्तुच्छां सिद्धिं किमिच्छसि ।
ज्ञानादिरत्नमिच्छेस्त्वमीश्वरद्वारमागतः ॥८२॥

आन्तरा दन्तिनां दन्ता बाह्यतः सन्त्यनीक्षिताः ।
तथैव ज्ञानिनो भावो बहिर्ज्ञातुं न शक्यते ॥८३॥
गुप्तव्यक्तप्रभेदेन योगिनो द्विविधा मताः ।
आद्यस्य साधनं गुप्तं बाह्यचिह्नधरोऽपरः ॥८४॥

## ॥ उत्तमभक्तः ॥

यथास्थितः प्रस्तरः स्यान्मृत्तिका गलिताम्भसि ।
आपत्स्वपि स्थिरो भक्तो भीतः साधारणो जनः ॥८५॥
भगवच्चिन्तनाद्येषामविद्यापगता सुखम् ।
संसारे सन्तु किं वा चिदानन्दार्णवेऽथवा ॥८६॥
"येनाहं पीडितः सोऽपि क्षन्तव्यो भवतान्यथा ।
दुःखं ते सर्वगस्ये"त्थं प्रह्लादेनाश्रितः प्रभुः ॥८७॥

## ॥ साधनविघ्नः ॥

संसारासक्तितः साधुर्भवेन्निष्फलसाधनः ।
सच्छिद्राज्जलपात्राद्धि निर्गच्छत्यखिलं जलम् ॥८८॥
वालुकामिश्रितात्खण्डात् खण्डमत्ति पिपीलिका ।
संसारे सारमादत्तेऽसारं साधुस्त्यजत्यसौ ॥८९॥
मूषकार्थं बिडालोऽस्तु बिडालार्थं च गौस्ततः ।
गोचरो, भवनं, भृत्या, इति साधोर्विडम्बना ॥९०॥
प्रसन्नादीश्वरात्साधोः सिद्धिप्राप्त्यर्थमर्थनम् ।
अमृतं संपरित्यज्य पुरीषेक्षणलालसा ! ॥९१॥
"मत्तोऽपीभ्यतरः कश्चि"न्मत्वा स्वाहंकृतिं त्यजेत् ।
खद्योताद्धं ततोऽप्यब्जो तस्मात्सूर्योऽधिकप्रभः ॥९२॥

आदर्शे मलिने जाते मुखं स्पष्टं न दृश्यते ।
मनः शुद्धं न कर्तव्यं सुवर्णमलदूषितम् ।।९३।।

भक्तस्य ज्ञानिनो वापि नाभीष्टा सिद्धिकामना ।
ईश्वरं प्रति भावं नः सिद्धिरेकापि नाशयेत् ।९४।।
वासना लेशमात्रापि भगवल्लाभबाधिका ।
सूत्रं तु ग्रंथिसंयुक्तं नार्हं सूचीप्रवेशने ।।९५।।
सरस्यल्पजलं चेत्ताच्छनैरुपरितः पिबेत् ।
अन्यथाम्भो दूषितं स्यात्साधनापि शनैर्भवेत् ।।९६।।
धर्मचर्चां न कुर्वन्ति हसन्त्यन्यैः कृता यदि ।
निन्दन्ति धार्मिकान्मूर्खास्तेभ्यस्तिष्ठन्ति दूरतः ।।९७।।
ईशकल्पद्रुमं प्राप्तुं सुखं भोगं धनं त्यजेत् ।
नो चेद् व्याघ्रः शोकतापरोगरूपो विनाशयेत् ।।९८।।
स्वप्नेऽपि यस्य नासक्तिर्भोगे वापि धनार्जने ।
त्यागी स एव संन्यासी, साधनं नश्यतेऽन्यथा ।।९९।।
जनशून्येऽपि युवतिं दृष्ट्वा 'मात'रिति ब्रुवन् ।
त्यागी भवेत्सभायां तु 'मातः' सर्वोऽपि भाषते ।।१००।।
तैलाभ्यक्तं न लेखार्हं स्यात्पत्रं कठिनीं विना ।
जीवो न कामतैलाक्तसाधनार्होऽविरागतः ।।१०१।।
भूतं हरेत्सर्षपैर्यो भूतं तस्यैव बाधकम् ।
साधने विषयासक्तिस्तत्साधनविनाशकृत् ।।१०२।।
साधनं सफलं यस्मिन्मनसैकीभवन्मुखम् ।
मुखे 'त्वं देव सर्वस्वं' विषया मनसि स्थिताः ।।१०३।।
प्रयत्नेनापि महताऽहंकारो नोपहन्यते ।
छिन्नेऽपि मस्तके छागकबन्धं नृत्यतत्परम् ।।१०४।।
प्रायोऽशक्या द्रुतं लब्धुमभिमानस्य शून्यता ।
पलाण्डुगन्धः पात्रस्य क्षालनेऽपि न नश्यति ।।१०५।।

## ॥ साधनसहायः ॥

प्राप्यापि मानुषं जन्म दुर्लभं यतते न यः ।
सच्चिदानन्दलाभार्थं वृथा तस्येह जीवनम् ॥१०६॥
भगवन्नाम्नि विश्वासः श्रेष्ठं साधनमुच्यते ।
चित्तशुद्ध्या नरो येन सच्चिदानन्दमश्नुते ॥१०७॥
गुरोर्वचसि विश्वासस्तथा निष्कपटं मनः ।
स्वभावस्य च सारल्यमीशलाभाय कल्पते ॥१०८॥
व्यवहारं प्राड्विवाका वैद्याश्च गदमौषधम् ।
साधुभक्तास्तथा दृष्टाः स्मारयन्तीशभावनाम् ॥१०९॥
अहेराखुबिले वासः स्वं न निर्मात्यसौ बिलम् ।
साधुरप्यनिकेतः स्याच्छ्रयत्यन्यगृहं क्वचित् ॥११०॥
संसारमदमत्तानां साधुसंगतिरौषधम् ।
व्रीहिधावनपानीयं यथा मदविनाशकम् ॥१११॥
'तिथिं वारं च नक्षत्रं नाहं जानामि किंचन ।
रामपादाम्बुजं जाने' हनूमानिदमब्रवीत् ॥११२॥
सच्चिदानन्दसम्प्राप्तिर्निष्ठां भक्तिं विना कुतः ।
इष्टनिष्ठः पुमान्साधुः पतिनिष्ठा यथा सती ॥११३॥
वासो जगति कर्तव्यः कृत्वैकान्ते स्थिरं मनः ।
दृष्ट्वा श्रुत्वाऽन्यथा तत्तच्चंचलं तत्प्रजायते ॥११४॥
क्षीरं नीरेण मिलितमेकरूपं प्रजायते ।
नवनीतं परं नीरे पृथगेवावभासते ॥११५॥

## ॥ साधनाध्यवसायः ॥

मा भूच्चिन्ता न लाभश्चेदीश्वरस्यैकसाधनात् ।
रत्नं रत्नाकराल्लभ्यं कथं मज्जनमात्रतः ॥११६॥

प्राप्य सिंधौ स्वातिबिंदुं यात्यधः शुक्तिकीटकः ।
लब्धमंत्रो गुरोर्मग्नः साधकः साधनार्णवे ॥११७॥
यथाभ्यर्थ्या नैकभृत्याः पूर्वं नृपतिदर्शनात् ।
ईशप्राप्तौ तथा कार्यं सत्सङ्गभजनादिकम् ॥११८॥
अल्पसिद्ध्यादिकं प्राप्य संतोषो न वरं तव ।
क्रमात्काष्ठहरः प्राप्नोत् काष्ठ-चन्दन-हाटकम् ॥११९॥
क्षेपणं हस्तपादस्य चिरं तरणपूर्वतः ।
ततुं ब्रह्मसमुद्रेऽपि पतनोत्थानसंततिः ॥१२०॥
धीवरः सावधानोऽस्ति मत्स्यार्थं बलिशादिमान् ।
सधैर्यभक्तिर्भक्तोऽपि यतेताप्तुं शिवं शनैः ॥१२१॥

## ॥ व्याकुलता ॥

कृपणोऽर्थे, सती पत्यौ, विषयी विषयेषु च ।
सक्ता नित्यं दत्तचित्तो भव त्वं तद्वदीश्वरे ॥१२२॥
त्यक्तक्रीडो रुदन्बालः स्वमातुः क्रोडमाश्रितः ।
शान्तो भवेत्तथा त्यक्तकामस्त्वं परमाश्रय ॥१२३॥
'विषयाप्तिर्न पुत्राप्तिर्नेत्थमश्रुपराः शतम् ।
नैकोऽपीश्वरलाभार्थमश्रुबिन्दुं सृजेन्नरः ॥१२४॥
अतिव्याकुलितप्राणो जलस्याभ्यन्तरे भवेत् ।
भगवल्लाभसिद्ध्यर्थं भक्तोऽपि व्याकुलोऽनिशम् ॥१२५॥
मातुः पणान्समाप्नोति बालः क्रन्दनताडनैः ।
सोत्कण्ठक्रन्दनैः प्राप्यं जगतीमातृदर्शनम् ॥१२६॥
आर्तः सन्नश्रुपूर्णाक्षो वदेन्मातर्दिनं गतम् ।
नाद्यापि दर्शनं प्राप्त'मिति व्याकुलचित्तता ॥१२७॥

"सरसीजलमिच्छामि गांगं तु मलिनं जलम्" ।
मूर्खस्य वचनं 'धर्मो गौणोऽयमयमुत्तमः' ॥१२८॥

## ॥ भक्तिभावः ॥

रत्नानि शतशो लभ्यान्यापणे लक्षरूपकैः ।
कृष्णभक्तिः कुतो लभ्या जातिमानधनैरपि ? ॥१२९॥

'फोटो' द्रव्यविशेषाक्ते काचखण्डे यथा पतेत् ।
भक्तियुक्ते मनस्येवं प्रतिबिम्बं हरेर्विशेत् ॥१३०॥

अहल्योक्तवती "राम जन्म शूकरयोनिषु
वरं, त्वत्पादपद्मे चेदचला भक्तिभावना ॥१३१॥

चेद्भावगद्गदो भूत्वा प्रभुमाकारयेन्नरः ।
तत्क्षणं दर्शनं तस्य न शुष्काह्वानमात्रतः ॥१३२॥

सन्ध्यादिकं तावदिष्टं भक्तिप्रेमान्वितं मनः ।
यावन्नाश्रुयुतं चक्षुर्न च रोमाञ्चिता तनुः ॥१३३॥

विषया विनिवर्तन्ते स्वयमेवेशभक्तितः ।
शर्करापेयमास्वाद्य गुडपेयं कथं स्मरेत् ? ॥१३४॥

"गृहिणी त्वं गृहं चाहं रथी त्वं चाप्यहं रथः ।
त्वन्नियुक्तोऽखिलं कुर्या"मिति भक्तस्य भावना ॥१३५॥

प्रविश्य नाशयेत्पूर्णं तृणच्छन्नं गजो गृहम् ।
भावहस्ती प्रविश्यान्तर्देहागारं विनाशयेत् ! ॥१३६॥

आदौ भावस्ततः प्रेम ततो भावसमाधिता ।
कीर्तने क्रमशो बाह्यविस्मृत्या मूकतान्तिमा ॥१३७॥

न केवलं जगद्याति विस्मृतिं जपतो हरिम् ।
देहोऽपि विस्मृतिं याति यस्तस्यातिप्रियो भवेत् ॥१३८॥

## ॥ ध्यानम् ॥

लोकदृष्ट्या सुप्ततुल्यो योऽन्तर्मशकवारिणि ।
ध्यानस्थो जनदृग्वर्जं ध्यानी सात्त्विक उच्यते ॥१३९॥

ध्यानावस्थानमध्येऽस्य निद्रेवायाति कुत्रचित् ।
योगनिद्रोच्यते यत्र भगवद्रूपदर्शनम् ॥१४०॥

यत्र स्याद्धेययतादात्म्यं तदेव ध्यानमुच्यते ।
तदानीं नानुभूयेत पक्षिणां शिरसि स्थितिम् ॥१४१॥

## ॥ साधनं आहारश्च ॥

मांसतुल्यं हविष्यान्नं तेन चेन्नेशदर्शनम् ।
हविष्यान्नसमं मांसं लाभस्तेनेश्वरस्य चेत् ॥१४२॥

## ॥ भगवत्कृपा ॥

तमश्छन्नं गृहं दीपशलाकैका प्रकाशयेत् ।
तद्वदीशकृपा जन्मान्तरपापं विनाशयेत् ॥१४३॥

चन्दनीस्युः ससारा ये वृक्षा मलयमारुतैः ।
भगवत्कृपयाप्येवं पूर्णतां यान्ति साधवः ॥१४४॥

पङ्कलिप्ताङ्गबालानां पितरौ शुद्धिचिन्तकौ ।
संसारमलिनाङ्गानामीश्वरः शुद्धिकारणम् ॥१४५॥

## ॥ सिद्धावस्था ॥

स्पर्शस्पर्शोदयो हेम पंके वा संकरेऽस्तु वा ।
सच्चित्सुखी सुखी तद्वत्संसारे वा वनेऽथवा ॥१४६॥

खड्गः स्पर्शमणेः स्पर्शात्सौवर्णः स्यादहिंसकः ।
जातेशचरणस्पर्शो नासत्कार्यपरो नरः ॥१४७॥

सिद्धं यथालुवृन्ताकं कोमलं जायते भृशम् ।
कोमलप्रकृतिर्याति सिद्धोऽहंकारशून्यताम् ॥१४८॥

स्वप्नसिद्धा मन्त्रसिद्धा हठात्सिद्धास्तथापरे ।
नित्यसिद्धास्तथा केचिदनेके सिद्धसाधकाः ॥१४९॥

कारण्डवो जले तिष्ठञ्जलास्पृष्टतनुः स्वयम् ।
जीवन्मुक्तोऽपि संसारे निर्लेपो वसति ध्रुवम् ॥१५०॥

नौः कयापि दिशा गच्छेदुदक्कम्पाससूचिका ।
ईश्वरे स्थिरचित्तस्य भयं संसारिणः कुतः ? ॥१५१॥

जले चिरं स्थितोऽप्यग्निदृषदग्निप्रदो द्रुतम् ।
विकाररहितः सिद्धोऽप्यसत्सङ्गस्थितश्चिरम् ॥१५२॥

तादृशीं सिद्धिमाप्नोति भावना यस्य यादृशी ।
कीटो भ्रमरतामेति सच्चिद्ध्यानात्तथेशताम् ॥१५३॥

कटिवस्त्रं कचिच्छीर्षे क्वचित्कुक्षौ च धारयेत् ।
उन्मत्तो; नित्यसिद्धस्य बाह्याचारोऽपि तादृशः ॥१५४॥

पतिते नारिकेलादिपत्रे चिह्नं विलोक्यते ।
एवं दानाशनस्वप्ना गलितायामहङ्कृतौ ॥१५५॥

यद्वदाम्रफलं पक्वं स्वयमेव पतेद्भुवि ।
आत्माहंता ज्ञानलाभेऽदृश्यतां याति सत्वरम् ॥१५६॥

चोरः कश्चिद् हन्तुमिच्छत्यन्यः पथिकबन्धनम् ।
अपरो बन्धनच्छेदं त्रिगुणाः सन्ति मानवाः ॥१५७॥

शुष्कपत्रं यथाहंता शून्यं नीयेत वायुना ।
यत्र कुत्रापि दिग्भागे मुक्तावस्थापि तादृशी ॥१५८॥

धान्यं सिद्धं यदा याति नोङ्कुरोद्भेदहेतुताम् ।
सिद्धानामपि संसारे पुनर्जन्म न विद्यते ॥१५९॥

संसारे सारमादाय सिद्धोऽसारं परित्यजेत् ।
हंसो हि क्षीरमादत्ते तन्मिश्रं वर्जयेज्जलम् ॥१६०॥

अज्ञानं, ज्ञानमन्ते च सच्चिदानन्द आप्यते ।
कण्टकं कण्टकोत्खातं कृत्वा त्याज्यं तदोभयम् ॥१६१॥

साक्षात्कारो यस्य जातः सोऽकार्यं कथमाचरेत् ।
नरो नृत्यकलाभिज्ञस्तालशून्यं न नृत्यति ॥१६२॥

कचः समाधिभङ्गे तत्पित्रा पृष्टः 'किमीक्षसे ।'
"ईक्षे ब्रह्ममयं सर्वं नान्यत्किमपि" सोऽब्रवीत् ॥१६३॥

## ॥ सर्वधर्मसमन्वयः ॥

एत्यैकतो 'ग्यास'कान्तिर्भिन्नरूपैर्ज्वलेत्पुरे ।
भिन्नदेशीयजातीया आयान्त्येकेश्वरात्तथा ॥१६४॥

वंशनिश्रेणिसोपानैर्गृहोपरि तले जनाः ।
यान्त्येवमीशलाभार्थमुपायानामनेकता ॥१६५॥

एक एवेश्वरः किन्तु भावनामान्यनेकशः ।
भावेन येन नाम्ना वा त्वमिच्छेस्तेन लभ्यते ॥१६६॥

यः कश्चिद्येन केनापि नाम्ना रूपेण वा स्मरेत् ।
सच्चित्सुखः स एवैको भगवान्प्राप्यते ध्रुवम् ॥१६७॥

"मतेषु मार्गा भिद्यन्ते" गम्य एको भवेन्नृणाम् ।
यथेष्टस्थानमायान्ति पदप्लवरथैर्जनाः ॥१६८॥

वेत्ति माता कः किमिच्छेत्तुल्यस्नेहाऽपि सूनुषु ।
विभिन्नसाधकानीशः प्रीणयेद्भिन्नसाधनैः ॥१६९॥

भूमिरेका वृथा वादो 'ममेयं भूरिदं गृहम् ।'
धर्म एकः परं 'श्रेष्ठो ममैवेति विवादभूः ॥१७०॥

कूपमण्डूकवद्भावः परधर्मविनिन्दकः ।
सद्भक्तोऽभेदभावः सन्नित्यं साधनतत्परः ॥१७१॥

नाना मतानि हिन्दूनां किं श्रेयस्तेषु चेच्छृणु ।
विश्वासस्तव यत्रैव; विश्वासे वसतीश्वरः ॥१७२॥

एको देवो भिन्नभावैः साधकैः समुपास्यते ।
मत्स्यः सिद्धो यथा 'सूप-चर्चडी' भाजनादिषु ॥१७३॥

एकमेव यथा तोयं 'जलं पानी च वॉटरम् ।'
भाषाभेदोऽस्तु सर्वत्र वस्तुभेदो न विद्यते ॥१७४॥

येन केनापि भावेन भगवन्नामचिन्तनम् ।
कृतं श्रेयस्करं, स्वादुर्मोदकः सर्वतोदिशम् ॥१७५॥

## ॥ कर्मफलम् ॥

पारदेन समं पापं नोदरे पच्यते मनाक् ।
पापं फलति सर्वत्र पारदो बहिरेति च ॥१७६॥
तन्तुकीटस्तन्तुबद्धो बहिर्गच्छेत्प्रजापतिः ।
संसारी कर्मभिर्बद्धो वैराग्येणैव मुच्यते ॥१७७॥

## ॥ युगधर्मः ॥

सायं प्रातर्हरेर्नाम ग्राह्यं स्याद्धस्ततालकैः ।
हस्ततालैर्देहवृक्षाद् डयन्तेऽज्ञानपक्षिणः ॥१७८॥

अधुनान्नगतप्राणे कलौ दुर्बलमानसे ।
श्रेष्ठं संसाररोगार्थं हरिनामैकमौषधम् ॥१७९॥

जानन्नजानन् भ्रान्तो वा तन्नामोच्चारमात्रतः ।
सफलो जायते जीवो नोपाये विद्यते क्रमः ॥१८०॥

सुधाकुण्डे स्वयं मग्नो हठादन्येन पातितः ।
अमृतत्वमुभौ यातो हरिनाम्नि तथा बलम् ॥१८१॥

नारदोक्तो भक्तिमार्गः कलावेकः सहायकः ।
आसीदन्ययुगेष्वत्र तपस्यादि सुदुष्करम् ॥१८२॥

## ॥ प्रचारः ॥

धर्मप्रचारकवचः श्रुतं दूरे न चान्तिके ।
आलोको प्रसरेद् दूरं परं दीपतले तमः ॥१८३॥

प्रज्वाल्य कश्चित्काष्ठानि जाड्येऽनेकसहायकः ।
तपःशुद्धस्तथा ज्ञानी बहूनामुपकारकः ॥१८४॥

आत्मनो धर्मलाभाय कथामात्रमलं भवेत् ।
अन्योपदेशे शास्त्राणां सूक्ष्माध्ययनमिष्यते ॥१८५॥

महापुरुषसान्निध्ये स्थिता नेक्षन्त आदरात् ।
प्रेक्षका दूरतः शंसन्त्यैन्द्रजालिकलाघवम् ॥१८६॥

दूरतः शाल्मलीबीजं न वृक्षस्य तले पतेत् ।
सुदूरादनुगम्यन्ते तथा धर्मप्रचारकाः ॥१८७॥

## ॥ विविधम् ॥

ज्ञानदीपे ज्वलत्येव शुद्धे हृदयमन्दिरे ।
अविद्या विद्यमानापि सुचिरं नश्यति क्षणात् ॥१८८॥

भोगार्थपाशनाशेन नरो नारायणं स्मरेत् ।
भोगार्थावन्तरायौ हि परेशप्राप्तिवर्त्मनि ॥१८९॥

परदोषगुणाख्याने वृथा यः समयं नयेत् ।
कथं तस्य भवेच्छक्यं स्वात्मतत्त्वविचारणम् ॥१९०॥

अहंकारतमश्छन्नदृष्टिः पश्येत् कथं परम् ।
तस्मात्सर्वप्रयत्नेन स्वाहंभावं विनाशयेत् ॥१९१॥

अन्योन्यकलहो व्यर्थः सर्वे धर्मा धरातले ।
एकमेवेश्वरं यान्ति समुद्रं सरितो यथा ॥१९२॥

यावदेव जरा दूरं तावदात्महितो भवेः ।
यमपाशपरीतस्त्वं वार्धक्ये किं करिष्यसि ॥१९३॥

सगुणो निर्गुणो वापि परमात्मायमव्ययः ।
साकारोऽपि निराकारः प्रोच्यते सर्वशक्तिमान् ॥१९४॥

रसामवतरत्येष करुणावरुणालयः ।
नरान्संसारसंसक्तानुद्धरिष्यन्सहस्रशः ॥१९५॥

द्वयोर्भेद इवाभाति जीवात्मपरमात्मनोः ।
मायोपाधिवशान्नूनं जलबुद्‌बुदभेदवत् ॥१९६॥

केचित्पुत्रार्थलाभार्थं धनलाभाय केचन ।
इतस्ततः प्रधावन्ति न केऽप्यक्षयसम्पदे ॥१९७॥

ईश्वरार्पणबुद्ध्यैव कर्तव्याः सकलाः क्रियाः ।
निर्लेपो हि नरस्तेन पद्मपत्रं जले यथा ॥१९८॥

क्षणभङ्गुरसत्ताका काचकङ्कणवत्तनूः ।
आत्मा परं चिरस्थायी यथा सौवर्णकंकणम् ॥१९९॥

नाम्भो गंगाजलं, धूलिर्नच वृन्दावने रजः ।
जगन्नाथप्रसादोऽपि नान्नं ब्रह्मैव तत् त्रयम् ॥२००॥

साहित्याचार्य एम्. ए. श्रीभण्डारकरोपाह्वेन
त्र्यम्बकशर्मणा संस्कृतश्लोकेष्वनूदिता
'श्रीरामकृष्णोपदेशद्विशती' समाप्ता ।

## प्रणामः

शैवा यं 'शिव'मामनन्ति 'जननीकाली'ति शक्तिप्रिया,
'रामः' 'कृष्ण' इतीह वैष्णवजना बौद्धाश्च बुद्धाख्यया ।
ख्रैस्ताः 'स्वर्गपिते'ति यत्र निरता 'अल्ले'-ति मौहम्मदा,
भूमेत्यद्वयवादिनोऽवतु स वः श्रीरामकृष्णः स्वयम् ॥

## ॥ फलश्रुतिः ॥

'वेदमूर्ति-चरितं' पठन्ति ये,
श्रावयन्ति सुजनान्समादरात् ।
सन्तरन्ति सततं भवाम्बुधिं,
ते भवन्ति खलु मुक्तिभाजनम् ॥

इति 'वेदमूर्तिश्रीरामकृष्णः' ग्रन्थः समाप्तः ।

ॐ श्रीरामकृष्णसारदादेव्यर्पणमस्तु ।
शान्तिः शान्तिः शान्तिः ।

# 'वेदमूर्तिश्रीरामकृष्णः' इत्यस्य शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| आदित्यवार्णं | आदित्यवर्णं | ३ | ६ |
| शिक्षियितु | शिक्षयितु | ,, | २३ |
| बमूव | बभूव | ६ | ६ |
| तरंगै | तरंगैः | ७ | १ |
| स्वामी महोदय | स्वामिमहोदय | ,, | ,, |
| युगः समायातः | युगं समायातं | ,, | १७ |
| सभ्मवं | सम्भवं | ८ | ११ |
| प्राहवन् | प्रावहन् | ,, | २२ |
| प्रकाश्ये | प्राकाश्ये | ,, | ६ |
| स्वरै | स्वरैः | ,, | २२ |
| बमूव | बभूव | १० | ६ |
| संबमूव | संबभूव | १२ | १८ |
| वाहवोत्थं | वाडवोत्थं | १३ | ८ |
| मवसानतां | मवसानं | १४ | २२ |
| प्रमावतः | प्रभावतः | ,, | २४ |
| विविघा | विविधाः | ,, | २६ |
| विविन्न | विभिन्न | १५ | ३ |
| वर्तुन्ते | वर्तन्ते | १६ | ५ |
| बमूव | बभूव | १७ | ५ |
| पैत्रिकं | पैतृकं ( मूले ) | २ | २ |
| पारिवारिकी | पारिवारिकीं | ,, | ६ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| नियमामन्तरैव | नियममन्तरैव | ,, | १० |
| साश्रूणी सम्वृत्ते | साश्रुणी संवृत्ते | ५ | १२ |
| दर्शनान्तरं | दर्शनानन्तरं | ,, | २२ |
| श्वसुर | श्वशुर | ६ | ४ |
| भङ्त्वा | भङ्क्त्वा | ,, | १५ |
| यथाशक्यनु | यथाशक्त्यनु | ७ | १६ |
| तिस्रोऽ | तिस्रोऽ | ८ | १३ |
| किमेतसत्सम्भ | क्रिमेतत्सम्भ | ९ | ५ |
| निर्देक्ष्यते | निर्देक्ष्येते | ११ | २५ |
| वलम्ब्यैद्दश्यो | वलम्ब्येद्दश्यो | १२ | ६ |
| नाभिलाषया | नाभिलाषेण | ,, | १२ |
| गौरङ्ग | गौराङ्ग | १२ | १६ |
| खुदीराम | खुदिराम | १६ | ३ |
| मभत् | मभूत् | २० | १२ |
| श्रीरामकृष्णे वा | श्रीरामकृष्णे | २१ | २३ |
| कृष्णायणो | कृष्णायनो | २२ | १४ |
| समर्चनान्तरं | समर्चनानन्तरं | २३ | २ |
| किञ्चित्कालं | कञ्चित्कालं | २५ | १५ |
| कुमारस्तम्भितो | कुमारः स्तम्भितो | २५ | १६ |
| राणी नाम | राणीनाम | २६ | १७ |
| शूद्राणी | शूद्रा | २६ | १ |
| ब्राह्मणो | ब्राह्मणो | ,, | ८ |
| पितृश्वसृ- | पितृष्वसृ- | ३२ | ११ |
| दिवसादारभ्यः | दिवसादारभ्य | ३३ | १ |
| उववेशनं | उपवेशनं | ,, | २ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| श्रीराकृष्णेन | श्रीरामकृष्णेन | ३६ | १६ |
| प्रतिष्ठितानभमनाऽभवत् | प्रतिष्ठिता नाभवत् | ३७ | ११ |
| राशीनर्पयत् | राशीनार्पयत् | ३९ | २५ |
| संगृहीतु | संग्रहीतु | ४१ | ६ |
| निरूपमम् | निरुपमम् | ,, | १९ |
| दर्शनान्तरं | दर्शनानन्तरं | ४७ | २ |
| समुपतस्थौ | समुपतस्थे | ४९ | १२ |
| व्योकुलो | व्याकुलो | ,, | १५ |
| नैवेद्यो न्यवेदयत् | नैवेद्यं न्यवेद्यत | ५० | ८ |
| बवृधे | ववृधे | ५१ | २ |
| निगृहीतुं | निग्रहीतुं | ,, | १८ |
| न्ययुंजत् | न्ययुनक् | ५४ | ३ |
| कर्षितो | कर्शितो | ,, | ४ |
| स्वमुखः | स्वमुखतः | ५५ | १९ |
| स एवं | स एव | ६० | ३ |
| किंचिद्दृष्टम् | किंचिद् दृष्टम् | ,, | १६ |
| समर्पयत् | समार्पयत् | ६१ | ६ |
| सर्वेस्वपि | सर्वेष्वपि | ,, | २२ |
| गृहे | गृहं | ६३ | ३ |
| रूप्यकाणि | रूप्यकाणि | ६५ | १६ |
| श्वसुरपुर | श्वशुरपुर | ६७ | २ |
| तयैव | सैव | ७० | २ |
| अकथित्वैव | अकथयित्वैव | ,, | १४ |
| कठिनी | कठिनो | ,, | २६ |
| सुनिर्णीतिम् | सुनिर्णीतम् | ७१ | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| व्यतीतनि | व्यतीतानि | ७२ | १२ |
| न्यश्चिनोत् | निरचिनोत् | ,, | १३ |
| लौकिका कया | लौकिका कया | ,, | १५ |
| राकृष्णोपरि | रामकृष्णोपरि | ,, | १८ |
| उपसोर्गो | उपसर्गो | ७४ | ६ |
| पुमान्समति | पुमांसमति | ,, | २६ |
| समुपतस्थु | समुपतस्थिरे | ७५ | २० |
| शिक्षायैव | शिक्षणायैव | ७७ | ४ |
| अचिन्तयश्च | अचिन्तयच्च | ८० | ८ |
| पर्यमणत् | पर्यणमत् | ८४ | ४ |
| आब्रह्म | आब्रह्म | ,, | ८ |
| दक्षिणेश्चरे | दक्षिणेश्वरे | ,, | १४ |
| तोतातुरी | तोतापुरी | ८५ | १२ |
| समनुष्टाय | समनुष्ठाय | ८६ | ११ |
| प्रतियते स्म | प्रतीयते स्म | ८७ | १० |
| भावनां | भावानां | ९० | १४ |
| जलामेव | जलमेव | ९१ | १५ |
| ब्राह्मण | ब्रह्मण | ९४ | २ |
| व्यतीय | व्यतीयुः | ९५ | ८ |
| सम्मृता | सम्भृता | ९६ | १८ |
| भूमत् | मभूत् | ,, | २६ |
| सर्वखण्डब्रह्मा- | सर्वाखण्डब्रह्मा | ९९ | २१ |
| वातश्चक्रे | वातश्चक्रे | १०२ | १ |
| द्वन्द्वोऽपि | द्वन्द्वमपि | ,, | ८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| सामनिनाय | समानिनाय | १०८ | १५ |
| अह्वानं | आह्वानं | १०६ | ७ |
| महात्म्य- | माहात्म्य- | ११० | ८ |
| मशीर्वा | माशीर्वा | ,, | १८ |
| ससाधीयते | समाधीयते | ११६ | १४ |
| ताऽक्रीयत | ताऽक्रियत | ११७ | २ |
| निरोगां | नीरोगां | ,, | १८ |
| दक्षिणेर | दक्षिणेश्वर | ,, | २३ |
| देवित्वे | देवीत्वे | १२० | २५ |
| गृकार्य | गृहकार्य | ,, | ,, |
| स्त्रिभिश्च | स्त्रीभिश्च | १२३ | ८ |
| समाधावतिष्ठते | समाधाववतिष्ठते | १२३ | १७ |
| मयाऽचिन्त्यत् | मयाऽचिन्त्यत | ,, | १९ |
| समाहूयतः | समाहूतः | ,, | २१ |
| सङ्गिन्यौ | सङ्गिनौ | १२४ | १४ |
| पूजनसमाप्त | पूजनं समाप्त | १२६ | ५ |
| नाशक्वन् | नाशक्नुवन् | १३१ | १७ |
| एवमुश्चै | एवमुच्चै | ,, | २१ |
| प्राकाशत् | प्राकाशयत् | १३२ | ८ |
| नुरूपरि | नुरूपपरि | ,, | १५ |
| मेववििधं | मेवंविधं | ,, | २३ |
| मुद्घाटयत् | मुदघाटयत् | १३३ | ३ |
| पञ्चरवट्याः | पञ्चवटयाः | ,, | ६ |
| मकर्षीत् | मकार्षीत् | १४० | ३ |
| चानुतिष्टति | चानुतिष्ठति | १४१ | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अन्तङ्ग | अन्तरङ्ग | " | ८ |
| एतादृशाः | एतादृशीः | १६६ | ६ |
| मन्त्री- | मन्त्रो- | १६१ | ४ |
| विशिष्ठेने | विशिष्टेन | २०३ | १२ |
| लीनममभवत् | लीनमभवत् | २०५ | २० |
| परिधेष्टय | परिवेष्टय | २२० | १६ |
| त्तुर्कं | कर्त्तुं | २२६ | २५ |
| सर्वः | सर्वं | २३६ | १२ |
| बबभूवुः | बभूवुः | २४५ | २ |
| निन्द्रा | निद्रा | २४७ | १० |
| श्रत्वा | श्रुत्वा | २५४ | १३ |
| विरचितम् | विरचिता | २५७ | २१ |
| स्रष्ट हिं | स्रष्टुर्हि | २५६ | २३ |
| त्वदीयांघ्रिद्वन्द्व | त्वदीयांघ्रिद्वन्द्व | २६२ | १८ |
| नोङ्कुरो- | नाङ्कुरो | २६४ | २३ |
| डयन्तेऽ | डीयन्तेऽ | २६६ | १८ |
| बुद्धयैव | बुद्ध्यैव | २६८ | १५ |

एतदतिरिक्ततया सीसकाक्षरयोजयितृ-मुद्रणयन्त्राघातेन च भूयस्यो मात्रास्त्रुटिताः संलक्ष्यन्ते। प्रबुद्धाः पाठकमहाभागाः स्वयं साभ्यूह्य ता अशुद्धीः अपाकृत्य पठिष्यन्तीति अस्माकं दृढीयान् प्रत्ययः। द्वितीये संस्करणे सविशेषमवधाय दूरीकरिष्यन्त इमास्त्रुटयः।

—:*:—